हस्तिपकत्वेनोपस्थितिः । विशेषणविशेष्ययोरन्यतर धर्मस्यान्यतरत्रारोपे विशेषणत्वादिकमेव बीजम् । अतएव शिखीध्वस्त इत्यादौ विशिष्टस्य ध्वंसेऽन्वयः कारकविशेषणे च गुणादौ कारकत्वम् ।

यद्वा संबन्धग्रहविशेष्यत्वस्य संबन्धिभाननियामकत्ववत्तदवच्छेदकत्वस्य धर्मभाननियामकत्वं, यथा हस्तिपकादौ हस्त्यादिसंबन्धग्रहस्य हस्तिपकत्वादिनोपस्थितौ नियामकत्वम् । अतएव दण्डाद्घटत्वेन घटस्य घटाच्च दण्डत्वेन दण्डस्योपस्थितिः । एतेन शक्यतावच्छेदकेऽपि शक्तिरित्यपास्तम् । फलाभावात् । यथा च शक्तिग्रहे शक्यतावच्छेदकानुगतीकृतसकलव्यक्तिभानमेवं शाब्दबोधेऽपि तदनुगतसकलव्यक्तिभानं। न ब्राह्मणमित्यादावेकवचनं तु शक्यतावच्छेदकगतसंख्यां विशेष्ये आरोप्य प्रयोगान्नानुपपन्नम् ।

शक्यतावच्छेदकत्वं शक्यनिष्ठा या विशेष्यता तदवच्छेदकताख्यप्रकारतया भासमानत्वम् । घटादिपदशक्तिग्रहेच घटत्वादेरेव तत्त्वं नद्रव्यत्वादेरिति न तेभ्यो द्रव्यत्वादिप्रकारको बोधः । द्रव्यादिपदाच्च न

---

नन्वेवं कचिन्नोपस्थितिरितिकिमर्थमुभयत्र शक्तिरतआहातएवेति । तत्र तदारोपे तस्य बीजत्वादेवेत्यर्थः गुणादौ शोभनत्वादौ, विशेष्ये एव शक्तिर्नोभयत्रेति ततो लाघवादाह यद्वेति । सर्वसंमतत्वाद्दृष्टांतमाहसंबंधेति । तत्विशेष्यत्वं । पक्षांतराश्रयणबीजमाहैतेनेति । अस्यार्थमाह फलेति । उक्तरीत्यातज्ज्ञानसंभवात तदेव विशदयति यथाचेति घटत्वादेः शाब्दबोधप्रकारतायां तदंशे तत्पदशक्यतावच्छेदकत्वस्यैव प्रयोजकत्वेनादोषादिति भावः ।

नन्वेवं न ब्राह्मणमित्याद्यसिद्धिर्विशेष्यनानात्वादत आह न ब्राह्मणमिति । प्रयोगात् प्रयुज्यमानत्वात् । नन्वेवमप्यत्र पक्षे प्रागुक्तशंक्य-

घटत्वादिप्रकारको बोधः। अत एवाकाशपदस्य शब्दाश्रयत्वे शक्त्यभावेऽपि ततस्तद्रूपेण बोधः। तद्विशिष्टविषयकसंबन्धग्रहस्यैव तद्विशिष्टविषयकज्ञानहेतुत्वादिति मणिकृतोक्तम्।

वस्तुतस्तुआकाशत्वमखण्डोपाधिरूपं तत्तत्पदरूपं वा जातिरूपं वा शक्यतावच्छेदकम्। तेनाकाशः शब्दाश्रय इति प्रयोगोपपत्तिः। तदुक्तं सरूपसूत्रे भाष्ये—द्रव्याभिधानं व्याडिरिति। एतत्पक्षे जातेरुपलक्षणत्वेनाश्रयणात्परित्यक्तभेदं द्रव्यमात्रं विशिष्टं जातियुक्तं शब्देनोच्यते इति कैयटः। श्येनचितिं चिन्वीतेत्यादौ श्येनाकारां चितिमिति मध्यमपदलोपिसमास इति न तत्रानुपपत्तिः। अत्र पक्षे योयः शब्देनोच्यते स सर्वोऽपि द्रव्यधर्मयुक्तः, काश्चिन्मुख्यतद्धर्मयुक्तः। काश्चिदुपचरितद्धर्मयुक्तः। तदुक्तम्।

---

तावच्छेदकत्वं ब्रुवन्मतआह शक्येति तत्त्वित्यर्थः। शक्तिग्रहे तन्निष्ठप्रकारतानिरूपितेति शेषः। ततोन साऽतिरिक्तेत्याहताख्यप्रेति। अतिप्रसंगो नेत्याहघटादीति। दाच्चदादपि। अत्रपरसंमति माहातएवेति। उक्तरीत्याव्यक्तिमात्रशक्त्यङ्गीकारादेवेत्यर्थः। तद्रूपेण शब्दाश्रयत्वरूपेण। तद्विशिष्टेति शब्दाश्रयत्वविशिष्टेत्यर्थः। तत्रांशिकायुक्तमाह वस्तुत इति। परमतेनाहाखंडोपेति तदनंगीकारात्संज्ञाशब्दत्वेनाह तत्पदेति त्रयीपक्षेसिद्धांतमाह जातीति। नन्वेवं चतुर्थः सोपि पक्षोस्त्वत आहतेनेति। परमते तु तदनुपपत्तिः स्पष्टैव एवं यद्वेत्यादिनोक्तशुद्धव्यक्तिपक्षे भाष्यसंमतिमाह तदुक्तमिति॥ कैयटसंमतमपीदमित्याहैतदिति। जातेर्द्रव्येपि पदार्थेऽनभिधेयाया इत्यादिः मात्रपदेनजातिव्यवच्छेदः विशिष्टेत्यस्य वस्तुत इत्यादिः अनेन विजातीयव्यक्तिनिरासः नन्वत्रपक्षे श्येनव्यक्तीनां चितेरसंभवात् षष्ठीसमासानुपपत्तिरतआह श्येनेति। ननुव्यक्तिपक्षे व्याडिसंमतिरयुक्ता गुणादिव्यक्तेर्द्रव्यत्वाभावात् अत आहात्रपक्षे इति। गु-

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षित इति ॥

इदं तदिति सर्वनामपरामर्शयोग्यं द्रव्यमित्यर्थः। अत इति यत्प्रतीयते तद्द्रव्यमिति निरुक्तोक्तेः ।

लक्षणान्तरमाह । भेद्यत्वेनेति । किंचिन्निरूपितविशेष्यत्वेनेत्यर्थः । विवक्षितइत्यनेन शब्दार्थस्येदं लक्षणमित्युक्तम् । एवंच जात्यादेरपि विशेष्यत्वविवक्षायां द्रव्यत्वमेव । तिङन्तार्थक्रियाया अपि किमादिभिः परामर्शात्सुखमित्यादिभिर्विशेष्यत्वाच्च सिद्धान्ते संख्यया विशेषणाच्च द्रव्यत्वमेव। विप्रतिषिद्धंचेत्यादौ तु सामर्थ्यात्तन्त्रान्तरप्रसिद्धद्रव्यग्रहणमिति हेलाराजः ।

अन्ये तु जातिरेव शक्योभयत्र शक्तिकल्पने व्यक्तौ शक्तेर्जातौ तदवच्छेदकत्वस्य वा कल्पने गौरवात् । युक्त्यन्तरमपि शक्तिवादान्ते उक्तम् । व्यक्तिभानं तु शक्तिग्रहविशेष्यत्वात्, तव तत्रावच्छेदकत्वेन जातिभानवत् । शक्तिग्रहस्तु गौर्गोपदशक्य इत्येव । सच स्वर्गोध्वस्त इतिवत् नागृहीतविशेषणा बुद्धिर्विशेष्ये उपजायत इति न्यायसहकृतलाघवेन जातिमात्रे ।

---

द्व्यक्तिपक्षे इत्यर्थः । तत्र विशेषमाह कश्चिदिति । तदुक्तंहरिणाहेलाराजीयमाहेदमिति । अतइतिसर्वनामोपलक्षणं, शब्दार्थस्य तज्जन्यप्रतीतिविषयस्य। एवंचतस्यलक्षणान्तरत्वेच।प्रसंगा दाह तिङन्तेति। पूर्वलक्षणाक्रांतत्वमाह किमेति। द्वितीयाक्रांततामाह सुखेति। सिद्धलक्षणाक्रान्तत्वमप्याहसिद्धान्ते इति । भूषणादिमतनिरासायेदं । नन्वस्य द्रव्यस्य विप्रेत्यादौ ग्रहणे तदानर्थक्यमतआहविप्रेति। गुणाश्रयोद्रव्यमित्यादावित्यर्थः । लाघवादाहान्येत्विति । आद्येदोषमाहोभयत्रेति । द्वितीयेतमाहव्यक्ताविति । नन्वेवं कथं व्यक्तिभानमत आहव्यक्तीति ।

यद्वा जातिविशेष्यक एव शक्तिग्रहो गौर्गोपदशक्य इति जातावेव शक्तावप्येवमेवाभिलापात् । जातेराश्रयावियोगेऽपि तस्याः केवलायाः शब्दवाच्यत्वम् । यथामुखस्य स्वस्थानावियोगेऽपि जलादौ दृश्यमानस्य मुखपदबोध्यत्वं तद्वत् । शक्यतावच्छेदकं तु शब्दगता जातिः । शब्दार्थयोस्तादात्म्येन तद्गतजात्योरपि तत्त्वात् ।

यद्वा जातिगतो धर्मस्तथा । विनापि संकेतविषयतां सामान्येन संबन्धनियमात् स्वसहचरिता व्यक्तिर्जातिं विशिनष्टि । यथा चक्षुरादीनि रूपादिज्ञानागृहीतान्यपि चाक्षुषयामीत्यनुव्यवसायेन गृह्यन्ते तद्वदिति हरिग्रन्थे स्पष्टम् ।

मास्तु वा व्यक्तेर्भानमित्याहुः तदुक्तं तत्रैव भाष्ये । आकृतिं वाजप्यायन इति व्यक्तेरभानेऽप्यानयनादिक्रिया तत्र केवलायामसम्भवन्ती व्यक्तिसाहित्येन नि-

---

प्रागुक्तदृष्टांतप्रकारमाह शक्तीति । प्रागुक्तदार्ष्टांतिकप्रकारमाह तवेति । द्वितीयमतवादिन इत्यर्थः । नन्वत्र पक्षे शक्तिग्रहेगोत्वत्वादिप्रवेशे गौरवमत आह शक्तीति । नन्वेवं कथं तन्मात्रेऽत आह जातावेवेति मीमांसकमते इति भावः । ननुनित्यसंबंधे केवले वाच्यत्वं न दृष्टमिति प्रथमपक्षासंगतिरतआह जातेरिति । नन्वत्र पक्षे शक्यतावच्छेदकांकिमत आह शक्यतेति । ननुतस्याः कथंतद्वृत्तित्वमत आह शब्दार्थयोरिति शब्दव्यक्तिरूपयोरित्यर्थः । तत्त्वात् तादात्म्यात् एवमपि तादात्म्यं न वृत्तिनियामकमत आह यद्वेति । जातौ जातिर्नेति परमतं नासिद्धांत इति प्रागुक्तं । नन्वत्र पक्षे उक्तरीत्या सम्भवात्कथं व्यक्तिभानमिति द्वितीयपक्षासंगतिरत आह विनापीति । शक्तिग्रहे ऽभानेपि शाब्दबोधे भानमिति भावः । मतांतरमाह मा स्तुवेति । बोधोपीति भावः । अत्र शुद्धव्यक्तिपक्षेभाष्यसंमतिमाह तदुक्तमिति ।

ष्पाद्यते। तदुक्तम्—सरूपसूत्रे ताद्धितार्थेतिसूत्रेच भाष्ये। आकृतावारम्भणादीनां संभवो नास्तीतिकृत्वा तत्सहचरिते द्रव्ये भविष्यतीति। यथा अग्निरानीयतामित्युक्ते केवलस्याग्नेरानयनासंभवादचोदितमपिपात्रमानीयते एतदेवाग्नेरानयनं यत्पात्रस्थस्य तथाकृतावारम्भणादीनि चोद्यमानानि सामर्थ्यात्साहचर्याद्द्रव्यमभिनिविशन्ते। सर्व एवाकृतेः क्रियायोगोऽन्तर्भावितद्रव्यद्वारकः संपद्यते इति कैयटः। साहचर्यं च संबन्धः। आकृतेरारम्भणादिभिः शाब्दोन्वयस्तु बोधे बाधस्याप्रतिबन्धकत्वादारोपेण वोपपाद्यः। द्रव्यगतालिङ्गसंख्यादिवत्। तद्गतभेदारोपेण गौश्च गौश्चेति समुच्चयोपपत्तिः। कदाचिदेकेनैव शब्देन द्रव्यगतद्वित्वादिमत्त्वेन प्रतीतिरित्याद्यूह्यम्।

हरिश्चाह—व्यक्तौ कार्याणि संसृष्टा जातिस्तु प्रतिपद्यते इति केचित्।

---

तत्रैव सूत्रे एव। तत्रपक्षेमास्तुचेति पक्षे आह व्यक्तेरिति। अपिनातदन्यसर्वभानपक्षसमुच्चयः। तत्र व्यक्तौ। साहित्यं प्रयोजककर्तृ तत्र मानमाह। तदुक्तमिति। आरंभणं क्रमो बन्धनं वाकैयटमाह यथेति। साक्षाद्वन्हिस्पर्शस्य धर्मशास्त्रनिषिद्धत्वादाहैतदेवेति। नकेवलमत्रैवेदमित्याह सर्व एवेति। अन्यत्र सिद्धांतितं साहचर्यमत्रनेत्याह साहेति एतत्पक्षोपपत्तिस्वयमाहाकृतेरिति। परमतेप्याहारोपेणेति व्यक्तिपक्षवान्नुक्तदोषांतरं परिहरति द्रव्यगतेति। अन्यथा भेदाधिष्ठाने समुच्चयस्यतत्रपक्षेऽभावात्तदा भावापतिः। प्रत्यर्थमित्यस्यापतिरित्याशयेनाह कदाचिदिति। अतएव दाराइत्यादौ नदोषः एकशेषस्तु नानार्थानुरोधेनावश्यकस्तदाहेत्याद्यूह्यमिति। एवमुक्तेर्थे हरिसंमतिमप्याह हरिश्चेति हरिरपीत्यर्थः। व्यक्तावित्यस्य चोद्यमानानीति शेषः। इतिकेचिदितिपाठः केचिदित्यनेनोक्तार्थे सूचि-

वस्तुतस्तु संबन्धात्स्मृतव्यक्तेर्भानमित्येव न्याय्यम् । अतएव सरूपसूत्रादिस्थभाष्येणैकवाक्यता । तस्याश्चैतद्वादे विशेषणतया भानमिति वक्ष्यते । गोत्वादिपदे जातिरेव धर्मी तद्वृत्तिधर्मे च गोत्वादिपदानां शक्तिरतस्तत्र न कदापि गोव्यक्तिविशेष्यको बोधः । नापि तद्विषया क्रिया यतः तैर्गवाद्युपलक्षितगोत्वादौ इतरपदार्थसंबन्धबोधनं । प्रकृत्यर्थस्य च(१)प्रायेणोपलक्षणत्वमेव । अतएवौपगवमानयेत्युक्ते नोपगोरानयनं उपलक्षणत्वं चोपलक्ष्यविषयक्रियाऽविषयत्वमेव । सहचरितां व्यक्तिं जातिर्विशिनष्टि इतिपक्षे जातिप्राधान्ये एकवचनं, तरुशैलमित्यादौ समाहारश्च तात्पर्यग्राहकः । पटस्य शुक्ल इत्यादौ व्यक्तेः प्राधान्यं जातेर्विशेषणता शुक्लः पटः घटः पटो नेत्यादौ च । शाबलेयस्य गौर्घटो नित्य इत्याद्यनभिधानान्न, एवमेव घटो न द्रव्यमिति न ।

---

तामरुचिं प्रकाशयन्सिद्धांतमाह वस्तुतस्त्विवति एतेन प्रागुक्तसकलमतव्यवच्छेदः । प्रागुक्ततद्भाष्यस्येदमेव तात्पर्यमित्याहातएवेति । तस्याः स्मृतव्यक्तेः । एतद्वादे जातिपक्षे । अत्र पक्षे विशेषमाह गोत्वादीति । कदाचित्कस्मिन्नपि मते । तत्र गोव्यक्तिरूपं । अतइत्यस्यार्थमाह यत इति । नकेवलमिदमत्रैवेत्याह प्रकृत्यर्थेति । यज्ञोपवीतिनमित्यादौ तदभावादाहप्रायेणेति । उपलक्षणत्वं च न काकादिवदित्याहोपेति । सिंहावलोकनन्यायेन प्रसङ्गाच्छुद्धव्यक्तिपक्षविशेषआहसहेति । प्रागुक्तजातिपक्षविशेषप्रतिद्वंद्व्ययं पक्षविशेषः । जातीति नब्राह्मणं तरुशैलमित्यादावितिभावः । इदमपि बाधाविषयं नसार्वत्रिकमित्याह पटस्येति । प्रागुक्तरीत्या तथैव तात्पर्यादाह घटः पट इतिव्यक्तेरित्याद्यनुषंगः । नन्वेवमतिप्रसङ्गोपीत्यतआह शाबेति । एव-

---

( १ ) प्रकृत्यर्थस्य च प्रत्ययार्थे प्रायेणेतिपाठान्तरम् ।

यद्वा जातिव्यक्त्योरव्यतिरेकाज्जातेरेव प्राधान्येऽपि न वाहाद्यन्वयानुपपत्तिः। अत एव गवादिशब्दार्थानामाश्रयगतलिङ्गादिग्राहिता। तदप्युक्तम्—तद्धितार्थेतिसूत्रे भाष्येऽथवाऽव्यतिरेकाद्द्रव्याकृत्योर्द्रव्यानयनमिति। गोत्वपदजन्यबोधे गोत्वे तु भेदप्रधानतादात्म्येन व्यक्तेर्विशेषणत्वमिति न गोत्वं वाहयेत्यादिप्रयोगः। एवमेव पटः शुक्ल इत्यादौ गुणिगतालिङ्गादिग्राहिता शुक्लादिशब्दानाम्। पटस्य शुक्ल इत्यत्र तु न। भेदस्यैव तत्र सम्बन्धत्वात्।

यदा जातिव्यक्त्योर्भेद एव विवक्षितो वाहाद्यसमभिव्याहारो जातेः प्राधान्यंच तदा भावप्रधानो निर्देश इति व्यवहारः। सच यथाभिधानमिति नातिप्रसङ्गः। तदुक्तं जात्याख्यायामितिसूत्रे भाष्ये जातिशब्देन जातिरप्यभिधीयते द्रव्यमपि। कथं पुनर्ज्ञायते द्रव्यमपीति। एवं हि कश्चिन्महति गोमण्डले आसीनं गोपालकं पृच्छति अस्त्यत्र काञ्चिद्गां पश्यसीति, सपश्यति पश्यति चायं गाः पृच्छतिच नू-

---

मेवअनभिधानादेव। प्रागुक्तसर्वपक्षतो लाघवादाह यद्वेति। एवेनोभयव्यवच्छेदः अपिना पक्षांतरसमुच्चयः। अतएव तयोरव्यतिरेकादेव। अर्थानां जात्यादीनां। अत्रापि भाष्यसंमतिमाह तदप्युक्तमिति नन्वेवं गोत्वं वाहयेत्यादिप्रयोगापत्तिरतआह गोत्वेति। आदिसंग्राह्यं विशदयति एवमेवेति। तद्वद्गुणगुणिनोरव्यतिरेकेणेत्यर्थः। शब्दानां तदर्थाना मतिप्रसङ्गमेवं सति प्राप्तं निराचष्टे पटस्येति। एवेन तादात्म्यव्यवच्छेदः।

नन्वत्राभेदैकपक्षे भावप्रधानो निर्देश इतिव्यवहारासंगतिरतआह यदेति। अनतिप्रसंगायाह सचेति। यदेत्याद्युक्ते भाष्यसंमति-

नमस्य द्रव्यं विवक्षितमिति। तद्यदा द्रव्याभिधानं तदा बहुवचनं यदा सामान्याभिधानं तदैकवचनमिति। जातिशब्देनेत्यस्य जातिशक्तिग्रहविषयेणेत्यर्थः। द्रव्याभिधानमित्यस्य द्रव्याभेदेनाभिधानं विशेष्यतया द्रव्याभिधानं चार्थः। सामान्याभिधानमित्यस्य द्रव्याद्भेदेन विशेष्यतया तदभिधानमित्यर्थः।

यत्तु बहुषु बहुवचनमितिसूत्रे भाष्ये उक्तं यदा गुणो गुणिविशेष्यको भवति तदा नान्तरेण भावप्रत्ययं गुणप्रधानो निर्देशः। यदा तु गुणिना गुणो व्यपदिश्यते पटस्य शुक्ल इति तदान्तरेणापि भावप्रत्ययं गुणप्रधानो भवति निर्देश इति। तत्तु भावप्रधानतातात्पर्यग्राहकमात्रोपलक्षणम्।

तथा सरूपसूत्रेऽपि जातेः पदार्थत्वे तस्याप्येकत्वाद्द्विवचनाद्यसिद्धिमाशङ्क्य व्यक्तिवादे च नब्राह्मणं हन्यादित्यादावेकं ब्राह्मण महत्वा कृती स्यादित्याशङ्क्योक्तं नह्याकृतिपदार्थस्य द्रव्यं न पदार्थो द्रव्य-

---

माह तदुक्तमिति। जातीति तत्वेन प्रसिद्धेन गवादिशब्देनेत्यर्थः आद्ये लाघवादिमानस्य स्पष्टत्वादाह कथमिति। दर्शनं सत्तायां कर्तृ। स गोपालकः। पश्यति विचारयति। इतिर्भाष्यसमाप्तौ अविरोधायाह जातीति यथाकथंचिदिति भावः। यद्वेतिमतेनाह द्रव्याभेदेनेति आद्यमतेनाह विशेष्येति। विशेषणत्वेत्वतदूनिष्ठत्वादाह विशेष्यतयेति।

ननु बहुष्विति सूत्रे गुणगुणिभावमात्रस्थले तथोक्तं नान्यत्रेति कथं स ान्यतः प्रागुक्तमत आह यत्त्विति। मात्रं कार्त्स्न्ये। उक्तेर्थे भाष्यांतरसंमतिमप्याह तथेति आशंक्योक्तमित्यत्रान्वयः आदिनानं-

दार्थस्य वाऽऽकृतिर्नपदार्थं उभयोरुभयं पदार्थः कस्यचित् किंचिद्गुणभूतं किंचित्प्रधानभूतमिति । यथा पचते इत्यादौ क्रियाप्राधान्येऽपि साधनसंख्याकृतो वचनभेद एवमाकृतिप्राधान्येऽपि द्रव्यसंख्याकृत इत्यदोष इति कैयटः ।

मतुप्सूत्रेऽपि कैयटः आश्रयगतैकत्व(१)विशिष्टा जातिः कार्ये आश्रीयते यथा पशुना यजेतेत्यादाविति । पदार्थ इत्यस्य पदजन्यबोधविषय इत्यर्थः । गुणभूतमित्यादेः स्वारसिकतयेतिशेषः । कदाचित्तस्यापि प्राधान्यं तु तात्पर्यग्राहकसापेक्षमिति तदाशयः । द्रव्यप्राधान्ये च क्वचिज्जातिगतसंख्यया वचनं यथा-नब्राह्मणमित्यादौ तज्जात्याक्रान्तसकलब्राह्मणानां बोध इति बोध्यम् । इदं चाभेदेन व्यक्तेर्विशेषणत्वे द्रष्टव्यम् । भेदेन विशेषणत्वे तु जात्याख्यायामिति सूत्रोक्तरीत्यैकवचनमेव । व्यक्तेः प्रकारत्वं च निरवच्छिन्नाया एव । विशेष्यभूतजात्या चानुगमः । नहि प्रका-

---

त्यव्यभिचारादि ( आकृतीत्यादावतइर्नातिठन्मते इतिशेषः सर्वत्र ) कैयटोक्तमाद्यदोषवारणमाह । यथेति । संख्याकृतस्तदारोपकृतः । प्रसङ्गान्मध्येस्पष्टकैयटांतरमाह मतुबिति स्वगतैकत्वसंख्याश्रयणे दोषतादवस्थ्यमेवातआहाश्रयेति एवंच तत्प्रयुक्तकार्यं स्फुटमेवोक्तं । पदार्थइत्यस्य पदशक्यइत्यर्थनिरासायाह पदार्थ इति । अनियमादाह स्वारेति । अतएव प्रकृतोपयुक्तमाह कदाचिदिति ।

नन्वेवं द्रव्यप्राधान्ये नब्राह्मणमित्यादौ दोषोतआह द्रव्येति तत्प्रयुक्तेतिभावः । अनतिप्रसंगायाह क्वचिदिति यथाऽभिधानमिति भावः। अन्योपि ततोऽविशेष इत्याह तज्जात्येति। व्यवस्थामाहेदं चेति।

---

( १ ) एकत्वसंख्याविशिष्टेति पाठान्तरम् ।

रीभूतमेवानुगमकमित्यत्र मानमस्ति ।

यत्तु समर्थसूत्रे भाष्यकैयटयोरुक्तम् वीरः पुरुष इत्यादौ द्रव्यवादे तस्य भेदाभावान्न भिन्नार्थानामेकार्थीभावरूपसामर्थ्यमित्याशङ्क्यावाच्यमपि द्रव्यं द्वारीकृत्य यथा विशेषणविशेष्यभावो जातिवादे एवं द्रव्यवादेऽवाच्यगुणकृतभेदमाश्रित्य तदुपपत्तिरिति । तत्रावाच्यमित्यस्य शक्त्यविषय इत्यर्थः । शुद्ध द्रव्यवादस्त्वनुपदमेवोपपादयिष्यते घटो घट इत्यादौ विशेष्यविशेषणभावाप्रतीतेः सोऽपि भेदसापेक्ष इति तदाशयः । जात्याकृतिव्यक्तयस्तु पदार्थ इति गौतमीये सूत्रे तद्वार्तिककारोऽप्याह । तुशब्दो विशेषणार्थः । किं विशेष्यते प्रधानोपसर्जनभावस्यानियमेन पदार्थत्वं, यदा भेदविवक्षा विशेषगतिश्च तदा व्यक्तिः पदार्थो (१)न जात्याकृती । यथा गौस्तिष्ठति गौर्गच्छतीति तयोः स्थानादीनामसम्भवात्सा पदार्थः यदा पुनरभेदो विवक्षितः सामान्यगतिश्च तदा जातिः पदार्थ इतरे विशेषणं यथा गौर्न पदा स्प्रष्टव्य इति ।

ननु जात्यतिरिक्तपदार्थस्य स्वरूपतोऽभानेन तस्यविशेषत्वे तत्र कथं व्यक्तेः प्रकारताऽत आह व्यक्तेरिति । सनियमो न सिद्धांतः इदं च पक्षांतरेप्यावश्यकमन्येषामिति भावः । नन्वेवमननुगमापत्तिरतआह विशेष्येति । तदेव ध्वनयन्नाह नहीति । उक्तेर्थे भाष्यांतराविरोधं स्पष्टार्थमाह यत्त्विति तस्यार्थानामिति एकीभवनरूपेतिशेषः गुणेति वीरत्वादीत्यर्थः । इत्यर्थइति नतुबोधाविषय इत्यर्थो येन विरोधः स्यादितिभावः । ननु शुद्धद्रव्यवादाशयकमेवेदमस्तु कुतः सरूपसूत्रभाष्यैकवाक्यताऽत आह शुद्धेति । दृष्टांताशयमाह घटइति ।

(१) अङ्ग जात्याकृती इति तद्वार्तिकेपाठः ।

अत्र सर्वव्यक्तिलाभायैकवचनोपपत्तयेच जातिः प्रधानं तस्याः साक्षात्स्पर्शासम्भवात् व्यक्तयभेदविवक्षा बोध्या। पिष्टकमय्यो गाव इत्यत्राकृतिः वैयाकरणनयेऽप्याकृतिः शक्येति स्फोटवादे निरूपितम्।

केचित्तु पिष्टकमय्यो गाव इत्यत्र शब्दज्ञानानुपाति वस्तुशून्यं विकल्पाख्यं ज्ञानं पातञ्जलोक्तं वस्तुशून्यमित्यस्य बाह्यवस्तुशून्यमित्यर्थः। बाधज्ञानाबाध्यत्वाच्च मिथ्याज्ञानादस्य भेदः। बाधज्ञानसत्वेऽपि शब्दव्यवहारस्य तज्जन्यज्ञानस्य च जायमानत्वात्। तदुक्तम्—

अत्यन्तासत्यपि त्वर्थे ज्ञानंशब्दःकरोतिहि।

इत्याहुः।

अपरे तु धर्ममुपलक्षणीकृत्य शक्तिग्रहाद्वस्तुनस्तत्तद्धर्माकृतिविशिष्टा व्यक्तिर्बुध्यते नतु तद्धर्मप्रकारेणेति व्यक्तिवादः। प्रकृष्टप्रकाशश्चन्द्र इति वाक्य-

---

सोपिविशेषणभावोपि। सरूपसूत्रभाष्योक्तं परसंमतमपीत्याह जात्येति। कार उद्योतकारः जात्यादेर्विमतत्वादाह प्रधानेपेति। तदेवाह यदेति तयोः जात्याकृत्योः। सान्यक्तिः पुनस्त्वर्थे। नन्वत्रापि जातेः स्पर्शासंभवाद्व्यक्ते रेव तत्वमुचितमत आहात्रेति।

नन्वस्योक्तरीत्या तत्रापि उपपत्तिरत आहैकेति। नचैवमपि भेदविवक्षैव कुतो नेत्याह तस्या इति। आकृतिरिति पदार्थ इत्यादेरनुषंगः। इदं परोक्तं सिद्धांतसंमतमपीत्याह। वैयेति बौद्धस्य तस्य सत्त्वादाह वस्त्विति। नन्वेवं मिथ्याज्ञानादस्य को भेदोऽत आह बाधेति। चस्त्वर्थे तत्रहेतुमाह बाधेति अत्यन्तेति। व्याख्यातं उक्तवक्ष्यमाणरीत्या निर्वाहे इदमयुक्तमतएवगौतमसूत्रविरोधोनेत्यरुचिः केचिदित्यनेन सूचिता तामेव प्रकाशयन्प्रतिज्ञातमाहापरेत्विति नैवंपदस्थलेएवापितुवाक्यस्थले ऽपीत्याह

तोऽपि वस्तुनस्तत्तद्विशेषणविशिष्टव्यक्तेः स्वरूपेणोपस्थितिः यथा यः शुक्लवासाः स देवदत्त इत्यादौ शुक्लवासउपलक्षिते शक्तिग्रहेऽपि देवदत्तपदजन्यबोधे न तद्भानं तथा जात्यादेरपि। एतदेव जात्यादेरुपलक्षणत्वं यत्स्वाश्रयाणां सर्वेषां स्वरूपतः शक्तिग्रहविषयत्वं सम्पाद्य स्वयंशक्तिग्रहाविषयो बोधाविषयश्च। यथा काकवन्तो देवदत्तगृहा इत्यत्र काकः स्वोपलक्षितोत्तृणत्वादिना तद्गृहमितरेभ्यो व्यावर्तयति। तथा जातिर्व्यक्तीरुपस्थाप्य स्वोपलक्षिताभिस्ताभिः शक्तिमितरेभ्यो व्यावर्तयति। घटत्वाश्रयो यः स घटपदशक्य इति शक्तिग्रहस्तत्पदेन विशेष्यमात्रपरामर्शः। घटो घटपदशक्य इत्यस्याप्ययमेवार्थः। एतदेवाभिप्रेत्य ध्रुवमपाये इति सूत्रे धावतः पतित इत्यादावध्रुवत्वमाशङ्क्य सतोऽप्यविवक्षया समाहितम्। सरणोपलक्षितं द्रव्यमात्रमत्र विवक्षितमिति कैयटः। तदुक्तम्।

आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम्।
शब्दः सुकरसम्बन्धो नच व्यभिचरिष्यतीति।
हरिरप्याह—अध्रुवेण निमित्तेन देवदत्तो गृहं यथा।

---

प्रकृष्टेति अयमेवाखंडार्थबोधः। उक्तमेवोपपादयति यथेति नन्वसद्व्यावर्तकत्वरूपं नोपलक्षणत्वं जात्यादेरत आहैतदेवेति। एतावताऽसत्वं प्रतिपाद्य व्यावर्त्तकत्वमाह यथेति। तांत्रिकायुक्तेरसांगत्यंध्वनन्नाह काकेति। आदिनावेदिकापुंडरीकादि एवंचाजातेः शक्तावुपलक्षणत्वं सिद्धं। अत्रपक्षे प्रोक्तप्रकारासंभवादाह घटत्वेति। सर्वनाम्नामितिनियमादाह तत्पदेनेति। तस्यापि संग्रहमाह घट इति। अत्र भाष्यसंमतिमाहैतदेवेति। आशंक्येत्यनेन वस्तुतोध्रुवत्वमेवेति सूचितं मात्रमवधा-

गृहीतं गृहशब्देन शुद्धमेवाभिधीयते इति ॥

शुद्धमेव नतु उपलक्षणीभूतकाकविशिष्टमित्यर्थः। तथाऽसत्योपाध्युपलक्षितं सत्यमुपाध्यनादरेणैव शब्दैरभिधीयते इति हेलाराजः। न ब्राह्मणमित्यादौ ब्राह्मणत्वोपलक्षितत्वस्य सर्वव्यक्तिषु सत्त्वान्न दोषः।

यद्वा रूपसामान्यात्सर्वव्यक्तिषु हननिषेधादिति तदुक्तम्। अइउण् सूत्रे भाष्ये रूपसामान्याद्वा सिद्धम्। बालस्याद्यशक्तिग्रहोऽपि ईदृशो गोपदवाच्य इति। अत्रापि पक्षे शक्तिग्रहे भासमानोपलक्षकरूपेण द्रव्यभेदमाश्रित्य वीरपुरुष इत्यादौ समासः। वीरपदेनापुरुषस्याप्युपस्थितया तयोर्न पर्यायता तद्बोध्यव्यक्तिमात्रबोधकत्वं हि पर्यायत्वमिति वदन्ति। अयमपि पक्षः समर्थसूत्रे भाष्ये स्पष्ट इति समासवादे निरूपयिष्यते।

---

रणे। तदुक्तंभट्टैररुणाधिकरणे। गृहत्वेनाभिधानादाह शुद्धमेवेति हरिन्यूनतां निराचष्टे तथेति। अतएवप्रकृतसंगतिरस्य

ननु अत्रपक्षे न ब्राह्मणमित्यादौ कागतिरतआह नब्राह्मेति। नन्वेवं कथंनियतैकवचनमतआह यद्वेति। वार्तिकार्थस्तत एव बोध्यः नन्वत्र पक्षे कथमाद्यशक्तिग्रहः नहि तदा तस्य तत्र तदुपलक्षणत्वादिग्रहोऽतआह बालस्येति।नन्वेवमपि अत्रपक्षे समासो न स्यादिति दोषएवातआहात्रापीति काव्यप्रकाशाद्युक्तदोषमुद्धरति वीरेति मात्रं कात्स्न्यैवधारणे च अस्यापि भाष्यारूढत्वमाहायमपीति।

भूषणकाराद्युक्तिं खण्डयति यत्त्विति उभयत्रेति। अयंभावःउभयत्रैका शक्तिः अन्यथा जातौ वाहाद्यन्वयानुपपत्तिः। नचसाक्षात्संबंधेन जातौ तद्बाधेपि परंपरया तदन्वयोपगमान्नदोषः गौर्जातित्यादौविशेष्यभूते गोत्वेऽन्वयितावच्छेदकतया गोत्वत्वादिभानापत्तेः जातेरपि प्रकारतयैव स्वरूपतोभानमितिनियमात् एवं च व्यक्तिशक्तिरावश्य-

यत्तु जातिपक्षेऽपि गवादिपदानामुभयत्र शक्तिः । शक्तिग्रहकार्यकारणभावे च जातिप्रकारकत्वस्यैव निवेशो नतु व्यक्तिविशेष्यकत्वस्य निवेशः । अतएव व्यक्त्यंशे कुब्जाशक्तिस्तदंशे तज्ज्ञानानपेक्षणादेतावतैव जातौ शक्तिरिति व्यवहार इति तदपि न । गौरवात् ।

किञ्च सामान्यलक्षणाखण्डनायायं प्रकारस्तच्चाशक्यं, कार्यतावच्छेदककोटौ विशेष्यांशानिवेशे गोत्वेनाश्वादिबोधापत्तेः । नच प्रकारताविशेष एव निवेश्यते इति वाच्यम् । तस्य गोनिष्ठविशेष्यतानिरूपितेति शब्देनैव बोधनीयतया दुर्ज्ञेयत्वात् । तन्निवेशे तु गोव्यक्त्यन्तरबोधो न स्यात् । तन्निष्ठविशेष्यतायां तान्निरूपकत्वाभावात् ।

---

का यद्यपिजातेर्विशेष्यतयापि तथाभाने बाधकाभावस्तथापि सर्वत्रैवं कल्पनापेक्षया व्यक्तावपि शक्तिकल्पनैव लघीयसीति । एवं व्यक्तिशक्तावस्माकं न वैमत्यं किंतु व्यक्तिशक्तिभानहेतुतायामेव । जातिविशिष्टव्यक्तिबोधकत्वमिति नतु व्यक्तिविषयकत्वनिवेशो गौरवादत एव जातिशक्तगोत्वादिपदान्न व्यक्तिबोधः । तत्र जातिप्रकारकशक्तिग्रहाभावात् अत एव व्यक्त्यंशे कुब्जा शक्तिरितिगीयते तदंशेतज्ज्ञानानपेक्षणात् यथान्वयांशे शक्तिसत्त्वेऽपि तद्विषयकत्वं बोधजनकतायां नावच्छेदकमिति नान्वयो वाच्यताव्यवहारभाक् तथा व्यक्त्यंशे तत्सत्त्वेऽपि तद्विषयकत्वं बोधजनकतायां नावच्छेदकमिति नव्यक्तौ वाच्यताव्यवहारः । गोत्वविषयकत्वस्यैव च निवेशाद्गोत्वादेर्वाच्यताव्यवहारभाक्त्वमिति तदाह शक्तिग्रहेति । ननूक्तरीत्या गौरवं तुल्यमत आह किंचेति । तच्च तत्खंडनं हि । ननु तत्र किंविशेष्यांशनिवेश उत न तत्रांत्ये आह कार्यतेति बोधापत्तिरितिपाठः पत्तेरितिपाठे ह्यर्थस्यैवकथनं । दुर्ज्ञेयेति तन्निवेशं विनेत्यादिः । द्वितीयपक्षे आह तन्निवेशे त्विति प्रागुक्तसिद्धांतरीतिमाह ।

यदि तु विशेष्यांशे विशेष्यतायाः प्रकारातिरिक्तानवच्छिन्नतया निवेशात्तत्र न दोष इति विभाव्यते तदा वृथायं प्रयासः। किञ्च घटत्वावच्छिन्नं सर्वं प्रति दण्डकारणताग्रहो मदुक्तरीत्यैव सुलभो न भवदुक्तरीत्येत्यलम्।

यत्तु कुत्सित इति सूत्रे भाष्ये उक्तं स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतमिति तस्यायमर्थः। स्वार्थं जात्याद्यभिधाय तद्विषयकाभिधाग्रहविषयो भूत्वा शब्दः प्रातिपदिकरूपस्तादितरनिरपेक्षः समवायेन सम्बद्धं द्रव्यमाहेति। अभिधायेत्यस्य प्रतिपाद्येत्यर्थकत्वे क्त्वोऽनुपपत्तिः। शब्दतो जातिद्रव्ययोः क्रमेण बोधाननुभवात्। प्रत्यक्षदृष्टक्रमस्यात्रारोप इत्यपि न युक्तम्। आश्रयानालिङ्गितजाति-

---

यदित्विति तत्र द्वितीयपक्षे उक्तरीत्यैव निर्वाहादाह तदेति सामान्यलक्षणास्वीकारफलांतरस्यापि मद्रीत्यैव सिद्धिर्नभवन्मते इत्याह किंचेति। एवंच फलद्वयस्यापि अनन्यथासिद्ध्या तदावश्यकत्वेनास्य प्रकारस्य निष्फलत्वमेवेति प्रागुक्तरीतिरेव साध्वी (व्यक्त्यनुपरक्तकेवलजातौ शक्यभावसाधकः अप्रयोजकत्वात्)। गोपदज्ञानस्य तच्छक्ति ज्ञानस्य च जातिविशिष्टविषयकज्ञानत्वं कार्यतावच्छेदकमितिनजातिविशेष्यत्वाभिप्रायेण गौर्नित्येत्यादिप्रयोगः पदविशेष्यकशक्तिग्रहपक्षेऽपि गोपदं गवि शक्तमित्येव शक्तिग्रहः गोपदं गोत्वे शक्तमिति शक्तिग्रहवादिनां तु गोत्वविषयकशक्तिज्ञानं तद्विशिष्टबोधकमिति स्वीकुर्वतां गोत्वपदाद्विशिष्टबोधापत्तिर्दुर्वारा ममतु तत्रगोव्यक्तिप्रकारकगोत्वविशेष्यक एव शक्तिग्रह इति नदोषस्तदाहेत्यलमिति।

यन्मूलकत्वेनेदं तैरुक्तं तस्यान्य एवार्थो न भवदभिमत इति तद्विरोधंसिद्धांते परिहरति–यत्त्विति। वक्ष्यमाणरीत्याह समवायेनेति। तदुक्तिं खंडयति अभीति। प्रत्यक्षेति च। सरूपसूत्रभाष्यादेरा-

प्रत्यक्षस्याप्यनुभवविरुद्धत्वेन तत्रापि वस्तुतः क्रमाभावात् ।

भाट्टास्तु जात्या व्यक्त्याक्षेपः विशेषणत्ववैशिष्ट्येनैव जातौ पदानां शक्तिग्रहाद्विशेषणत्वानुपपत्त्या विशेष्यव्यक्तेराक्षेपः, त्वादिरहितपदबोध्या जातिर्व्यक्तिविशेष्यकबोधविषया विशेषणतया गृहीतशक्तिकत्वादित्यनुमानम् ।

यत्तु जाते र्निर्विकल्पकोपस्थितिर्निर्विकल्पके इन्द्रियवच्छब्दोऽपि करणं शक्त्यनुभवोऽपि जात्यंशे निष्प्रकारक एव। गोत्वं किञ्चिदाश्रितं जातित्वादित्यनुमानम् । पदप्रयोज्यायाश्चोपस्थितेः शाब्दकारणत्वान्न व्युत्पत्तिभङ्गः। सति तात्पर्ये धूमोऽयं ज्वलतीत्यतोवह्नि र्ज्वलतीति बोधो भवत्येवायमेवाक्षेप इति। तन्न। तादृशहेतूपस्थितेरसार्वत्रिकत्वात् । शब्दतो जातित्वेनानुप-

---

क्ततावालंभेनेत्यादेराशयः प्रागुक्तः। यत्तु तद्भाष्यस्वरसादेव पदा व्यक्तेर्न स्मरणं नाप्यनुभवः नापि तत्र कुब्जा शक्तिः किंत्वाक्षेप इतिभट्टास्तन्मतमाह भाट्टास्त्विति । नन्वनुपपत्त्यभावे कथमाक्षेपोऽतआह विशेषणेति सचानुमानमिति तत्प्रयोगमाह त्वादीति । तत्सहितपदबोध्याया विशेषणत्वावैशिष्ट्येन तदभावेनाक्षेपाभावादिदं पदविशेषणं।

तेष्वेकदेशिमतं खंडयति—यत्त्विति। आक्षेपिका च निर्विकल्पकस्मृतिविषया जातिरेवेत्याह जातेरिति । पुंवत्कर्मेति पुंवद्भावः । ननु शब्दात्तदतआह निर्वीति । निष्प्रेति निर्विकल्पक एवेत्यर्थः। तथाच न तत्समानाकारता विरोध इति भावः। सचानुमानमित्याह गोत्वमिति नन्वाक्षेपितव्यक्तेरपि शाब्दे भाने पदजन्यपदार्थोपस्थितिः शाब्दबोधेकारणमिति व्युत्पत्तिभंगोऽतआह पदेति। नन्वेवमतिप्रसंगोऽतआह सतीति । एवेनोक्तव्यवच्छेदः तादृशेति जातित्वेत्यर्थः । तत्रहेतुमाह शब्दत इति । गोपदादितस्तादृशरूपेण गोत्वादेरनुपस्थितेरित्यर्थः ।

स्थितेः। अर्थापत्ते रपि नावसरः। अनुपपत्तिज्ञानमन्तरेणापि बोधात्। समानसंवित्संवेद्यत्वमाक्षेप इत्यपि न युक्तम्। सुवर्णकरकादिषु गृह्यमाणेषु तैजसत्वजलत्वपृथिवीत्वसंशयदर्शनात्। द्रव्यमिति घटज्ञाने घटत्वभानाभावात् घटत्वपङ्कजन्यजातिभाने विशेष्यतया व्यक्त्यभानाच।

किञ्च गवा वैशिष्ट्येनच गोत्वस्य समानवित्तिवेद्यत्वेऽपि गोगोत्ववैशिष्ट्यानीति समूहालंबनमेव स्यात् न विशिष्टबुद्धिरित्याहुः।

तन्न। व्याप्त्यादिप्रतिसन्धानं विनापि बोधात्। एतेन जातिशक्तस्य व्यक्तौ लक्षणेत्यपास्तम्। अनुपपत्तिप्रतिसंधानं विनापि बोधात् क्वचिच्छक्यार्थबोधकस्यैव पदस्यान्यत्र लक्षणाया दृष्टत्वाच्च। नचैवं प्रकृते, अन्यथोपपत्तेश्चेत्यलम्।

तत्रगवादिशब्देन गवादीनां प्रतीतौ या कदाचित्सास्नादीनां प्रतीतिः सानुमानिक्येवेत्यन्ये। शाब्दे-

---

अर्थापत्तिरेवाक्षेपइति मतं खंडयति अर्थापत्तेरितिबोधादितिगांद्याादित्यादित इति भावः। मतांतरं खंडयंति समानेति। करकः करवेति प्रसिद्धः तेष्वपिदोषांतरमाह द्रव्यमितीति न(च सह)विशिष्टेति गोत्वप्रकारकगोविशेष्यकसंसर्गमर्यादापन्नवैशिष्ट्यविषयकबुद्धिरित्यर्थः एतेनेत्यस्यार्थमाहानुपेति। नत्वेवं नह्येवं। नन्वगत्या तच्छा स्वीकारोऽतआहान्यथोपेति: सिद्धांतमतेनेत्यर्थः। (न)निरूढलक्षणायां न तत्पूर्वकत्वानियमो मानाभावात् रूढिशक्तिरूढिलक्षणयोर्भेदानापत्तेः प्रयोजनानपेक्षत्वमात्रेण निरूढलक्षणेति प्रकाशादौ उक्तेश्च एतेन तया निर्वाह इति भूषणोक्तमपास्तंतदाहेत्यलमिति।

विशेषमाह तत्रेति जातिपक्षादावित्यर्थः। नियमेनतत्सामग्र्यभावादाह कदाचिदिति। येषांमते नाकृतिः शक्या तन्मतमाह सानुमे-

वेत्यपरे । जलतैलादयः शब्दास्त्ववयवावयविसाधारणाः । यदात्वौषधिपरिच्छिन्ने तैलादयो व्यवस्थितास्तदापि तेऽवयवं समुदायारोपेणाहुस्तदभिप्रायेण भाष्ये उक्तं समुदाये दृष्टाः शब्दा अवयवेऽपि वर्तन्ते यथातैलंभुक्तमित्यादिना । एवं गुणिपरशुक्लादिषु गुणः शक्यः । नचानन्त्यं शुक्लादिगुणानाम् । एकत्वनित्यत्वस्वीकारात् । आश्रयभेदौपाधिकस्तु भेदव्यवहारः । एकोऽपि सावयवः अतएवाल्पत्वमहत्वकृतो भेदः ।

यद्वैकमखण्डंनैर्मल्यादिगुणान्तरसंमिश्रणे महत्वमन्यथाल्पत्वमिति तमप्सूत्रे भाष्ये स्पष्टम् । क्रियाप्येवमेका नित्या चोत्पादविनाशौ (शक्यस्यैव) संबन्धस्यैव । पच्यादि शक्यापि याऽव्यवधानेन फलजनिका सैकैव । अन्यासां तु तादर्थ्यात्पाकत्वव्यवहारो गौणः । एकपटशुक्लापरपटशुक्लगुणयोः प्रत्यभिज्ञाभावस्तु आरोपितभेदकृतः । क्वचिदस्त्येव तथा प्रत्यभिज्ञागुणपरेषु तद्गता जातिः पाचक इत्यादेः पाकक्रियासम्बन्धवत् कर्तरि शक्तिः । क्रियापचेरकस्य कर्ताशक्यः

---

ति । सिद्धान्तमतमाह· शाब्वेवेति । विशेषांतरमाह जलेति । व्यंवेति वैद्यकशास्त्रे इतिभावः । तत्रमानमाह तदभीति आदिना घृतं भुक्तमिति एवं जातिशब्दस्थले जातिवत् ॥ गुणपरे विशेषस्य वक्ष्यमाणत्वादाह गुणीति तद्विषये इत्यर्थः । नन्वेवं कथंभेदव्यवहारोऽतआहा श्रयेति । नन्वेवमाकाशस्यापि सावयवत्वापत्तिरत आह यद्वेति इति ऽभयमेवंगुणवत् नन्वेवंकथमुत्पत्त्यादीत्यत आहोत्पेति । नन्वेवं समूहस्य क्रियात्वेन विशेष्यतया अवयवस्य पच्यादिवाच्यत्वं कथमतआह पच्यादीति तद्रूपारोपेणेति भावः । नन्वेवं प्रत्यभिज्ञातिप्रसंगोऽतआहैकेति । आश्रयाभेदे त्विष्टएवेति भावः । भेदप्राबल्ये तथा अभेदप्राबल्ये त्वाह क्वचिदिति । एवं गुणिपरे उक्तगुणपरे आह गुणेति ।

सम्बन्धो विशिष्टशक्यः। सम्बन्धश्च क्रियाकारकभावः सएव तत्र प्रवृत्तिनिमित्तं, प्रवृत्तिनिमित्तत्वंच यज्ज्ञानाच्छब्दप्रवृत्तिस्तत्त्वं, तस्यभाव इति सूत्रे भावशब्देन प्रवृत्तिनिमित्तमेव अतएव ततः सम्बन्धे भावप्रत्ययः, शब्दप्रवृत्तिश्च क्वचिद्धर्मज्ञानात् क्वचित्सम्बन्धज्ञानात् इति स्पष्टं तस्यभाव इत्यत्र कैयटे।

तत्र जातिगुणयोर्लोकनिरूढया सोयमिति प्रतीत्या भेदनिबन्धनसम्बधस्य तिरोधानान्न तत्र सम्बन्धे भावप्रत्ययः। क्रियया तु कृदन्ते भेदस्यैव नियमेन प्रतीतेस्तत्सम्बन्धज्ञानादेव शब्दप्रवृत्तिरिति तत्रैव भावप्रत्ययः। क्रियाकारकयोर्भेदाभेदाविति मते तिङन्ते तु युष्मद्युपपदे समानाधिकरणे इत्युक्तेर्भेदतिरोधानम्। अत्र च शब्दशक्तिस्वभाव एव बीजम्।

---

क्रियाशब्दस्थले आह पाचक इति। आदिनापक्तेति तत्रविषयविभागमाह क्रियेति। प्रकारतया शक्येति शेषः। सच सांसर्गिकविषयतावत्वेनैव शक्य इतिबोध्यम्॥ एतेनपाचकादेः कथंक्रियाप्रवृत्तिनिमित्तकत्वं पचेः क्रियायामकस्य कर्त्तरिशक्त्या ताभ्यामुपस्थितयोराकांक्षावशात्परस्परान्वयेन तस्य शक्तेरेवाभाव इत्यपास्तमेकार्थीभावविधया संसर्गशक्त्यैव तथा व्यवहारात्॥ एकार्थीभावबलादाह संबंध इति तत्स्वरूपमाह संबंधश्चेति।

यत्तु तत्र क्रियां धर्मितावच्छेदकीकृत्यैव तादृशविशिष्टे शक्तिग्रहेण तस्याः प्रवृत्तिनिमित्तत्वव्यवहारस्तस्यभाव इत्यत्र भावपदेन प्रवृत्तिनिमित्तं तत्संबंधश्चेत्युभयं गृह्यते एवं यस्य गुणस्य भावादित्यत्र गुणपदेनापि तत्र लक्ष्यानुसारेण व्यवस्थेति कृतद्धितसमासोत्तरभावप्रत्ययेन संबन्धाभिधानमुपपद्यत इतिप्राञ्चस्तन्नेत्याह सएवेति। ननु तत्रक्रियायामनत्वमप्रासङ्गमतआह प्रवृत्तीति। एवेनोभयव्यवच्छेदः। एवं वार्तिकगुणपदेनापि ततः पाचकादितः। सर्वसंग्रहायाहशब्देति

अत एव कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेनेत्युक्त्वा पाचकत्वमित्युदाहृतं हरिणा । क्रियाप्रवृत्तिनिमित्त इत्यस्य क्रियासम्बन्धप्रवृत्तिनिमित्तक इत्येवार्थः । जातिगुणक्रियायदृच्छेति चतुष्टयी शब्दानांप्रवृत्तिरित्यत्र क्रियापदं सम्बन्धप्रवृत्तिनिमित्तकशब्दोपलक्षणमिति न न्यूनता । यदृच्छाशब्दा डित्थादयः कादयो भादयश्च । तत्र डित्थादिष्वेकद्रव्योपनिवेशिसंज्ञाभूतेषु व्यक्तिरेव वाच्या । आनन्त्यव्यभिचारयोरभावात् । प्रातिपदिकमात्रादर्थबोधाभावेन सुबन्ताच्च संख्यादेरेव प्रकारतया भानेन ततो न निर्विकल्पकम् । नच डित्थत्वमित्यादौ प्रत्ययार्थाभावेन त्वाद्यनुपपत्तिरिति वाच्यम् । व्यक्तेरेव प्रकारता विशेष्यतारूपविषयताद्वयेन भानेन प्रकारत्वावच्छिन्नाया व्यक्तेरेव त्वाद्यर्थत्वात् । जात्यतिरिक्तधर्मांशे प्रकारतायाः सावच्छिन्नत्वनियमस्तु भेदसम्बन्धाव-

---

अनतिप्रसंगाय विषयव्यवस्थामाह तत्रेति तयोर्मध्ये इत्यर्थः । तद्धिते विशेषस्य वक्ष्यमाणत्वादाह कृदन्ते इति । तदेवाहक्रियेति । एवं च तत्र क्रियैव प्रवृत्तिनिमित्तं । अत एव तत्र संबंधस्य प्रवृत्तिनिमित्तत्वादेव नन्वेवं कथं तत्रक्रियाप्रवृत्तिनिमित्तकत्वव्यवहारोऽतआह क्रियेति ।

ननुतद्धितसमासयोरपि संबंधप्रवृत्तिनिमित्तकत्वेन तदसंग्रहात्तत्र न्यूनताऽतआह जातीति शब्दोपेति तन्मात्रोपेत्यर्थः । इदं चसुबंतशब्दविभागकरणमिति न तिङन्तासंग्रहप्रयुक्तन्यूनता । तत्रतेषांमध्ये । आकडारादेतिसूत्रोक्तं हेतु गर्भविशेषणमाहैकेति । तत्वं प्रत्येषु तेषु शब्देष्वित्यर्थः । नन्वेवं निर्विकल्पकापत्तिरितिचेत्साकिंप्रातिपदिकादुतसुबंतादापाद्यते नाद्य इत्याह प्रातीति । तस्याप्रयोगात् । नांत्य इत्याह सुबंतादिति । ततः डित्थादितः । ननुजात्यन्यपदार्थानां स्वरूपतो नभानमितिनियमवत् जात्यन्यधर्मांशेप्रकारतायाः सावच्छिन्न-

च्छिन्नप्रकारताया एवेति न कश्चिद्दोषः । यद्वा तत्र प्रकृतिः शब्दपरा विशेष्यभूतोऽर्थ एव त्वाद्यर्थः । डित्थडित्थत्वपदयोश्च पर्यायता ।

यत्तु बालयुवाद्यवस्थाभेदेन शरीरभेदात्तद्वृत्तिडित्थत्वादि सैव त्वाद्यर्थ इति तन्न । लोके तत्र व्यवहाराभावेन तादृशोपाधिभेदेन भेदे प्रमाणाभावात् । आकाशे तु घटाकाशमठाकाशादीति भेदव्यवहारेण तत्रौपाधिकभेदासिद्धिः । अन्यथैकद्रव्योपनिवेशिनीत्यस्यासम्भवापत्तिः । एतच्च तस्यभाव इतिसूत्रे भाष्ये स्पष्टमिति शक्तिवादे निरूपितं तद्धितवादे निरूपयिष्यते च । कादिपदानां कादीनामेकत्वमते पञ्चवर्णव्यक्तिषु तेषामनेकत्वमते पञ्चजातीयवर्णव्यक्तिषु वा शक्तिः । अन्त्ये जातय उपलक्षणमिति व्यक्तिवादोक्तरीत्या बोध्यम् । तत्राप्यानन्त्याद्यभावेन पञ्चवृत्त्येकशक्यतावच्छेदकानुपयोग एव तत्रापि पूर्ववदेव भावप्रत्यय इति कुत्वकुशब्दयोः पर्यायतैव

---

त्वमितिनियमभंगापत्तिरतआह जात्येति । एवं तन्नियमेऽपिबोध्यं अत्रगौरवाद्भाष्योक्तं पक्षांतरमाह यद्वेति तत्रडित्थत्वमित्यादौ अत्रपक्षे तन्नियमोपपत्तावपि न तन्नियमो मानाभावात् इतिबोध्यं । च पेति पर्यायता चेत्यर्थः । कैयटादुयुक्तिं खंडयति यत्त्विति । बालत्वयुवत्वाद्यवस्थेत्यर्थः । तत्र अवस्थायां भेदे शरीरस्येत्यादिः । नन्वेवमन्यत्रानिष्टापत्तिरितिदृष्टांतासंगतिरतआहाकाशेत्विति । तद्वत्तत्रापिबालडित्थो युवडित्थ इत्यादिव्यवहारांगीकारे आहान्यथेति ॥

एवमाद्ये उक्त्वा द्वितीये आह कादीति नन्वेवंविशिष्टशक्त्यापत्तिरतआहांत्येइति । तत्रापि तदुपलक्षणत्वपक्षेपि । तत्रापि कुत्वमित्यत्रापि पूर्ववदेव प्रकारभेदेन द्वितीयपक्षेणोपसंहरति । कुत्वेति । तृतीये आह

भादिपदानां शक्यव्यक्त्यानन्त्येन शक्यतावच्छेदकापेक्षणात् भादिपदमेव शक्यतावच्छेदकं तदेव तु तदुत्तरत्वाद्यर्थः। एतदभिप्रायेणैव च वृद्धिरादैच्सूत्रे भाष्ये उक्तम्। 'कुत्वं कस्मान्न भवति चोः कुः पदस्येति। भत्वात्। कथं भसंज्ञे'ति। अनेन कुत्वकुपदयोर्भत्वभसंज्ञापदयोः पर्यायता स्पष्टमेवोक्ता। नच कुत्वपदस्य तत्र लक्षणा। मुख्येऽर्थे क्वापि प्रयोगादर्शनात्। उपक्रमे लाक्षणिकप्रयोगे बीजाभावाच्चेति दिक्।

परे तु गुणादीनामपि शक्यत्वे आनन्त्यव्यभिचारयोः सत्त्वेन गुणादिगतजातिरेव शक्या। रूपवान् क्रियावान् इतिपदयोः शक्तिग्रहे सर्वथाऽनयोर्दुर्वारत्वात्। शुक्लादीनामप्यनेकत्वमिति पक्षस्यापि तमप्सूत्रे भाष्ये सत्त्वेन तत्रापि तयोः सत्त्वाच्च। युक्तं चैतत्। अन्यथोक्तरीत्या पटादीनामपि नित्यत्वाद्यापत्तिः। किञ्चैकत्वेऽप्यौपाधिकभेदस्य सत्त्वेन तौ दुर्वारौ। पाचकादिषु सम्बन्धप्रवृत्तिनिमित्तकेषु सम्बन्ध-

---

भादीति। तुरुक्तवैलक्षण्ये तृतीयान्तार्थमेवाहानेनेति। कौस्तुभादुयुक्तिं खंडयति–नचेति। एतेन तथा सकलग्रंथकारोक्तमपास्तमित्यन्यत्र निरूपितं तदाहेति दिगिति॥

एवं गुणीत्यादिनोक्तं प्राचामनुरोधेनेति सूचयन् सिद्धान्तमाह–परेत्विति। शक्येति तेष्वपीत्यादिः। ननु तत्र तदभावः प्रागुक्त एवातआह–रूपेति। विशेषे एवात्र तात्पर्यात्। रूपत्वानुगतीकृतरूपानुगते शक्तिग्रहे तु लाघवात्तद्गतजातावेव शक्तिरुचिता तत्राप्याह–शुक्लेति। सपक्षो भाष्योक्तोऽपि न युक्त इत्याह–युक्तमिति। जगतीतलवर्तिशुक्लादेरेकत्वनित्यत्वांगीकारे। आदिना एकत्वं अभ्युपेत्याप्याह–किंचेकेति। आद्यग्राह्यमेवाह–पाचकेति। शब्देष्विस्यर्थः। ननु तत्सत्वे न

प्रतियोगिक्रियागता जातिः शक्या। गुडतण्डुलपाकेषु भिन्नेषु पाकः पाक इति अनुगतव्यवहारेण पाकत्वस्यैकस्य जातिरूपस्याङ्गीकारात्। एवमन्यत्रापि। डित्थादावपि डित्थादिशब्दगता जातिः। शुकाद्युच्चारणभेदेन डित्थादिपदानां नानात्वात्। तदध्यवसायाच्च। गुणादिगतजातेः परम्परया द्रव्यवृत्तितया द्रव्यबोधनिर्वाहः। साक्षादाश्रयवृत्तिजाति बोधजनको जातिशब्दः। गुणादिद्वारकपरम्परया तद्वृत्तिधर्मबोधजनका गुणादिशब्दा, इति न चतुष्टयी शब्दानां प्रवृत्तिरित्यस्य हानिरित्याहुः।

एवंच शुक्लादय उभयत्र शक्ता एव गुणे गुणिनि चाद्ये पुंस्त्वमेवान्त्ये विशेष्यनिघ्नता। 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इति कोशात्। गुणिनि लक्षणेति तु न युक्तम्। मानाभावात्। लाक्षणिकानां कोशेऽनुपादानाच्च। रूपादिशब्दवाच्यस्य तु शब्दशक्तिस्वभावान्न गुण्यभेदमापन्नतेति बोध्यम्। जातितद्वतो र्गुणगुण्यादेश्च समवायः सम्बन्धः।

---

मानमतआह–गुडेति। याजकादावाहैवमिति। ननु नानेकत्वं तस्येति कथंसाऽतआह–शुकादीति। ननु सिद्धांते न ततस्तद्भेदोतआह–तदध्येति। नन्वत्र पक्षे कथं ततो द्रव्य बोधोऽतआह गुणादीति। नन्वेवंचतुष्टर्या शब्दानामित्यस्योच्छेदोऽतआह–साक्षादिति। पर्यवसितमाहैवंचेति। उभयत्रेत्यस्य व्याख्या गुणे इति। परमतं खण्डयति गुणिनीति। ननु शुक्लादीनां गुण्यभेदे विशेष्यनिघ्नता ततो भेदेनोक्तौ तु पुंस्त्वमेवेति फलितं, तथासति रूपादावप्यतिप्रसङ्गोऽतआह–रूपादीति। एवंसर्वं परमतेनोक्त्वा सिद्धान्तमाह–जातितद्वतोरित्यादिना–

समवायोऽपृथग्भावो द्रव्यादीनां गुणैर्मतः ।
स नित्यो यत्र हि द्रव्यं न तत्रानियतो गुणः ।

इति चरके पतञ्जल्युक्तेः । तत्र समवाय इति लक्ष्यं, अपृथग्भाव इति लक्षणं सच सहैवावस्थानं अयमेवायुतसिद्धिः द्रव्यादीनामाधारभूतानां गुणैराधेयैः स सम्बन्धो मतः तेन पृथ्वीत्वगन्धयोर्न स सम्बन्धः । आधाराधेयत्वाभावात् । आधाराधेयभावश्च तयोरनियतः तन्तुषु पटः पटे तन्तव इति वृक्षे शाखेति च व्यवहारात् । स समवायो नित्यः किं सर्वत्र नेत्याह । यत्रेति । नित्यमिति शेषः । तत्र नित्य इत्यर्थः । हि यत स्तत्रानियतोऽनित्यो गुणो नातो नित्यद्रव्यतद्गुणयोः समवायो नित्योऽर्थादन्यत्रानित्य इत्युक्तम् । एवंचानेकत्वमप्युक्तमेव । एकत्र द्रव्येऽनेकगुणकर्मादिनिरूपितोऽनेकस्तु न । मानाभावात् । किंत्वेक एव । एतावतैकः समवाय इति व्यवहारः केषांचित् । तदुक्तं-कणादेन–तत्वं भावेनेति । तत्वमेकत्वं, भावेन सत्तया

---

आदिना क्रियातद्वदादि । तत्र तदुक्तौ–सच पृथक्भावश्च । सहैवेति जातितद्वदादेः । द्वितीयपादार्थमाह–द्रव्येति । तथोक्तिस्वरसलब्धमर्थमाहाधारेत्यादि । स इत्यस्य मध्यमणिन्यायेन सम्बन्ध इत्याह संबन्ध इति । तथार्थफलमाह–तेनेति । अस्यार्थमाहाधारेति । आधाराधेयभावश्च न परसंमत एवेत्याहाधारेति । उत्तरार्धार्थमाह–स इति । अपकर्षानुषङ्गाभ्यामाह–तत्रनित्यइत्यर्थइति । हीत्युत्कर्षेणाग्रिमवाक्यान्वयीत्याह–हीति । फलितमाहैवंचेति । अन्यत्रानित्यत्वे चेत्यर्थः ।

नन्वाश्रयभेदकृतभेदवन्निरूपकभेदकृतभेदोऽपि कुतो नातआहैकत्रेति । एवेन परमतव्यवच्छेदः । केषांचिन्नैयायिकादीनां । सत्तयेति । सायथा त्रितयवृत्तिनी न तत्तद्रूपा किन्तु भिन्नैका तथा तादृशः समवायोऽपीत्यर्थः । नन्वेवं कथं व्यवहारद्वयं तत्प्रयुक्तमतआह

व्याख्यातमिति तदर्थः।सचापृथक्स्थितिरूपः समवायः स्वरूपेणैतेषां भेदव्यवहारनियामकः। अयुतसिद्धिसुलक्षादभेदारोपाद्याभेदे व्यवहारनियामकोऽपि पटः शुक्लः पटस्य शुक्लः तन्तुषु पटः पटीभवन्ति तन्तवो वृक्षे शाखेत्यादिव्यवहारात्। तदुक्तं हरिणापि—

ततस्तु समवायाख्या शक्तिर्भेदस्य बाधिका।
एकत्वमिव ता व्यक्ती रापादयति कारणैरिति।

ततः कार्यव्यक्त्यनन्तरं भेदस्य भेदमात्रप्रतीतेः कारणैरयुतसिद्धत्वेनैकदेशस्थित्याऽविभागरूपैरित्यर्थः इति हेलाराजः। तत्र भेदस्थलकोऽवयवावयविभावो गुणगुणिभावादिश्च संबन्धः षष्ठीवाच्य एत्येतावता समवायस्य सम्बन्धत्वव्यवहारो लोकेऽप्यपृथग्भावारोपात्। तदाश्रये सम्बन्धे समवायव्यवहारः। तत्र च समवायपदमेव प्रवृत्तिनिमित्तम्।

'समवायाभ्युपगमाच्च साम्यादनवस्थिते'रिति व्याससूत्रं तु समवायस्यैव साक्षात् संबन्धत्वमित्यर्थ खण्डकं तदर्थस्तु समवायाभ्युपगमादपि नेष्टसिद्धिः। अवयवैरत्यन्तभिन्नोऽवयवी समवायसम्बन्धेन तैः

---

सचेति। तेषां गुणगुण्यादीनां एवंच भेदोवास्तवः अभेदस्त्वारोपित इत्याहायुतेति। आदिना पटे तन्तवः। तस्यापीष्टत्वादाह भेदमात्रेति। ननु तस्यसम्बन्धत्वे उभयत्र षष्ठी स्यात्तदभावे तत्रापि षष्ठी कथमतआह तत्रेति। तयोर्मध्ये इत्यर्थः। ननु समवायस्योक्तलक्षणकत्वे कथंलोके संघे समवायव्यवहारोऽतआह लोकेपीति। प्रवृत्तिनिमित्तान्तरस्य तत्राप्यभावादाह—तत्रचेति। तत्रापीत्यर्थः। समवायाङ्गीकारे व्याससूत्रविरोधं परिहरति—समेति। खण्डकमिति ननु तत्त्वखण्डकं नान्युक्तरीत्या तस्य तत्त्वखण्डकमित्यर्थः। तदेवा

सम्बध्यते चेत्समवायोऽपि समवायेनान्येन वा सम्बन्धेन समवायिभिः सम्बध्येत अत्यन्तभेदसाम्यात्। ततश्च तस्याप्यन्योऽन्यः संबन्धः कल्प्य इत्यनवस्थेति। समवायस्य समवायिभिः सम्मूर्च्छितावभासाद्भेदानवभासेन न मुख्यं सम्बन्धत्वमतो न षष्ठीवाच्यः सः। संयोगोऽपि न षष्ठीवाच्यः। पदार्थयोजनामात्रहेतुः सम्बन्धो हि षष्ठ्यर्थः। संयोगस्तु नैवम्। तस्य स्वतः पदार्थत्वात्। संयोगं पश्येत्यादिव्यवहारात्। परस्परसंयोगेनावयवानामवयव्युत्पादकत्वेन वस्तुभूतकार्यकारित्वाच्च। सम्बन्धस्य तु न तत्त्वमिति स्पष्टमेवेति स्पष्टं हरिहेलाराजग्रन्थयोः।

कणादोऽपि 'इहेदमिति यतः कार्यकारणयोः समवाय' इति। इहेति इदमितिच यत इत्यर्थः। कार्यकारणयोरित्ययुतासिद्धानामुपलक्षणम्। आद्यं मृदि घट इति। अन्त्यं मृद्घट इति। क्रियाक्रियावतोरपि चैत्रो गच्छतीत्यादौ अभेदप्रतीतिः

---

ह-तदर्थस्त्विवति। चार्थमाहापीति। भेदाभेदपक्षे तादात्म्येनैव सिद्धेस्तदानर्थक्यमेवेत्यत आहावयवैरिति। तदसम्भवादुक्तरीत्याआहान्येन वेति। साम्यादित्यस्यार्थोऽत्यंतेति तस्यापि तदादेरपि। इतिरर्थसमाप्तौ। ननु सएव कुतोनषष्ठीवाच्योऽत आह समेति। संमूर्छना संमिश्रणं। प्रसंगादाह संयोगोपीति। अत्रहेतुमाह पदार्थेति। हियतः मात्रपदव्यवच्छेद्यमाह-संयोगस्त्विवति। पदार्थत्वेहेत्वन्तरमाह-परस्परमिति। पष्ठ्यंतस्योभयत्रान्वयः। तत्त्वं उभयं। समवाये परसंमतिमप्याह-कणादोपीति। प्रतीतिद्वयं यतः स समवायः कार्यकारणयोरित्यर्थः। स्वदाहेतीति। न्यूनतांनिराचष्टे—कार्येति। कश्चित्तदसम्भवं

प्रत्ययार्थकर्तुः क्रिययाऽभेदेनैवान्वयात् । भेदसम्बन्धस्य शब्दादनुपस्थितेः । अयं समवायो बौद्धशब्दार्थयोरपि वक्तुं शक्यः । अत एव तयोर्भेदाभेदव्यवहारः । अत्रार्थेऽयं शब्द इति व्यवहारेण तयोरपि आधाराधेयभावसत्त्वात् । विमानखण्डेऽप्युक्तम् । वादमार्गे जयाय द्रव्यगुणकर्मसामान्यविशेषसमवाया ज्ञातव्या इति चरके ।

यत्तु भेदसमानाधिकरणाभेदरूपं तादात्म्यं सम्बन्धः अभेदश्च व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकभेदस्य तादृश एवाभावो नातिरिक्तः । एतेन भेदत्वावच्छिन्नाभावश्चेदप्रसिद्धिः भेदप्रतियोगिकाभावश्चेद्द्वित्वादिना वह्न्यादौ नीलभेदाभावस्य सत्त्वात् । वह्निनीलइत्यादेरापत्तिरित्यपास्तमिति । तन्न । तद्वृत्त्यसाधारणरूपार्थयौगिकेन तादात्म्यशब्देन शब्दमर्यादया तावतोऽर्थस्यालाभात् । तत्राप्यर्थे रूढिकल्पनायां तु गौरवमक्लृप्तकल्पना च । समवायान्समवैतीति सूत्रे समवायं समूहं प्राप्य तदेकदेशीभवतीत्यर्थ इति वृ-

---

निराचष्टे—क्रियेति । समानाधिकरणे इत्युक्तेरितिभावः । शब्दात्तस्माच्छब्दात् । अन्यत्रापि तादात्म्यस्य नोपयोग इत्यधिकं ततो लब्धमेवाहायमिति । सिद्धान्तमतेनाह बौद्धेति । शब्दश्चार्थश्चतयोरित्यर्थः । अपिना बाह्यसमुच्चयः । अत एव तत्सत्त्वे उक्तरीत्या तयोः सम्भवादेव । उक्तबीजमाहात्रार्थे इति । स्थलान्तरस्थपतञ्जल्युक्तिमप्याह—विमानेति चरके । विमानखण्डेऽपीत्युक्तमित्यन्वयः ।

वेदान्तिमतं खण्डयति यत्त्विति । लाघवादाहाभेदश्चेति । तादृश एव व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताक एव । एतेन तथातयो र्निवेशेन । तदात्मनो भावस्तादात्म्यमिति व्युत्पत्तेराह तद्वृत्तीति न-

त्तिव्याख्यानेनोक्तचरकश्लोकेन च समवपूर्वकेण: तत्र शक्तिः क्लृप्ता। सपदार्थश्च क्लृप्त एवेति न किंचित्कल्प्यम्।

किञ्च भेदतदभावयोर्विरुद्धस्वभावत्त्वात्। कथमेकत्र स्थितिः नचैकोऽध्यस्तः तत्त्वं किं भेदस्य तदभावस्य वा। आद्येऽयमध्यासः किमाद्यव्यवहारकृदीश्वरस्योत शुक्तौ रजताध्यासवदाधुनिकस्य ?। आद्ये सिद्धं तस्य व्यावहारिकत्वमिति न तयोर्वैषम्यम्। अन्त्ये तदध्यासवदेतस्यापि व्यवहारनियामकत्वानापत्तिः। स्वर्णकार्यदाने स्वर्णदानाद्धर्माधिक्यश्रवणात्। किञ्चभेदाभावः प्रतियोगितावच्छेदकधर्मरूप इति रूपादौ तस्याध्यास एव वाच्य इति तस्याध्यस्तत्वापत्तौ त्वत्सिद्धान्तभङ्गः। अतिरिक्तत्वे तु गौरवम्। किञ्चातिरिक्तोऽपि तत्समनियत इति नाध्यासं विना निर्वाहः। अतिरिक्तोऽसमनियत इति

---

न्वन्त्यदोषः सिद्धान्तेऽपीत्यतआह—समवायानिति। तत्र अपृथक्भावेपरमते दोषान्तरमाह—किं चेति। तत्वं अध्यस्तत्वं तयोर्भेदाभेदयोः एवञ्चैकत्र स्थित्यसम्भव एव। तदध्येति शुक्तौ रजताध्यासेत्यर्थः। इष्टापत्तावाह–स्वर्णेति। त्वन्मतेतु तदभावात्तदसङ्गतिः स्पष्टैव। तदभावस्याध्यस्तत्वे दोषमाह–किं चेति। तस्यावश्यकत्वमप्याह भेदाभावइति तस्य अभेदस्य सर्वथेत्यादिः। त्वदिति भेदो वास्तव इति वेदान्तिसिद्धान्तेत्यर्थः। न त्वखण्डपदार्थः सः न तद्रूप इति न विरोधएवेत्त्येकत्रस्थितिसंभवान्नरूपादावध्यासोऽत आहातीति। सिद्धान्तभङ्गोपिदोष एवेत्याह–किञ्चेति। अनतिप्रसङ्गायाह–तदिति। प्रतियोगितावछेदकेत्यर्थः। तत्समानाधिकरणएवाखण्डः सपदार्थ इति भावः। अध्यासमिति रूपादावित्यादिः। एतद्दोषपरिहारा-

चेदक्लृप्तकल्पनायामत्यन्तगौरवम् । अत्र ग्रन्थे य-त्पूर्वं बहुशः तादात्म्यस्य सम्बन्धत्वमुक्तं वक्ष्यते च तत्परवासनयेति बोध्यम् ।

एतेनायुतसिद्धानां स्वरूपमेव सम्बन्धो न सम-वायः । तथाहि । स्वरूपविशेषेषु सम्बन्धत्वमपि ध-र्मः स्वीक्रीयते प्रत्येकरूपेण च सम्बन्धिताप्रतीत्यनु-सारात् सम्बन्धत्वेनच तस्य सम्बन्धिद्वयनिरूप्यत्वं विशिष्टबुद्धिनियामकत्वं षष्ठीबोध्यता आधारत्वा-दिनियामकतांच तन्तुषु पटः समवेत इति विशिष्ट-बुद्धेस्त्वयाप्येवमेवोपपाद्यत्वात् । एतेनानेकेषु सम्ब-न्धत्वकल्पनापेक्षया समवाय तत्सम्बन्धत्वयोः कल्प-ना लघीयसीत्यपास्तम् । समवायनिरूपितमनेके-ष्वनेकसम्बन्धत्वं कल्प्यम् । निरूपकभेदेन सम्ब-न्धत्वभेदात् समवायेष्वनेकं तत्कल्प्यं समवायश्चे-त्यतिगौरवात् । सम्बन्धिभेदेन समवायस्याप्यनेक-

---

याहातीति तदसमनियतत्वेप्यनतिप्रसङ्गाय तद्वति यावद्धर्मसमनि-यतत्वं वाच्यमेवेति बोध्यं । एवं सति स्वपूर्वापरग्रन्थविरोधं परि-हरति अत्रेति । एवमन्यत्रापिबोध्यम् ।

मीमांसकादिमतंखंडयति-एतेनेति। अक्लृप्तकल्पनायात्मत्यंतगौरवेणे-त्यर्थः। सामान्यस्यातिरिक्तस्याभावादाह विशेषेष्विति। अपिना विद्य-मानतद्धर्मसमुच्चयः। सच्चसमुदितवृत्तिरतएवसंबंधिभेदायाह–प्रत्ये-केति। वैपरीत्यानिरासायाह प्रतीत्येति। समवायस्य संबंधत्वेऽपि स्थल-विशेषे इदमावश्यकमित्याह–तंतुष्विति। तद्विशिष्टेति–समवायविशिष्टे-त्यर्थः। अनेकेषु स्वरूपेषु संबंधत्वेति अनेकेत्यादिः एतेनेत्यस्यार्थमाह समेति। अस्यसाक्षात्संबंधत्वाभावादिनिभावः तत्संबंधत्वं यश्च कल्प्यः।

स्वेऽतिगौरवाच। संयोगस्य तु न घटभूतलादिस्वरूपेणान्यथासिद्धिः। वियोगकालेऽपि तत्स्वरूपताद्वस्थ्येन विशिष्ट बुद्धिप्रसङ्गात्। समवायस्थले तु सतोः संबन्धिनोर्न कदापि वियोग इति न दोषः। गुणगुण्यादेः सतः कदाप्यवियोगेन लोकानां विवेकाग्रहात् पटः शुक्ल इति। भेदारोपेण तु पटस्य शुक्ल इति। एवंच घटादिशब्दानां जातिशक्तत्वेऽपि जातिव्यक्त्योर्विवेकाग्रहान्न वाद्याद्यनुपपत्तिरित्यपास्तम्। कदापि सम्बन्धस्य द्रव्यत्वादिनाऽप्रतीतेश्च। अतएव द्रव्यस्वरूपातिरिक्तसत्तादिजातिसिद्धिः। तदुक्तं कणादेन—द्रव्यत्वगुणत्वप्रतिषेधो भावेन व्याख्यात इति। भावः सत्ता यथा—द्रव्यात्मिका तथा समवायोऽपि विलक्षणबुद्धिवेद्यत्वादिति तदर्थः।

ननु भाविविषयकशक्तिग्रहो बोधश्च कथं, न सामान्यलक्षणया। तदनुपपत्तेरुक्तत्वात्। नच जातिप्रका-

---

नन्वेवं संयोगस्यापि स्वरूपेणान्यथासिद्धिः स्यादतआह-संयोगेति। नैवं प्रकृते इत्याह–समेति। नचसंयोगस्थलेऽप्यवस्थाविशेष एव संबंधिनोः संबंध इति नदोषः तस्यैव संयोगपदेन व्यवहारात्। अत्रपक्षे प्रयोगद्वयोपपत्तिमाह–गुणेति। यथाविवेकग्रहवतामविभागलक्षणनिमित्तेनाभेदात्पटः शुक्ल इति तथेतिभावः।दोषांतरमाह–कदापीति। अतएव धर्मस्य धर्मिरूपतया अप्रतीतेरेव। द्रव्येति द्रव्यादित्यर्थः।द्रव्यत्वेत्यस्य समायस्येत्यादिस्तदाह–तथेति। तदात्मको नेत्यर्थः। शेषमुभयत्राहविलेति। कंचिद्विशेषं वक्तुं संक्षेपेणोक्तमसप्रपंचशंकापूर्वकमाह–नन्वित्यादिना

नैयायिकादिमतं खण्डयति-नसामेति। अविद्यमानेन संबंधिना संबंधाभावस्योपपादनात्तस्यास्तत्वस्यैवाभावाच्चाह–तदनुपेति।

भूषणादिमतं खंडयति-नचेति। शक्तिग्रहाभावे आह–तद्बोधेति।

रकशक्तिग्रहस्य स्वाश्रयविषयकबोधजनकत्वेन तद्बोध-निर्वाह इति वाच्यम्। बोधकालेऽसत्त्वेन तस्य जात्याश्र-यत्वाभावात् तत्त्वेनाग्रहाच्च। तादृशेन तेनार्थेन शब्द-स्यापि संबन्धाग्रहाच्च। नच सत्कार्यवादे कारणे कार्य-स्य सूक्ष्मरूपेण सत्त्वान्नानुपपत्तिः सूक्ष्मरूपेण सत्त्वमि-त्यस्य कारणरूपेण सत्त्वमित्यर्थात्तस्यमृदादिशब्दवा-च्यत्वेऽपि घटादिशब्दावाच्यत्वात् घटत्वाद्याश्रयत्वा-भावात् तद्ग्रहाभावाच्च।

'नन्वेवं शब्दार्थसंबन्धस्य नित्यताहानिः। तदुत्प-त्तिकालमेव शब्दसंबन्धेन विद्यमानयोः शब्दार्थयोर-वियोगात्तज्जातीये व्यवहारनित्यत्वाच्च नित्यत्वव्यव-हाराक्षतेः। अतएव सतः संज्ञासंबन्ध इति वृद्धिरा-दैच् सूत्रेभाष्ये उक्तम्। 'सावर्णिको नाम मनुर्भवान् भुवि भविष्यती'त्यादौ भावित्वेन बुद्धिस्थस्य भावि-त्वेन बुद्धिस्थसंज्ञाबोधनमिति नदोषइतिचेन्न। बौद्ध-स्यैव शब्दतो बोधेनाक्षतेः। घटं कुर्वित्यादेश्च बुद्धिस्थ-

---

ननु तत्र ग्रहस्यैव निवेशः क्रियते न स्वरूपसतस्तस्येति नायंदोषोऽत आह–तत्त्वेनेति। असंभवादेवेतिभावः(१)अतएवाह–तादृशेनेति असते-त्यर्थः। असंबद्धबोधेऽतिप्रसंगःस्पष्टएवेतिभावः। अतएवोक्तरीत्यैवाह घटत्वेति। तदेत्यादिः। तद्ग्रहेति तत्त्वेन ग्रहेत्यर्थः। एवं तदा तेनार्थेन शब्दस्य संबंधाभावे। कालमिति कालाध्वनोरिति द्वितीया। एवेन पूर्वकालव्यवच्छेदः। वियोगेप्याह तज्जातीति। अतएव उक्तरी-त्यानित्यत्वादेव।

नन्वेवमपि सावर्णिक इत्यादौ दोष एवातआह सावर्णीति। नन्वे-वं घटं कुर्विति न स्यात्तस्य सिद्धत्वादतआह–घटमिति। अत्रदोषमाह

---

(१) असंबद्धत्वादेवेति पाठान्तरम्।

घटं बाह्यरूपेण कुर्वित्यर्थः ।

यदि तु यत्र क्रियापि बुद्धिस्थैवोपाद्यत्वेन प्रतीयते कसं घातयतीत्यादौ तत्र बौद्धपदार्थेन निर्वाहो नान्यत्र । किञ्चास्य सूत्रस्य शाटकं वयेत्यादौ बुद्धिस्थे एतत्संबन्धाभावादनुपपत्तिः। मार्ष्टीत्यादौ बौद्धाकारस्य बाह्यशब्दे विधानानुपपत्तिश्चेति विभाव्यते तदा घटादिपदानां तत्पदव्यवहरिष्यमाणे लक्षणया यस्य जातस्य घटपदेन व्यवहारो भावी तं कुर्विति तदर्थः । सत्कार्यवादाभ्युपगमाच्च न तत्र व्यवहरिष्यमाणत्वादेरनुपपत्तिः ।

यद्वेदृशबौद्धस्यैव शाब्दविषयत्वं बौद्धसूत्रैतत्सूत्रयोर्भेदाग्रहादेतत्सूत्रसंबन्धो नानुपपन्नः । एवमेव बौद्धाकारस्य बाह्यशब्दे विधानमप्युपपन्नम् । वयनमपि बौद्धमेवेति बोध्यम् ।-'इग्यण' इति सूत्रे भाष्ये स्पष्टमिदम् । वृद्धिरादैच् इत्यादौतु सर्वेषां शब्दानां नित्यत्वेन सर्वाकारादिषु विद्यमानेपूक्तरीत्या शक्ति-

---

विधाविति ।आद्ये दोषमाह–किंचेति ।एवंच सर्वत्रानिर्वाहः। तस्य सार्वत्रिकत्वेऽप्याह–किंचास्येति ।बुद्धिस्थशाटके अनुवादे लक्षणा नविभ्रावित्याद्यदोषमुद्धरति–घटादीति ।नन्वसति तदपि कथमतआह–सत्कार्येति ।चस्त्वर्थे। अनुवादेपि लक्षणाभावजलाघवादाह–यद्वेति। ईदृशस्य तत्पदव्यवहरिष्यमाणस्य द्वितीयदोषस्य प्रागुक्तयुक्तिभिरभावं मनसि निधाय तृतीयचतुर्थावुद्धरति क्रमेण बौद्धेत्यादि । एवमेव तयोस्तदग्रहादेव ततएवाह वयनमिति । स्पष्टमिति। 'अस्य सूत्रस्यशाटकं वय यदि वातव्योनशाटकोऽथशाटको नवातव्यस्तेन मन्यामहे सवातव्यो यस्मिन्नुते शाटक इत्येतद्भवती'ति तत्रोक्तं। नन्वेवमनेनैव प्रकारेण सिद्धे वृद्धिरादैजिति सूत्रभाष्यासंगतिरतआह वृद्धिरादैजिति ।

ग्रहस्य बोधस्य चोपपत्तिः। शास्त्रं तु साधुत्वाख्यानमात्रमिति प्रकारान्तरमपि भाष्ये उक्तम्।

किंच विद्यमानेषु घटेषु गृहीतशक्तिकस्य आविघटोत्पत्त्यनन्तरं गृहीतशक्तिकघटसादृश्यात्तत्र तत्पदशक्तिग्रहस्तद्बोधश्च। घटो नष्ट इत्यादेरपि तत्पदव्यवहृतो नष्ट इत्यर्थो बोध्यः।

इदं तु बोध्यम्। यत्र कयाचित्संज्ञयोपस्थितमनेकमर्थमुद्दिश्य संज्ञान्तरं बोध्यते यथैच्शब्देनैकारौकारावुद्दिश्य वृद्धिसंज्ञा तत्र प्रदेशेषु वृद्धिपदादैच्त्वेनैव तयोर्बोधः। अतएवानुदात्तङित इतिसूत्रेऽनुदात्तङितौ द्वावात्मनेपदमित्यस्य तङानौ द्वावर्थौ तत्र संख्यातानुदेशः प्राप्नोतीति यथासंख्यसूत्रभाष्योक्तं संगच्छते। अन्यथा तङानां तदर्थत्वेनात्मनेपदत्वेन बोधे एकत्वेन च द्वावर्थावित्यस्यानुपपत्तिः स्पष्टैव। ऐच्त्वमैच्पदं जातिविशेषो वा इत्यन्यदेतत्। एवंच वृद्ध्यादिपदानां नैपदप्रवृत्तिनिमित्तत्वम्। यत्र प्रवृत्तिनि-

---

नचैवं शास्त्रानर्थक्यमतआह शास्त्रंत्विति मात्रमितितन्मात्रपरमितितन्मात्रपरमित्यर्थः एवंचोपायस्योपायांतरादूषकत्वान्नतदसंगतिरितिभावः। बौद्धपदार्थानंगीकर्त्तृ मतेपि सामान्यलक्षणां विना निर्वाहमाह किंचेति। तुल्य न्यायादाह-घटो नष्ट इति।लक्षणानुवदिनाशप्रतियोगित्वमपि तथा व्यवहृतस्य सूक्ष्मरूपेण सत्वादव्याहतमिति भावः

विशेषमाहेदंत्विति। अत्र मानमाहातएवेति सूत्रे। इत्यस्य प्राप्नोतीत्यत्रान्वयः।अनुगममाहात्मनेइति।संज्ञाशब्दत्वादितिभावः। ननुतत्वं किमत आहैच्त्वमिति। चतुष्टयीपक्षे संज्ञाशब्दत्वादाहैच्पदमिति त्रयीपक्षे आह-जातीति। आद्येऐच्पदमैकारचकारनिरूपितमध्यगत्ववति शक्तमित्याकारः शक्तिग्रहः। अंत्ये एतन्मानसिद्धैच्त्वजातिमत्सु शक्त-

भिन्नान्तरासंभवस्तत्रैव पदस्य प्रवृत्तिनिमित्तत्वाद् । यथा आदिपद इत्यन्यत्र विस्तरः ।

एवं लिङ्गमपि प्रातिपदिकार्थः नतु प्रत्ययार्थः । प्राधान्यापत्तेः । दारादिशब्देभ्यो विनापि प्रत्ययं तद्बोधाच्च । लिङ्गानुशासनस्य प्रकृतावेव दर्शनाच्च । अतएव स्वमोर्नपुंसकात्, ह्रस्वो नपुंसके, नपुंसकस्य झलच, इत्यादि सूत्राणि संगच्छन्ते । तस्माच्छस इत्यत्र पुंसीत्यस्य पुंल्लिङ्गशब्दस्य प्रकृतित्वे इत्यर्थः । स्त्रियामित्यस्य च तत्र वर्तमानात्प्रातिपदिकादित्यर्थः । प्रातिपदिकार्थेतिसूत्रेऽपि लिङ्गेत्यस्यापि तत्र वर्तमानादित्य-

---

मिति शक्तिग्रह इति तत्तत्प्रकारको बोध इतिस्पष्टं वृद्धिरादैजित्यत्र कैयटे । एवमन्यत्रापि बोध्यं शक्तिग्रहस्तूक्तरीत्यैव । एतेन तथासकलग्रंथकारोक्तमपास्तं तदाहेत्यन्यत्रेति गुरुमंजूषादावित्यर्थः । यत्तु अत्रपक्षे पुंल्लिङ्गस्यावाच्यत्वेपि नदोषः तत्तल्लिंगताभ्युपगमात् लिंगबोधिका चप्रथमा लिंगे प्रथमेत्युक्तेः । नचघटेनेत्यादौ तत्प्रतीत्यनापत्तिः । यदुत्तरप्रथमापुंल्लिंगबोधिका तदुत्तरप्रत्ययस्य तत्र लिंगे लक्षणाभ्युपगमात् । क्वचित्स्त्रीप्रत्ययोपि तद्बोधकः । अतएवस्त्री इयतीत्यादौ प्रकृतिं विनापि तद्बोध इति भूषणकृदादयस्तत्रेत्याहैवमिति । जातिगुणादिवदित्यर्थः । प्राधेति । व्यक्तिशक्तावपि स्त्रीतादात्म्यापन्नाजाबोध एवानुभवसिद्धो नत्वजातादात्म्यापन्नस्त्रीबोध इतिभावः । प्रत्ययंटाप्ङीबादिकं । नन्विदं तुल्यमियतीत्यादावत आह लिंगेति । एतेनान्वयव्यतिरेकाभ्यां प्रत्ययस्यैव तत्वमित्यपि तदुक्तमपास्तं अतएव तस्य प्रातिपदिकार्थत्वादेव

यत्तुतस्मादित्यनुशासनानुरोधात्तस्य प्रत्ययार्थत्वमिति तत्खंडयति-तस्मादिति । स्त्रियामित्यधिकृत्यैव टाबादिविधेस्तथेतितदुक्तिं खंडयति-स्त्रियामिति । चस्त्वर्थेएवमन्यत्रापीत्याह-प्रातीति । आदिशब्दः प्रकारे तेन द्वितीयाया अपिसंग्रहः अनुपपत्तिप्रतिसंधानं विनापिबो-

र्थः। प्रथमाया लिङ्गार्थत्वाभ्युपगमे तु घटेनेत्यादौ तत्प्रतीत्यनुपपत्तिः।

ननु 'स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृत' इत्यादिलक्षणलक्षितपुंस्त्वादेरचेतने बाधात् खट्वादौ टाबाद्यनापत्तिः। किंच दारानित्यादौ नत्वं न स्यात्तदर्थस्य पुंस्त्वाभावादितिचेद्। अत्रभाष्यकृतः। सत्वरजस्तमसां प्राकृतगुणानां वृद्धिः पुंस्त्वम्, अपचयः स्त्रीत्वं, साम्यावस्थारूपास्थितिमात्रं नपुंसकत्वम्, इति। अतएव 'सामान्येनपुंसक, मित्युद्घोषः। उत्कर्षापकर्षसत्त्वेऽपि साम्यावस्थारूपास्थितिमात्र विवक्षायां नपुंसकत्वमिति तदर्थः। एतदवस्थात्रयस्य पदार्थमात्रे सत्वादिदं केवलान्वयि इयं व्यक्तिरिदं वस्तु अयं पदार्थ इत्यादिव्यवहाराणां सर्वत्राप्रतिबद्धप्रसरत्वात अर्थनिष्ठंच तत्।

तथाचभाष्यम्। 'एकार्थे शब्दान्यत्वाद्दृष्टं लिङ्गान्यत्वमवयवान्यत्वाच्चेति पुष्यस्तारका नक्षत्रमिति-शब्दनानात्वदर्शनात्स्तनकेशाद्यतिरिक्तमेव लिङ्गमर्थनिष्ठम्। कुटी कुटीर इत्यादौ रेफस्यावयवस्योपजने लिङ्गभेददर्शनाच्चेत्यर्थ इति कैयटः। अत एवोपक्रमभाष्ये रूपरसस्पर्श शब्दानां स्त्यानप्रसवौ लिङ्गमित्युक्तम्। नहि रूपादयः शब्दगताः। पुंल्लिङ्गः शब्द इति तु

धात्वलक्षणेतिभावः। यद्यप्यारोपेण निर्वाहस्तत्र मानं च रात्रान्हाहा इत्यादिलिंगानुशासनमितिकेचित् तथापि सिद्धांतमाहात्रेति। अतएवेत्यस्य तृतीयविवक्षयैवंत्यर्थंसूचयन्नाहोत्कर्षेति विशेषमाहंतदिति मात्रं कात्स्न्यें कैयटमाहपुष्य इति एकस्मिन्नेवार्थे इत्यादिः। अनेनान्यहेतुर्विवृतः द्वितीयंविवृणोतिकुटीतिभाष्ये–तत्रापि शब्दानां गुणानांअतएवेत्यस्यार्थं सूचयन्नाह नहीति। इनितु इत्यादितु

वाच्यवाचकयोरभेदोपचाराद्बोध्यम्। अर्शआद्यजन्तं वा तत्। आत्मनि सर्वस्याध्यस्तत्वेन परम्परया तत्रापि स्त्यानादिसत्त्वादात्मा ब्रह्मेति व्यवहारोपपत्तिः। नचोपचयादेर्विरुद्धस्य नैकत्र समावेश इति एकस्य द्वित्रिलिङ्गतानापत्तिरिति वाच्यम्। कोशभाष्यादिप्रामाण्येन विरोधस्यैवाभावात्। उपचयादीनां विवक्षैव च व्यवहारनिमित्तमिति तेषां संमतम्। नहि कश्चिदपि स्वस्मिन्नात्मनि क्षणमप्यवतिष्ठते वर्धते वा यावदनेन वर्द्धितव्यमपायेन वा युज्यते इति भाष्यात्। क्षणिकत्वेऽपि न व्यवहारहानिः। तत्र कश्चिच्छब्द एकलिङ्गविशिष्टार्थ एव शक्तः कश्चिल्लिङ्गद्वयविशिष्टे कश्चित्त्रितयविशिष्टे इतिलिङ्गानुशासनादिभ्यो निर्णेयम्।

भावतत्त्वविदः शिष्टाः शब्दार्थेषु व्यवस्थिताः।
यद्यद्धर्मे गतमिति तत्तल्लिङ्गं प्रचक्षते।
इति हर्युक्तेस्तेषां प्रयोगादपि निर्णेयम्। अत्रश्लो-

---

नन्वेवमप्यविकारिण्येतदभागेनात्मेत्यादौ दोषोऽतआहात्मनीति ननु गुणानां क्षणिकत्वेन युगपत्तथा व्यवहारो न स्यादत आहोपेति। तेषां गुणानामिति भाष्यात्क्षणिकत्वावश्यकत्वेपि इतिहेतोर्नव्यवहारहानिरित्यर्थः। चस्त्वर्थे एवेन व्यवहारकाले तत्सत्तानिरासः अनतिप्रसंगायाह तत्रेति। तेषां मध्ये इत्यर्थः। प्रागुक्तरीत्या न्यूनतांनिराचष्टे भावेति। भावः पदार्थः पदार्थेष्वितिविषयसप्तमी। धर्मे इति तेषांशिष्टानां न्यूनतांनिराचष्टेऽत्रेति

यत्तुभूषणकृतालिंगस्यार्थनिष्ठत्वेचेतनेवक्ष्यमाणरीत्यानिर्वाहेऽप्यचेतने मध्वादौ व्यवस्था नस्यादितिशब्दनिष्ठमेवतद्भाष्यसंमतमिति तन्नेत्याह—एवमितितद्वदित्यर्थः। विशेषमाह—तत्रेति तस्मिन्सती

के शब्दार्थेष्विति लिङ्गमिति च सर्वधर्मोपलक्षणम्।

सप्तर्षयोऽथ मनवः प्रजानां पतयस्तथा।
सदाचारस्य वक्तारः कर्तारश्च महीपते॥

इति विष्णुपुराणात्। एवं मधुशब्देन पुंस्त्वनपुंसकत्वविशिष्टतया मकरन्दादिकमेवोच्यते पुंस्त्वमात्रविशिष्टं तु चैत्रादिकमित्यपि तत एव निर्णेयम्। एषु च पुंसादिशब्दानां वृध्यादिवच्छास्त्रीयः संकेतः अवश्यं कश्चित्स्वकृतान्त आश्रेय इतिभाष्यात्। तत्र टिघुभादिवल्लध्वी संज्ञा युक्तेति गुरुसंज्ञाकरणान्नत्वादिशास्त्रप्रवृत्तौ लौकिकमपि लिङ्गं निमित्तत्वेनाश्रीयते। पुंसादिसंकेतानां संख्यासंज्ञाया इवार्थान्तरसंग्रहार्थं प्रवृत्तावपि अर्थान्तरनिरासार्थमप्रवृत्तेश्च तत्र लौकिकेऽसंभवे शास्त्रीय एव तत्संभवेतु सामानाधिकरण्यसंबन्धेन शास्त्रीयाविशिष्टे लौकिके नतु केवललौकिके नापि केवलशास्त्रीये। हरिरपि

आविर्भावस्तिरोभावस्थितिश्चेत्यपायिनः।
धर्मा मूर्तिषु सर्वासु लिङ्गत्वेन व्यवस्थिताः॥

---

त्यर्थः। आश्रयणेसंज्ञाकर णान्यहेतुमपि संभवादाह पुंसादीतिपाठः प्रथमग्रेपि। एवंचकर्तव्यत्वेनाभिमतत्वान्नदोषः व्यवस्थामाहतत्रेति तयोर्मध्येअत्रतच्छब्दसंकेतेनोपजीव्यत्वेन तस्य प्राबल्यादाह—लौकीति शास्त्रीयेएवेति। यथास्त्रि रांपशुनेत्यादिप्रयुक्ते नाभावादिकं पुंपशावाह तत्संभवेत्विति। हरिरपीत्याहेत्यन्वयः यथाश्रुताप्रतीतेराह-तत्रेतिहरिपद्ये चस्य मिथः समुच्चायकत्वेपितदग्रेलौकिकलिङ्गसमुच्चायकेनापीविशिष्टस्य तत्रनियामकत्वं सूत्रितं अत्रा-

इत्याह । तत्रापिनेदं सूचितं । अपायित्वं प्रतिक्षणनश्वरत्वं । अतएव पशुना यजेतेत्यादौ पुंस्त्वस्य विवक्षितत्वान्न स्त्रियायाग इति मीमांसकाः। तत्र पुंस्त्वस्येत्यस्य लौकिकपुंस्त्वस्येत्यर्थः। 'पश्वानतायुं' 'पश्वानये'ति ऋग्वेदे दर्शनेन पशुशब्दस्य नित्यपुमर्थकत्वाभावनिर्णयात् । 'छागो वा मंत्रवर्णा'दितिषष्ठांत्याधिकरणन्यायेन छागरूपपशुविशेषग्रहण इव मंत्रवर्णस्य लौकिकपुंस्त्वविवक्षायां तात्पर्यग्राहकस्य सत्त्वाच्च । 'छागस्य वपाया' इति मंत्रे छागस्येत्यस्य छागभिन्ने इव स्त्रियामसंभवात् । अदन्तछागशब्दस्य लौकिकपुंस्त्वसमानाधिकरणपारिभाषिकपुंस्त्वविशिष्टे शक्तेः। यथासारस्वतौ मेषावित्यत्र तद्धितप्रकृतिः शब्दः स्त्रीलिंगः पुलिंगो वेति संदेहे 'संदिग्धेषु वाक्यशेषा'दितिन्यायेन 'एतद्वैदैव्यमिथुन'मित्यर्थवादा-

---

यित्वं न घटादिवत्किंतु सांख्यमतेनेत्याह प्रतीति । अतएव तत्रविशिष्टे एव कार्यादेव। पुंस्त्वस्य शास्त्रीयस्य तत्वंप्यनिर्वाहादाह तत्रेति। तस्यापीत्यर्थः। ननुपश्वर्थस्य नित्यपुंस्त्वादिदमयुक्तमेवात आह पश्वेति। स्पष्टमाह पश्वेति। लिङ्गस्यार्थनिष्ठत्वादाह पुमर्थकत्वाभावेति। नन्वेतावता पूर्वपक्षोपपत्तावपिनसिद्धांतोपपातिस्तत्र तद्विवक्षायां मानाभावादत आह छागोवेति। मन्त्रेत्यस्य मध्यमणिन्यायेनान्वयः तदेवोपपादयति छागस्येति। छागत्वसत्वात् । अत्रहेतुमाहाकारान्तेति स्त्रीव्यक्तावप्रयोगेणेतिभावः । उक्तरीतिरन्यत्राप्यावश्यकेत्याह यथेति। मेषावित्यस्य भवत इतिशेषः। संदेहे इति सरस्वत्यैचरुमिति द्वयोरपि दर्शनादिति भावः। एकेतिप्रकृतेरिति भावः। तत्सामग्रीमाहपुंस्त्वेति। जातिपक्षायुक्तरीत्याहधर्मितेति। धर्मितावच्छेदकत्वं चतदाश्रयनिष्ठविषयतानिरूपकत्वं घटादिपदजन्यबोधे लिङ्गभाननिर्वाहायाह धर्मि-

देकशेषेण द्वयोर्ग्रहणंनिर्णीयते शास्त्रीयमपि लिंगं लौकिकलिंगवत् शाब्दबोधे भासते तथानुभवात् । पुंस्त्वविशिष्टो घटो घटपदशक्य इत्यादिप्रकारेण शक्तिग्रहः । धर्मितावच्छेदकत्वेन धर्मितावच्छेदकसमानाधिकरणत्वेन विशेष्यत्वेन वा शक्तिग्रहविषयस्य बोधविषयत्वं फलबलादिति नातिप्रसंगः। एतेनं शब्दनिष्ठं लिंगमित्यपास्तं । उक्तभाष्यविरोधात् । अर्थे तदन्वये संबन्धगौरवाच्च पुंयोगादाख्यायामित्याद्यस्वारस्याच्च । लौकिके लिंगेऽर्थवृत्तिताया एव क्लृप्त-

---

तावच्छेदकसमेति ।

भूषणोक्तिं खण्डयति-एतेनेति । इत्थंहि तन्मतं शब्दनिष्ठमेव पारिभाषिकंलिङ्गंपुल्लिंगः शब्द इत्यादिव्यवहारस्यासति बाधके गौणत्वायोगात् । तत्र पुंस्त्वस्य नाभावः।स्त्रीत्वादेष्टावादिकं द्योतकं। तच्च शब्दनिष्ठमशब्दवाच्यमर्थेपरिच्छेदकतयाऽन्वेति । लिङ्गविशेषविशिष्टस्यैवार्थविशेषवाचकतायालिङ्गानुशासनशास्त्रसिद्धत्वात्स्वाश्रयवाच्यत्वसम्बन्धेन लिङ्गस्यार्थ व्यावर्त्तकत्वोपपत्तेः। अतएव प्रयोगानियमोपि । भाषितपुंस्कादित्यपि अर्थभेदेनैव शब्दभेदादुपपन्नं । लिङ्गभेदस्तु न भेदप्रयोजकः । एकः शब्दोऽयं द्विलिङ्ग इत्यादिव्यवहारादुक्तसम्बन्धेन पुंस्त्वविशिष्टो भाषितो येनेति बहुव्रीहिः । एवंच पशुनेत्यत्र पुंस्त्वस्य परिच्छेदकत्वान्न पशुस्त्रिया यागः—

नचपशुशब्दस्य नित्यपुंस्त्वात्पदार्थादिशब्दोदित लिङ्गवत्साधारण्यात्कथं स्त्रीपशुव्यावृत्तिः । ऋग्वेदे तथा प्रयोगदर्शनात्पशुनेति पुंस्त्वस्य विवक्षितत्वमिति निर्णयेनत्वेतस्य नित्यपुंस्त्वाभावनिर्णयात् छागोवेति न्यायेन निर्वाहाच्च । यथा सारस्वताविच्यत्रेति । एतेनेत्यस्यार्थमाहोक्तेति । एकार्थेइतीत्यर्थः । सम्बन्धेति स्वाश्रयवाच्यत्वेत्यर्थः। नन्वेवं सूत्रस्य कागतिरत आह—न पुंसकेति । तदेतितदारोपाच्चेत्यर्थः । हरिकैयटाविति पाठः । कैयटोहरिश्चेतिवा एवं ह्रस्वो नपुंस

त्वाच्च । नहि नपुंसकं नाम शब्दोऽस्तीति स्वमोरिति-सूत्रे भाष्याच्च । नपुंसकार्थाभिधायित्वात्तदभेदाच्च शब्दस्य नपुंसकत्वमिति कैयटहरी इत्यन्यत्र विस्तरः।

वैशेषिकास्तु पुंस्त्वादयो जातयः

तिस्रो जातय एवैताः केषांचित्समवस्थिताः

अविरुद्धा विरुद्धाभिर्गोमनुष्यादिजातिभिः ॥१॥

इतिहर्युक्तेः । परस्परंविरुद्धाभिर्गोमहिष्यादिजातिभिः सहपरस्परमविरुद्धा एताः समवस्थिता इत्यर्थः केषांचिद्वैशेषिकाणामितिहेलाराजः। अतएवेदं वस्तवयं पदार्थः इयंव्यक्तिरिति व्यवहारः सर्वत्र। क्वचिच्छब्दान्यत्वेन लिंगा नियमो यथा पुष्यस्तारका नक्षत्रमिति क्वचिदर्थविशेषेणनियमः यथा महत्वयुक्तहिमारण्ययोः स्त्रीत्वमेव । हिमानीअरण्यानीति । यथाह्रस्वोपाधेः कुठ्यादेः पुंस्त्वमेवेति कुटी कुटीरइति

यद्यप्येते शब्दा भिन्ना एव तथापि लाघवेनान्वाख्यानाय हिमादिशब्दं सामान्यमाश्रित्यार्थान्तरविषयशब्दानुशासनकरणादेवमुक्तम् । एतद्व्यंजकं च चेतनेषु स्तनकेशादि। अचेतने तु प्रयोगादवसितस्यास्य समारोपाच्छब्दसंस्कारहेतुत्वं, यथा आपो दारा इत्यादौ निश्चितेऽपि वस्तुन एकत्वे धर्मभेदाश्रय बहु-

---

के इत्यादावपि बोध्यं ।.तद्वाहेत्यन्यत्रेति उद्योतादावित्यर्थः । अतएव ताभिरविरोधादेवव्यवस्थामुक्तरीत्यैवाह क्वचिदिति। उक्तमेव शब्दांतरेणाह क्वचिदिति । भेदज्ञानायाह कुटीति ॥

उक्तयुक्तेर्वैयर्थ्यं परिहरति यद्यपीत्यादिना। करणात् पाणिन्यादिना अवेति बौद्धस्येत्यर्थः । उक्तमेवसदृष्टान्तंविशिष्याह यथेति। तज्जाति-

त्वाध्यवसायाद्बहुवचनं। तथा बहिरसत्त्वेऽपि तस्य स्व-द्रव्यादावारोपेण शास्त्रीयं कार्यं। भाष्ये संस्त्यानप्रस-वादिपदेनापि उत्पत्तिनाशस्थितयः नित्यानामनित्या-नां वा भावानामनौपाधिकं निजं तत्त्वं स्थितिर्नपुंस-कमित्युच्यते। अवयवसाहित्येनोत्पत्तिः पुंस्त्वं, वि-नाशोऽवयवानामपचयः स्त्रीत्वम्।उपाधिसंसर्गेण तु नि-त्यस्याप्युत्पत्तिविनाशाविति पुरुषश्चितिरित्याद्युप-पत्तिः।

एतच्चारोपितं सर्वदा सर्वव्यवहार निर्वाहकं। अनित्यानामपि सर्वावस्थास्वनुवर्तमानं प्रत्यभि-ज्ञाविषयो यद्रूपं तदेव स्थितिः। एवं लिङ्गेष्वप्यु-पाधिसंसर्गेणैतत्कल्पितमिति स्त्रीत्वं स्त्रीतेत्यादेरुप पत्तिः। शब्दप्रमाणकानां शब्दार्थ एवार्थ इति सर्वत्र द्रव्यगुणकर्मसामान्यादावपि लिङ्गजातियोगः। गोत्वा-दयोऽपि भावजातिसामान्यशब्दैर्लिङ्गोपाधय एवा-भिधीयन्त इति सर्वत्र लिङ्गजातिव्यवस्था।

ननु गोत्वादिभिरविरोधः कुत इति चेन्न। भिन्न-जातीयेष्वपि स्त्र्याद्याकारबुद्धेरनुगमात्। तदुक्तम्—

---

स्वरूपमेव भाष्योक्तमिति नताद्विरोधोपीत्याह भाष्ये इति। लौकिक-क्रमेणाहोत्पत्तीति। त्रयाणां विवक्षितस्वरूपं यथा कथं चिदाहनित्या-नामिति। ननुनित्येउत्पत्यादिकं बाधितमत आहोपाधीति। एतच्च उत्पत्त्यादिक च प्राग्वत्। नन्वनित्यस्थले न सार्वकालिकीस्थितिरत आहानित्यानामपीति। एवमितियथानित्यादावारोपितंतद्वदित्यर्थः। एवंच लिङ्गेष्वपि लिङ्गरूपजातियोग इतिभावः। एतच्चेत्याद्युक्तमेवा-हशब्देति। लिङ्गरूपजातीत्यर्थः। एवमग्रेऽपि। तत्र त्रिषु प्रसिद्धेः सा-मान्यादावुपपादयतिगोत्वेति। हयुंक्तौशङ्कतेनन्विति। तत्संमतिमेवा-

हस्तिन्यां वडवायांच स्त्रीति बुद्धेः समन्वयः।
अतस्तां जातिमिच्छन्ति द्रव्यादिसमवायिनीम्।इति॥

आदिपदेन गुणकर्मसामान्यादिः। अत्रापि कश्चिदेकलिङ्गः कश्चिदुभयलिङ्ग इत्यादिप्रक्रिया पूर्ववदेवेत्याहुः।

एतत्तु अन्योन्याश्रयग्रस्तं लक्षणबलेनैव शब्दार्थनिर्णयवतां लक्षणैकचक्षुष्कानां प्रयोगाध्यवसितलिङ्गारोपेण शास्त्रीयं टाबादि तच्छक्तिग्रहपूर्वकं च प्रयोगात्तदवसाय इति। बहुत्वन्तु तत्रावयवेषु धर्मेषुच संनिहितमिति तदारोप इति ततोऽत्र वैषम्यं स्पष्टमेव। अत एव भाष्ये सांख्यमतेनैव संस्त्यानप्रसवौ निरूपिताविति दिक्। एकं प्रातिपदिकार्थ इत्यस्य जातिव्यक्त्योर्मध्येऽन्यतरदेव तच्छक्यमित्यर्थः। द्विकमित्यस्य प्रथमाविधायके जातिव्यक्तिरूपद्विकं प्रातिपदिकार्थशब्देन गृह्यते इत्यर्थः। त्रिकमित्यस्य यथाकथञ्चिच्छक्तिग्रहविषयोऽपि तदर्थ इत्यभिप्राय इत्याहुः।

---

ह-तदुक्तमिति। अत्रापिमते इदं दूषयति एतत्त्विति। प्रागुक्तदृष्टान्तं विघटयति। एवेनोक्तमतव्यवच्छेदः। किञ्च जातिरूपत्वे सकलभाष्यासङ्गतिः स्पष्टैव। तदाहदिगिति।

ननु लिङ्गस्यापि प्रातिपदिकार्थत्वे त्रिकस्य प्रातिपदिकार्थत्वलाभेन एकं द्विकमित्यादिपक्षाणां कागतिरत आहैकमित्यादि। एवेन तदन्यतरस्यैव व्यावृत्तिर्नतु लिङ्गस्य। लिङ्गस्यपृथगुक्तेराहजातीति धर्मितेति। प्रागुक्तरीत्याआह यथाकथं चिदिति। दीक्षितादिमतमाह संख्येति। अन्वयव्यतिरेकादिति भावः। अंशेसिद्धान्तमाहपरेत्विति सएवेत्यर्थः। तथाप्रत्ययत्वेन तदिति। तथाच तद्बोधकारणत्व-

संख्याकारके तु प्रत्ययार्थ इत्येके। परे तु संख्यापि प्रकृत्यर्थः। दधिमध्वित्यादौ विनापि प्रत्ययं तत्प्रतीतेः। अनन्तप्रकृतीनां शक्तत्वकल्पने गौरवं तु फलमुखत्वान्न दोषाय। तथागृहीतशक्तिकस्य प्रकृतिमात्रादपि तद्बोधाच्च। अतिप्रसङ्गस्तु व्यवहारानुसारेण तात्पर्यवशात्परिहरणीय इत्याहुः। केचित्तु कारकमपि तथेत्याहुः। केचित्तु संख्यामात्रं विभक्त्यर्थः कारकान्तं चतुष्कं प्रातिपदिकार्थ इत्याहुः। तदुक्तम्।

वाचिका द्योतिका वा स्युर्द्वित्वादीनां विभक्तयः।
यद्वा संख्यावतोऽर्थस्य समुदायोऽभिधायक इति॥

नच पञ्चानामपि प्रातिपदिकार्थत्वे प्रातिपदिकार्थप्रकारकबोधे सुब्जन्योपस्थितिर्हेतुरिति विलीयेतेति वाच्यम्। इष्टापत्तेः। जातिलिङ्गसंख्याकारकशक्तिविशिष्टस्य द्रव्यस्यैव बोधेन सुबर्थविशेष्यकबोधस्य खपुष्पायमाणत्वात्। सर्वेचैते पक्षा अनभिहितसूत्रभाष्यादौ स्पष्टाः। तत्र पञ्चकं प्रातिपदिकार्थ इत्येव

---

स्य तत्राप्यावश्यकत्वेन कल्प्याभावइति तदेवयुक्तं। नन्वेवमतिप्रसंगोऽत आहातीति। तथा प्रकृत्यर्थएव शक्तिमत्कारकमिति पक्षे दुर्वचमिदं तस्य प्रकारतापत्तेरित्यरुचिः केचिदित्यनेसूचिता।

भूषणादिमतमाह केचित्त्विति। मात्रमवधारणे अत्रकारकं चशक्तिरूपं। अत्रारुचिबीजन्तु तस्याः प्राधान्यापत्तिरिति अत्रमानमाह तदुक्तमिति हरिणेतिशेषः। सिद्धान्तमाह यद्वेति। शक्तिः कारकमिति (हरिणेतिशेषः। सिद्धांतमाह यद्वेति। शक्तिः कारकमिति) सिद्धान्ते आह नचेति। रितिविलीति पाठः। इत्यादीतिपाठे आदिनाविशेषः कार्यकारणभावः। हेतौहेतुमाह जातीति। पञ्चकपक्षे इत्यादिः। उक्त पक्षाणांनिर्मूलत्वमपाकरोति सर्वेचैते इति। आदिना सरूपसूत्र-

ऽव्याश्च। सर्वेषां विशेषणत्वानुभवादित्यलम्। ज्ञानमात्रे यथा शब्दभानं तथोक्तम्।

केचित्तु शब्दार्थयोर्भेद एवेति पक्षेऽपि अनुभवब-लाज्ज्ञानसामान्यसामग्र्या एव शब्दभासकत्वक-ल्पनान्न दोषः। यत्तु अर्थस्मृतशब्दस्य ज्ञाने भान-मिति तन्न। प्रत्यक्षे शब्दभानानुपपत्तेः। अर्थज्ञानोत्तरं स्मृतस्य तस्य व्यवसाये भानासम्भवात्। अनुव्य-वसाये त्वेवं तद्भानमुपपादयितुं शक्यमित्याहुः। पटदिति कुर्वित्यादावनुकरणे भुवोवुगित्यादौ चानु-कार्यशब्दस्वरूपमर्थः। आद्ये ध्वनिमयत्ववर्णमयत्वा-भ्यामनुकार्यानुकरणयोर्भेदासिद्धेरन्त्येऽर्थपदार्थकत्वश-ब्दपदार्थकत्वाभ्यां भेदात्।

पाणिनिरप्याह। 'स्वं रूपं शब्दस्याशब्दसंज्ञे'ति। अत एव वृत्त्यर्थावबोधकत्वरूपार्थवत्त्वात्प्रातिपदिक-त्वे सुबाद्युत्पत्तिः। तदुक्तं 'मतौ छ' इतिसूत्रे भाष्ये योऽसावाम्नायेऽस्यवामशब्दः पठ्यते स छप्रत्ययप्रकृ-

---

भाष्यादिसिद्धान्त माहतत्रेति। तषांमध्ये इत्यर्थः। एतेन यद्यपिलिं-गादीनां त्रयाणां प्रत्ययवाच्यता ऽन्वयव्यतिरेकादितो युक्ता। तथापि प्रत्ययवर्जिते दधि पश्येत्यादौ तत्प्रतीतेर्लिङ्गानुशासनस्य प्रकृतावेव दर्शनाच्च प्रकृतेरपि तत्र शक्तिः कल्प्यते। तथाच वाचकताग्रहस्थ-लएवतेषामुपस्थितिः सम्भेदे चोभयतोपि। अतएव वाचिका इति वाक्यपदीयं सङ्गच्छते। उक्तहेतुहेतुमद्भावविलयस्तु न विभक्त्यो-त्यार्थमादायोपपत्तेरितिभूषणोक्तमपास्तं। तदाहेत्यलमिति।

मात्रंकात्स्न्यें। शब्दभाने मतान्तरमाहकेचित्त्विति। नदोषः नाति-प्रसङ्गः। दीक्षिताद्युक्तिं खण्डयतियत्त्विति। प्रत्यक्षे व्यवसाये। तामे-वाहार्थेति। अत्रारुचिबीजं तूकरीत्यातद्भानसम्भवे तस्यास्तत्वक-ल्पने गौरवमिति। विशेषमाह पटदितीति। लौकिकमिदं। शास्त्रीय-

तेरस्यवामशब्दस्यास्यवामीयमित्यादौ पदार्थः। अतएव प्रातिपदिकत्वाच्छसिद्धिरिति । क्वचिदनुकरणं सादृश्येनोपस्थापकं तथोपस्थितस्यापि शाब्दबोधेऽन्वयस्तात्पर्यवशात् वृत्तिज्ञानस्यानुकरणाजन्यशाब्दत्वमेव कार्यतावच्छेदकम् । अत एव भूसत्तायामित्यादौ विभक्त्यनुत्पत्तिः। वृत्त्यार्थबोधकत्वरूपार्थवत्त्वाभावात् । तदुक्तं तत्रैव कैयटेन। अनुकरणं तु व्युत्क्रमेणाप्युच्चार्यमाणं सादृश्यादनुकार्यस्य प्रत्यायकं, भवतीति। भाष्येऽपिवेदस्थोऽनुकरणस्य पदार्थ इति सिद्धान्तिनोक्ते किमनयोरन्यत्वमिति प्रश्ने ओमित्याह । आम्नायशब्दानां स्वरवर्णानुपूर्वीदेशकालनियतत्वादित्येवोक्तम् । तस्य क्वचिदभावेन न सतत्र हेतुरिति तदाशयः । यद्यपि ।

आम्नायशब्दानभ्यासे केचिदाहुरनर्थकान् ॥
स्वरूपमात्रवृत्तींश्च शिष्याणां प्रतिपादनइति ॥

---

माहभुवइति। ननु तयोरभेद एवेति कथन्तत्त्वमतआहाद्येइति। अतएव तत्र तस्य बोधविषयतानिर्वाहार्थं शक्तिस्वीकारोदत्र ॥ आम्नाये वेदे। प्रातिपदिकात् तत्वात्। क्वचित्तथापाठ एव यद्वा कात् तस्मात् एतेना नुकार्यानुकरणयोर्भेदविवक्षाऽभेदविवक्षा चेतिदीक्षितादिसकलग्रन्थकारोक्तमपास्तं । तदेव ध्वनयन् तत्रैव प्रकारान्तरं क्वाचित्कं दुर्बलमाह क्वचिदिति । एकं अनुकार्थशब्दस्य । नन्वेवं वृत्त्यविषयत्वेन कथं ततस्तद्बोधोऽतआह तथापेति। व्युत्पत्तिभेदं सूचयन्नाह वृत्तीति । अत्रमानमाहातएवेति । अस्यार्थमाह वृत्त्येति। तदपि क्वाचिदित्याद्युक्तमपि । अपिनोक्तसमुच्चयः । तत्रैव मतांइत्यत्रैव वर्णानुपूर्वीति प्रतीकं धृत्वा । आम्नायवदत्रनेत्याहानुकरणमिति। अत्र भाष्यसंमतिमप्याह भाष्येऽपीति उक्तद्वयेऽन्वयः । एतद्व्यवच्छेद्यमाह नत्विति। तावतापि कथं प्रकृतलाभोऽत आह तस्येति । अर्थस्येत्यर्थः।

तथाप्यर्थे तात्पर्याभावमात्रं। तत्र देशकालादि-नियमस्तु तत्राप्यस्त्येवेति बोध्यम्।

केचित्तु भूसत्तायामिति निर्देशात्कचिद्भिमक्त्व-नुत्पत्तिः। सादृश्यादर्थोपस्थितिस्तु न। किन्तु वाचक-सादृश्याद्व्युत्क्रमेणोच्चरितशब्दादपि बोधः। प्राग्दी-व्यत इति सूत्रे भाष्येऽप्येवमुक्त मेकदेशविकृतमनन्य-वदिति, तद्वदित्यर्थस्तेन तद्वत्तदर्थोपस्थापकं, अत एव दीव्यच्छब्देनैव दीव्यतिशब्दार्थोपस्थितिं वदन्ति। गामुच्चारयेत्यादेश्च गोशब्दमुच्चारयेत्यर्थः। उच्चारये-त्येतत्समभिव्याहाराच्छब्दपरता तत्परत्वेऽप्यात्वादि-

---

उक्तभाष्ये भट्टविरोधं परिहरति। यद्यपीत्यादिना। अभ्यासे घोषणे च नकेचिदाहुरित्यस्यानुषंगः। इतीत्यस्य भट्टैरुक्तमितिशेषः। अत्र-अभ्यासेउक्तप्रकारे दुर्वलत्वमेव प्रकटयन्नाह केचित्विति। उक्तरी-त्या भुव इति वक्तस्यार्थवत्त्वेपीतिशेषः।

ननूक्तरीत्यानिर्वाहे किमर्थं ज्ञापकाश्रयणमतआह सादृश्यादि-ति। दोषस्य प्रागुक्तस्य स्पष्टत्वादेतेन तथाकैयटोक्तमपास्तं। कचि-त्प्रकारांतरमप्याह किंत्विति। अत्रमानमाह प्रागिति। अनन्यवदित्य-स्यान्यवन्नेत्यर्थः। तत्रान्यसादृश्यनिषेधेऽन्य त्वाभावः सुतरां। अतएव तादृशादर्थवोधः अन्यथा शक्ततावच्छेदकानु पूर्व्यज्ञानाचतो बोधो नस्यात्तत्फलितमाह तद्वदित्यर्थः। तेन अतिदेशेन।

अत्रारुचिवीजं तु अनेनैव निर्वाहे वृत्यभावादेव तदभावे सिद्धे तद्वाप्ति देशाश्रयण मप्यफलमिति। यत्तुतत्र विकृतस्यैवो च्चारणापत्ति स्तादृशस्यैव श्रोत्रेणोपस्थितेरिति तन्न तात्पर्यवशाद्विकृतस्यै व शब्दादुपस्थितेस्तदभ्वनयन्नाह गोशब्दमिति इत्याद्यर्थः। एतेन तवापि तस्यावश्यकत्वेन पूर्वमतमेव युक्तं न निर्देशाश्रयणमि ति सू चितम्।

नन्वेवं गौणत्वादात्वादि न स्यादतआह तदिति। तस्य पक्षार्थविष-

प्रवृत्तिरस्त्येवेत्यन्यत्र प्रपञ्चितम् । तत्र स्वं रूपमित्यने-नार्थशब्दयोरुभयोः शक्तिबोधनेऽप्यर्थे कार्यस्य बाधे शब्दस्य विशेष्यता यथाऽग्नेर्ढगित्यादौ । अन्यथा वि-शेषणता, शब्दस्य विशेष्यत्वे चार्थो विशेषणं। वृद्धि-रादैच् इत्यादावपि संज्ञापदानां पदपरता वृद्ध्यादि-पदाभेद आदैजादिपदार्थे विधेयः । आदैचां ज्ञात-त्वात् । एतेन विपरीतोद्देश्यविधेय भावः परास्तः । प्रसिद्धवृद्धिपदार्थाभेदस्य तत्र बाधाच्च । सर्वनामा-नीत्यादौ महासंज्ञाबलादर्थपदोभयपरता गणपठित-सर्वादिषु सामानाधिकरण्यसम्बन्धेन सर्वार्थवाचक-त्वरूपार्थविशिष्टसर्वनामपदाभेदो विधेयः । गणपठि-तत्वं च गणपठित शब्दबोध्यत्वं, नच ज्ञाने शब्दभा-ने सर्वपर्यायाणां भानापत्तिर्विनिगमनाविरहादिति वाच्यम् । शाब्दे उपस्थितस्यैव पदस्य भानेनादोषात् । प्रत्यक्षादौ उपस्थितपदवज्ज्ञाने बाधकाभावाच्चेति दिक् ।

---

यत्वात् । यथाचैतत्तथा परिभाषेन्दुशेखरेप्रतिपादितंतदाहेत्यन्यत्रेति तयोर्मध्ये भुव इत्यादावित्यर्थः । अन्यथा तत्र तस्याबाधे । आद्ये अर्थस्य नेत्याह शब्दस्येति । अन्यत्रापि तत्वमाह वृद्धिरिति संज्ञेति-वृद्ध्यादीत्यर्थः । तदाह वृद्ध्यादीति एतेन तेषां ज्ञातत्वेन । ननु कुत-स्तेषां पदपरत्वमत आह प्रसिद्धेति । विशेषमाह । सर्वेति । तदवतु ननु गणपठितानामनुकरणत्वेन सर्वार्थवाचकत्वाभावः प्रयोगस्थानां च न गणपाठ तत्त्वमिति सूत्रासंगतिरेवात आह गणेति । एवं भूवा-दिसूत्रादावपि बोध्यं । शब्दभाने इति सिद्धांतमतेन, केचिन्मतेन वा प्रागुक्तेन । तत्र द्वितीयस्यायं भावः वृत्या नुपस्थितावप्यभिहिता-न्वयवादे वृत्तिं विनैव यथाकांक्षादिवशात्संसर्गस्यभानं तथा शा-ब्दज्ञानसामग्र्यैव तात्पर्याकांक्षादिवशाच्छब्दस्यापि स्वातंत्र्येण वि-शेषणत्वेन वा भानं ।

केचित्तु सर्वशब्दानां तत्तच्छब्दस्वरूपमेव प्रवृत्तिनिमित्तम्। अथ कस्माद्गौरुच्यते गौरित्येव हि गौर्गवि वर्तते इत्यौक्थिकथा इति निरुक्तात्। यद्वा स्वरूपं जात्यादि चेत्युभयं प्रवृत्ति निमित्तमित्याहुः। अनुकरणत्वं च शब्दमात्र तात्पर्यकोच्चारणविषयत्वं, पदार्थ विपर्यासकृत् इति समभिव्याहारे गौरित्याहेत्यादौ नवेति सूत्रेभाष्योदाहृतेनानुकरणत्वे विशेषणतयार्थभानेन शब्दमात्रतात्पर्यकत्वाभावात्। अत एव गौरानयेति परेण प्रयुक्ते इतरः सम्यगश्रुत्वा परं पृच्छति-किमाहेति तेन गौरित्याहेत्युक्ते तत एवार्थ बोधात्प्रवर्तते, तेन स्मृताद्बोध इति तु न युक्तम्। उच्चारितस्यैव

---

किंच पर्वते वह्निरिति शाब्दानुमित्यादितस्तदेव वह्न्यर्थिप्रवृत्तिदर्शनादस्ति भवन्तीपर इतिभाष्याच्च ज्ञानसामान्यसामग्र्या एवार्थविशेषणतया वर्त्तमान कालभासकत्वकल्पनवत्सर्वत्र बोधे शब्दभानानुभवात् ज्ञानसामान्यसामग्र्या एव शब्दभासकत्वकल्पनात्क्वचिद्विशेष्यत्वं क्वचिद्विशेषणत्वमित्यत्र तूक्तमेव निमित्तं। प्रकृतिप्रत्ययाना मितिव्युत्पत्त्याप्रकृतिज न्यबोधविषयत्वमिते गामुच्चारयेत्यादौ न कर्मत्वाद्यन्वयानुपपत्तिरिति।

सिद्धांतेतु शब्दात्पदप्रकारक एव बोधः सर्वत्रेति प्रागुक्तं (१) ग्राह्यत्वमितिहरिसंमतंचेति। तत्तत्पदप्रकारकशाब्दबोधे तत्तत्पदज्ञानघटितशाब्द सामग्र्या एव हेतुत्वेनाहोपेति। प्रत्यक्षादौ स्मृतिविषययावदघटित सामग्र्यास्तत्वमित्याहोपेति। एवं च साम्यं वदन्तः परास्तास्तदाहेतिदिगिति। मतांतरमाहकेचित्त्विति। अत्रारुचिबीजंतु आद्ये उक्तभाष्यादिविरोधः। अंत्ये गौरवमुक्तरीत्यानिर्वाहादिति बोध्यं। विशेषं वक्तुमनुकरण लक्षणमाहान्विति तमेवाह पदार्थेति तस्य संमतत्वायाह नवेतीति। अतएव विशेषणतयाऽर्थभानादेव

---

(१)ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा। तथैव सर्वशब्दानामेते पृथगवस्थिते॥ १॥ इति हर्युक्तेः।

बोधकत्वमिति सिद्धान्तात्। अनुकरणत्वद्योतकोऽपि कदाचिदिति(१) अनुकरणं चानिति परामिति सूत्रात्। अनुकरणे तु न विशेष्यतया नापि विशेषणतयार्थस्य भानं यथास्यवामीयमित्यादाविति बोध्यम्।

विष्णुर्नारायणः कृष्ण इत्यादौ कोशे कृष्णादिशब्दा अर्थपराः। शक्तिग्रहस्तु पदत्वहेतुकानुमानेन सामान्यत एव पदप्रकारकः। एवंच विष्णुपदार्थाभिन्नः कृष्णपदार्थ इत्यादिक्रमेण बोधः। विनायको विघ्नराजेत्यादौ द्वन्द्वविषये एते पदार्था विनायकपदार्थाभिन्ना इति बोधः। सर्वपर्यायद्वन्द्वात्मके कोशे एते पदार्था अभिन्ना इत्यध्याहारेण बोधः। एतत्पदममुकवाचकमिति शक्तिग्रहस्तुस्वस्वप्रसिद्धपदार्थमादाय तत्तत्पुरुषस्यानियतः पश्चान्मनसैव।

अंत्येऽस्यान्वयः। परं तटस्थं। तेन तटस्थेन। परमतं खंडयति तेनेति। तटस्थोक्तेनेत्यर्थः। एवंचतत्रेतिर्नानुकरणत्वद्योतकः। अतएवाहान्विति पटदितीत्यादावित्यर्थः। प्रागुक्तसिद्धांतमनेनाहविष्णु रिति।

ननु कथं तत्रशक्ति ग्रहस्तदज्ञानादतआहशक्तीति। नलादिपदं क्वचिच्छक्तं पदत्वादिति सामान्यतोऽनुमानेन तत्पदवाच्यः कश्चिदर्थोऽस्तीत्याकारकः सामान्यतः शक्तिग्रह एव वाच्यत्वसंबंधेन पदप्रकारकबोधेहेतुः। अतएव सामानाधिकरण्यमन्यथा घटो घट इत्यत्रेव तन्न स्यादिति भावः। द्वन्द्वेति आंशिकेत्यादिः। अभिन्ना इतिमिथ इत्यादिः। विशेषशक्तिग्रहोपपत्तिमाहैतदिति। अनियमः अनियमेन। अतएव तेषामर्थपरत्वादेव इतीत्यत्रान्वयः। उक्तमिति तत्रशेषः। द्वितीयतोभेदमाह नहीति। अत्रपूर्वसत्त्वेऽपि न व्यवहारइत्याहात्र हीति। एवंच अत्राध्याससत्वे च। स्वयमाहनेदमिति। अग्रिमतदुक्तमेवाह॥ एतेन तद्विरोधेन। तुर्ये तदुक्तं स्वयमाह विशेषेति। भाष्यसं

(१) इति शब्दोऽनुकरणत्वद्योतक इत्यर्थः।

अतएव तृतीयाध्याये तृतीयेपादे शंकरभगवत्पादैरुद्गीथाधिकरणे, सामानाधिकरण्यं चतुर्धा अध्यासेन अपवादेनैकत्वेन विशेषणत्वेनच। अध्यासेन यथा इयं प्रतिमाविष्णुरिति। नहि तत्र विष्णुबुद्ध्या प्रतिमा बुद्धिर्निवर्तते इति नायमपवादः। अपवादो यथा इदं-रजत मिति। अत्रहि पश्चाद्भाविन्या यथार्थया शुक्तिबुद्ध्याऽस्या बुद्धेर्निवृत्तेरपवादसामानाधिकरण्यमिति व्यवहारः। एवंचाध्यासस्य निरपवादत्वसापवादत्वाभ्यां द्वैविध्यमुक्तम्। एकत्वेन यथा द्विजोत्तमो ब्राह्मणोभूदेवः। नेदं लौकिकवाक्यम्। लोकव्यवहारे एकेनैव विवक्षितार्थसमर्पणात्। अन्यस्यानर्थक्येन पर्यायाणां सहप्रयोगाभावात्। तस्मात् कोशरूपमेतत्

एतेन कोशस्थपदानांपदपरत्व मित्यपास्तम्। विशेषणत्वेन नीलमुत्पलमित्यादौ। अतएव नामन्त्रिते-समानाधिकरणे इतिसूत्रेऽग्ने दंवि सरस्वति इडे काव्ये विहव्ये एतानि तेऽघ्ने नामानि इत्यत्र समानाधिकरण-परत्वप्रयुक्तमाविद्यमानवत्त्वनिषेधमाशङ्क्य सामान्य विशेषवचनत्वाभावमाश्रित्य समाहितम्। अन्यथैकार्थ-बोधकत्वरूपसामानाधिकरण्यस्याप्यत्राभावात्तदसंगतिः स्पष्टैव। एकशेषस्तुन। तत्तच्छन्दस्वरूपस्य सम्यग्बो-

---

मतिमप्याहातएवेति। उक्तोर्थः सूत्रइति भाष्येइतिशेषः। सामान्येति। मात्रस्याभावे इत्यशंकेत्याह सामान्येति। अन्यथा तेषां पदपरत्वे। अत्र प्रवृत्तिनिमित्तभेदो नघटते इति सूचयन्नाहैकार्थेति एतानी त्यादेर्या संबोधितासि एतानि ते वाचकानीत्यर्थः। नन्वेवं कोशे एकशेषापतिरतआहैकेति। अर्थवद्बोधसंभवादाह सम्यगिति। नन्विष्टापतिरत-

धानापत्तेः। कोशस्य चानेकपर्यायाणां स्वरूपबोधनपूर्वकमेकार्थत्वबोधने तात्पर्यात्। तदुक्तम्।

भेदाख्यानाय न द्वन्द्वो नैकशेषो नसंकरः।

इति। भेदाख्यानायेत्यस्य लिङ्गभेदाख्यानाय स्वरूपभेदाख्यानायचेत्यर्थः। लिङ्गभेदाख्यानाय नभः खं श्रावणो नभ इत्यस्य स्थाने खश्रावणौ तु नभसी इति न कृतम्। विष्णुर्नारायण इत्यादौ स्वरूपभेदाख्यानाय नैकशेषः कृतः। तथापूर्वं परत एकलिङ्गानां मध्ये भिन्नलिङ्गपाठ रूपः संकरोऽपि नकृतः। यथास्तवः स्तोत्रं स्तुतिर्नुतिरिति कृतं, नतु स्तुतिः स्तोत्रं स्तवो नुति रित्येवं कृतम्। कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमाहते इत्यस्यानुक्तानां स्थानान्तरानिर्दिष्टानां द्वन्द्व एकशेषश्च नकृतः। अन्येषांतु कृत एव। यथाप्सरोयक्षरक्षोगन्धर्वकिन्नरा इति। मातापितरौ पितराविति। भिन्नलिङ्गानामिति भिन्नस्वरूपाणामप्युपलक्षणम्। विरूपाणामपीति चैकशेषप्राप्तिरतोऽर्थपरतैव कोशे उचिता। क्रमाहते इत्यस्य वर्गाः पृथ्वी पुरक्ष्माभृद्वनौषधीत्याद्युदाहरणम्। तत्र द्वन्द्व संकरौ कृतावेवेत्यलम्।

---

आह कोशस्य चेति। विनिगमनाविर हादाह स्वरूपेति। एतदनुरोधेनोत्तरार्धमपि व्याचष्टे कृतोत्रेति। इत्यस्येति। अर्थ इतिशेषः। विधिलक्ष्याण्याह यथेति। उक्तरीत्याऽन्यूनतांपरिहरतिभिन्नेति। ननुसरूपसूत्रप्राप्तिरेवातआह। विरूपेति। अतः अतोपि। तथातदुक्तितापि।

नन्वेवं खश्रावणौतुनभसीत्यापत्तिरिति चेन्न यथासंख्यसूत्रबलाच्छास्त्रे तथान्वये तस्य साधुत्वेप्यन्यत्रासाधुत्वस्यासिद्धांतितत्वात् तदाहेत्यलमिति। अथविशेषप्रातिपादकार्थमाहसर्वेति। अनतिप्रसंगायाहयावत्त्वमत्रेति नत्वन्यत्रेति भावः। तत्र तस्य तदर्थत्वे। एकेति य·

सर्वशब्दस्य बुद्धि विषयो यावत्वावच्छिन्नसमूहोऽर्थः। यावत्त्वमत्रैकत्वाद्वित्वभिन्नसंख्याकृतपरिच्छेदनत्वं तत्रसमूहस्योद्भूतावयवत्वे सर्वे घटा इति बहुवचनं। अनुद्भूतावयव भेदत्वे एकवचनं, सर्व ओदनो भुक्त इत्यादेः सर्वावयवक इत्यर्थः। अवयवगतसर्वत्वस्यावयविन्यारोपो बोध्यः। बुद्धिविषयत्वेन बुद्धिविषये तदादेः शक्तिः। अतएव तस्यापत्यमिति सूत्रे भाष्ये सर्वनामनिर्देशो विशेषासंप्रत्ययः सामान्यनिर्देशादिति शङ्कितम्। तस्यापत्यमित्यर्थे प्रत्यय इति सूत्रार्थे तस्येति निर्देशात्सामान्यवाचिनस्तच्छब्दादेव प्रत्ययः स्यान्नतूपग्वादेरिति शङ्कार्थंकैयटः। सामान्यवाचिन उत्पत्तेरसंभवाद्विशेषवाचिन उत्पत्तिरिति सिद्धान्तितम्। अपत्यशब्दस्य सम्बन्धिविशेषाकाङ्क्षया तस्यापत्यमित्युक्तावपि आकाङ्क्षाया अनिवृत्तेस्तेन तद्विशेषणायोगाद्विशेषवाचिन एवोत्पत्तेः। यदा प्रकरणात्तदादयो विशेषे वर्तन्ते तदा तस्मादपि (१)प्रत्ययस्त्यादायनिरिति कैयटः। सामान्यरूपेणैव विशेषणविशिष्टस्य भानं प्रकरणादिवशादिति तदर्थः। विशिष्टेऽपि बुद्धिविषयत्वसत्वात्। एवंच तस्यापत्यमित्यादौ तच्छब्दोपादानमपत्याद्यर्थसंबन्ध्युपलक्षणमिति तात्प-

---

थासर्वोलोक इति तादृक्समुदायद्वयादिविवक्षायां द्विवचनादिसर्वौव्यूहौ सर्वे व्यूहा इतिकश्चित्। एकवचने सर्वत्वोपपत्तिमाह सर्वइति अस्यतात्पर्यमाहावयवेति। तदादिस्थले आह बुद्धीति। अतएव सामान्यतस्तत्रशक्तेरेव। कैयटः आह। नन्वेवंत्यादायनिरिति नस्यादत आह यदेति। कैयटः सिद्धान्तार्थमाह। स्वयं तदर्थमाह सामान्येति

---

(१) अत्र बहुवचनस्य न्याय्यत्वेऽपि सामान्यविवक्षयैकवचनम्।

र्थम् । तदुक्तं तस्येदमितिसूत्रे कैयटेन षष्ठ्यन्तमात्रं तस्येतिप्रकृतित्वेन विवक्षितं तत्प्रतियोगिमात्रं च प्रत्ययार्थत्वेन, यत्त्वपरं लिङ्गसंख्याप्रत्यक्षपरोक्षत्वादिकं तदविवक्षितमिति ।

एतदभिप्रायेणैव सूत्रोपक्रमे तस्येदमित्यपत्येऽपि सिद्धमित्युक्तम् । शेष इति सूत्रे च भाष्य उक्तं तस्येदमिति विशेषा ह्येतेऽपत्यं समूहो निवास इति । तस्येदमितिसूत्रे इदं पदार्थप्रवृत्तिनिमित्ताश्रया व्यक्तिविशेषा एते इति तदर्थः । अतएव तस्मिन्नितिसूत्रे भाष्ये सर्वनाम्ना निर्देशः क्रियते सर्वनाम च सामान्यवाचि तत्र सामान्ये निर्दिष्टे विशेषा अप्युदाहरणानीति । व्यापकं सामान्यं व्याप्यं विशेषः तत्त्वं च विवक्षाधीनम् । अतएव गोकृष्णयोः परस्परं सामान्यविशेषभाव इतिच । तत्र सामान्यवाचीत्यनेन सकलसाधारणसामान्यमेव प्रवृत्तिनिमित्तमित्युक्तम् । नच काव्यप्रकाशेऽनेकार्थशब्दस्य वाचकत्वे नियन्त्रित इत्येतदुदाहरणावसरे एतावन्मात्रस्तनिकेत्यादावभिनयेन शक्तिसंकोच इत्युक्तम् तद्विरुध्यते, तदादीनां त्वद्रीत्या नानार्थत्वादितिवाच्यम् । शक्यतावच्छेदकानेकत्व इव

---

भाष्याविरोधायेतिभावः । अत्रबीजमाह विशिष्टेऽपीति । सिद्धांततात्पर्यमाहैवंचेति । मात्रमुभयत्रकार्त्स्न्ये एतादिति । तत्सूत्रस्य कैयटोक्तार्थे त्यर्थः यथाश्रुतेऽसंगतेराह । तस्येदमिति । भाष्यांतरेऽप्याहातएवेति । उक्तोर्थः तत्र तस्य तत्वे सति । तत्रत्यमेव भाष्यांतरमाह व्यापकमिति । तत्वमपि न नियतमित्याह तत्वंचेति । व्यापकत्वादिकं चेत्यर्थः । प्रकृतेष्टमाह तत्रेति । उक्तभाष्ये इत्यर्थः । यत्तु तदादेर्घटत्वपटत्वादिकमेव शक्यतावच्छेदकमिति नानार्थत्वमेव शक्यता-

शक्यतावच्छेदकव्याप्यधर्माणां नानात्वेऽप्यनेकार्थत्वात् ।

परे तु घटमानयेत्युक्ते तैलघटजलघटघृतघटानां मध्ये तत्तत्प्रकरणे तत्तद्घटानयनम् । अतएवा 'क्ताः शर्करा उपदधाती'त्यादौ 'तेजो वै घृत'मिति लिङ्गादक्ता इत्यस्य घृतसाधनाञ्जनपरत्वमिति हेलाराजादिभिरुक्तम् । हरिणा च शब्दार्थस्यानवच्छेदे इत्येवोक्तम् । एवंच संयोगादि शक्यतावच्छेदकानेकत्वे एव निर्णायकमित्युक्तम् । प्रकाशेऽनेकार्थस्येत्युक्तिस्तु तत्र द्वितीयार्थव्यञ्जकतायाः स्फुटतया व्यंजनानिरूपणप्रस्तावादित्याहुः ।

यत्तु यद्यत्पदं यादृशयादृशधर्मावच्छिन्नविषयकबुध्या प्रयुज्यते तत्तत्पदबुद्धिविषयतावच्छेदकोपलक्षिततादृशतादृशधर्मविशिष्टे शक्तमिति शक्तिग्रहः । बुद्धि-

---

वच्छेदकानेकत्वात् अतएव काव्यप्रकाशसंगतिः । तेषां केनचिद्रूपेणानुगमस्तु शक्तिग्रहसौकर्यायैवेति कश्चित्तन्मतं खंडयति नचेति । अत्र मतेऽति प्रसंगापत्तेः ।

सिद्धांतमाह परेत्विति । घृतसाधेति बहुव्रीहिः । वोक्तं संयोगो विप्रयोगश्चेत्यादौ । एवे नानेकार्थस्येत्यस्य व्यवछेदः । एवंच उभयसंमतत्वे च । नन्वेवं प्रकाशासंगतिरेवातआह प्रकाशे इति । तत्र अनेकार्थशब्दस्थले । परमतं खंडयति यत्विति । सामान्यलक्षणानंगीकारेण तत्पदप्रयोगोत्तरं प्रयोज्यप्रयोजकवृद्धयोर्बुद्धिप्रकारतया गृहीतघटत्वादिविशिष्टव्यवहारदर्शनात्तत्रतत्पदस्य शक्तिं गृहीत्वा पुनर्व्यक्त्यंतरविषयः । शक्तीति । सामान्यतइत्यादिः । अत्रबुद्धिविषयत्वस्य शाब्दबोधेऽभानात्तद्विशिष्टस्य धर्मितावच्छेदकाख्यविषयतयाशक्तिग्रहाविषयत्वेन तस्योपलक्षणत्वमिति भावः । नन्वेवं क्वाचित्तथेष्टबोधो नस्यादतआह बुद्धीति । अतएवतथा शक्तिग्रहादेव । प्रकरणा-

विषयत्वस्यापि तदुपलक्षितत्वात् कदाचित्तेन रूपेणापि बोधः। अत एव तत्पदात्कदाचिद्घट इति। कदाचिज्जातिमानिति। कदाचिज्जातिमान् घट इति।कदाचिद्बुद्धिस्थ इति बोधः। तावदर्थनिरूपिता शक्तिरेकैव। हर्यादिपदशक्यतावच्छेदकानां तु न तेनानुगमः। तेभ्य एकस्य नानारूपेण बोधाननुभवात्। अतएव तेभ्यो नकदाचिदपि जातिमान् हरिरित्यादिक्रमेण बोध इति। तन्न। तेषां तेषां धर्माणां विशिष्य ज्ञानाभावेन तत्तद्रूपेण शक्तिग्रहाभावात् तथा बोधासंभवात्! अस्म तु बुद्धिविषयत्वेन तदाश्रये शक्तिग्रहान्न दोषः। सर्वस्यापि बुद्धिविषयत्वेनैव बोधादिति दिक्।

अत्र तदिदमादीनां पर्यायत्ववारणाय परोक्षत्वाद्यपि शक्यतावच्छेदककोटौ निवेशनीयम्। एवं यच्छब्दशक्यकोटावुद्देश्यत्वं, तदो विधेयत्वमिति।

---

दिगृहीततात्पर्यवशादाह कदाचिदिति। तदुपलक्षणफलमाह तावदिति। नन्वेवंहर्यादिपदशक्यतावछेदकानामप्युलक्षणीभूतबुद्धिविशेषविषयत्वादिनाऽनुगमसंभवेन नानार्थोच्छेदापत्तिरत आह हर्यादीति। एवं च तेषां नानार्थत्व मेव॥ अन्यथा तेभ्योपि तथा बोधापत्तिरित्याहात एवेति।

एतेन कांचिद्धर्मं प्रकारीकृत्य भासमाने धर्मे भासमानं धर्मितावच्छेदकत्वं तद्विशिष्टे एव भासते अतएव जातित्वावच्छिन्नवच्छक्ताज्जातिमत्पदान्न कदाचित् स्वरूपतो घटत्वादिप्रकारिका धीस्तस्माद्बुद्धिविषयघटत्वादिनैव बोधः कदाचित् घटत्वादिनापि बुद्धिविषयत्वांशेऽनुद्बुद्धसंस्कारतारूपमोषात्। अतएत रक्तदंडवैशिष्ट्येनानुभवेपि रक्तत्वांशेऽनुद्बुद्धसंस्कारस्य दंडवैशिष्ट्येनैव स्मरणमित्यप्यपास्तं तदाहेतिदिगिति। अत्रपक्षे। आदिना प्रत्यक्षत्वसांनिहित-

इदं तु बोध्यम् । तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषय उद्देश्यो यत्पदार्थोऽतस्तेनार्थप्रत्यायने नियमतस्तत्पदापेक्षा तत्रोत्तरवाक्यगतयच्छब्दस्य तच्छब्दापेक्षासमर्थत्वेन न तत्र तच्छब्दोपादानापेक्षा । यथा—

'साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके'

इत्यादौ । एवं तत्पदं यत्पदप्रतिपाद्यतया वक्तृबुद्धिविषये विधेये शक्तं तत्र प्रसिद्धानुभूतप्रक्रान्तार्थकतच्छब्दस्य यच्छब्दापेक्षासमर्थत्वान्न तत्र यच्छब्दोपादानापेक्षेति काव्यप्रकाशादौ विस्तरः । तत्रेदमेतदोः प्रत्यक्षेऽदसो व्यवहिते शक्तिस्तदुक्तम् ।

इदमस्तु संनिकृष्टे समीपवर्ति चैतदो रूपम् ।
अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात्

इतीत्यलम् । एतच्च तस्येदमिति सूत्रे भाष्ये स्पष्टम् ।

परेतु परोक्षत्वाद्येव तदादेः शक्यतावच्छेदकं प्रकरणादिवशाच्च तत्तद्विशेषबोधः । वक्तृश्रोतृबुद्धिस्थत्वमेव हि प्रकरणं एतावतैव सर्वनाम्नां बुद्धिस्थपरामर्शकत्वमिति प्रवादः । तेषां प्रकरणज्ञानं वि-

---

त्वादि तदः शक्यकोटौ । इतिस्तत्समाप्तौ । सिद्धांतमाहेदंत्विति । तेन यच्छब्देन । तत्रापि विशेषमाह तत्रेति तस्यां सत्यामित्यर्थः। तत्र तत्र शक्तत्वेनिवेश्यस्य विषयविवेकमाह तत्रेति । तदादीनां मध्ये इत्यर्थः। संनिकृष्टे विप्रकृष्टे इति पाठः। यदित्यपिपरोक्षे तदाहालमिति।एतच्चेति। इदंच प्रागुक्तकैयटतो व्यक्तं।

सिद्धातमाह परेत्विति । नन्वेवं कथंविशेषबोधोऽत आह प्रकेति । चस्त्वर्थे । ननु तत्र न प्रकरणमुभयाकांक्षादीत्यतआह वक्रिति। नन्वेवमत्र प्रवादोच्छेदोऽतआहैतेति । अस्यार्थमाह तेषामिति । तदा-

ना सर्वथा विशेष्यबोधाजनकत्वात् । अतएव तस्या-प्रत्ययसूत्रस्थपूर्वोक्तशङ्कापरभाष्यस्थं सामान्यनिर्देशा-दिति प्रतीकमुपादाय तस्येति सामान्यनिर्देशात्तच्छ-ब्दादेव सामान्यवाचिनः प्रत्ययः स्यादिति कैयटे-नोक्तम् । अन्यथा तच्छब्दादिभ्य इति वदेदित्याहुः ।

केचित्तु एवं युष्मदः संबोध्यत्वमस्मद उच्चारयि-तृत्वं प्रवृत्तिनिमित्तं तेन रूपेणैव बोधानुभवात् । दे-व्युवाच–'मयात्वयि हतेऽत्रैव गर्जिष्यन्त्याशु देवता' इत्यादौ ऋषिवाक्योच्चारणकाले आनुपूर्वीसामान्येन देवीवाक्यस्याप्युच्चारणात् देवीमहिषासुरयोस्तद्वा-क्यप्रयुक्तत्व-संबोध्यत्वप्रतिसंधानादेव ताभ्यां देवीम-हिषासुरप्रतीतिः। अनुवादकऋषितत्संबोध्ययोस्तु न प्र-तीतिस्तात्पर्याभावात् । मौनिनापि पदोच्चारणपूर्वक-मेव लिखनेन तल्लिखिताहंपदादुच्चारयितृत्वेन प्रती-तिराविरुद्धा, उच्चारणमनुसंधानोपलक्षणं वेत्याहुः ।

---

दीनामित्यर्थः । अतएव परोक्षत्वादेर्भिन्नस्य शक्यतावच्छेदकत्वादेव । अन्यथाबुद्धिविषयत्वस्य सामान्यस्य शक्यतावच्छेदकत्वे प्रागुक्ते प्रा-चीनादिमतमाह केचित्त्विति । एवं तदादेः परोक्षत्वादाविव संबो-ध्यतावच्छेदकत्वरूपानुगतधर्मोपलक्षितचैत्रत्वादिकं प्रवृत्तिनिमित्तमि-ति मतनिरासायाहैतेनैवेति ।

नन्वेवं क्वचिद्दोषोनुच्चारणादत आहदेव्युवेति । अनेन ततस्त-ज्ज्ञानेप्यनिर्वाहादाहोच्चारणादिति । ताभ्यां युष्मदस्मद्भ्यां । अतिप्र-सङ्गं निराचष्टेऽनुवादकेति । नन्वेवं मौनिपुरुषलिखिताहंपंडित इति-वाक्यस्थास्मत्पदेन मौनिबोधो न स्यात्तस्योच्चारयितृत्वाभावादत आह मौनीति । कुटादित्वेनाह लिखनेनेति । तदनुभवादाहोच्चेति । अत्रारुचिकथनपूर्वकसिद्धांतमाह—

परंतु क्रियाविनियोगफलकमभिमुखीकरणं संबोधनं, तद्विषयत्वं च संबोध्यत्वं, नचैतत्त्वं पचसीत्यादौ प्रतीयते अभिमुखीभूतेऽपि तत्प्रयोगात् । तस्मात्प्रयोक्तुरहंकारानास्पदचेतनत्वेन युष्मदः शक्तिः । स्पष्टं चेदं पुरुषसमुद्देशे हरिग्रन्थे इत्याहुः । नन्वेवं सति 'युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोः तमःप्रकाशवद्विरुद्धस्वभावयो'रिति शांकरभाष्यानुपपत्तिः । तद्भाष्याद्धि युष्मदो जडे शक्तिरस्मदश्चेतने इति स्पष्टं लाभ्दिाम् । तत्र तूभयोरपि चेतने शक्तत्वेन तदसंगतिरिति चेन्न । तत्वज्ञशक्त्या तथोक्तेरित्याहुः ।

किंपदस्य जिज्ञासाविषये शक्तिः यत्रच किंपदार्थान्वयस्तत्र वा यदन्वयस्तद्वृत्तिधर्मव्याप्यधर्मावच्छिन्नो जिज्ञासाविषयत्वेन तच्छक्यः स्वीयजिज्ञासाज्ञापनाय किंपदघटितवाक्यप्रयोगात् । अतएव कः पचतीति प्रश्ने विप्रः पचतीत्याद्येवोत्तरं, नतु प्रमेयं पच-

---

परेत्विति । न चनहि अभीति क्रियायामित्यादिः । अतएवात्रसंबोधनाप्रयोगः । शक्तिरिति । तस्य तदास्पदचेतनत्वेनास्मदः शक्तिरित्यपि बोध्यं । क्वचित्तथा पाठ एव । स्पष्टमिति । यथाचैतत्तथाप्रतिपादितं प्राक् । एवंसति उभयोश्चेतनशक्तत्वे सति । तस्यभेदाभावादाह तत्वज्ञेति । अयं वक्ष्यति तत्स्वरूपमाह यत्रेति । विनिगमनाविरहादाह तत्रवेति । लाघवादाह जिज्ञासेति । तत्तत्किम् तत्र शक्तौ मानमाह स्वीयेति । अतएवउद्देश्यवाचककिंपदस्य समभिव्याहृतपदोपस्थाप्यधर्मं व्याप्यधर्मावच्छिन्नं एव तेन शक्त्यभ्युपगमादेव । व्यवच्छेद्यमाह नत्विति । अन्यथा तज्जन्यज्ञानस्यापि तादृशेच्छाविषयत्वात्तदप्युत्तरं स्यादिति भावः । भूतविशेषधर्मप्रकारकज्ञानेति पाठः । उक्तोत्तेति । वि-

तीति। जिज्ञासाविषयकर्तृकः पाक इति प्रश्नार्थः। तद्विषयजिज्ञासायास्तदिच्छाविषयीभूतज्ञानजनकात्तु प्रश्नोत्तरवाक्यान्निवृत्तिः। को ब्राह्मणः पचतीति प्रश्ने च चैत्रः पचतीत्येवोत्तरं नतु मनुष्यः पचतीति। अयं क इत्यादौ समभिव्याहृतपदोपस्थाप्यधर्मावच्छिन्नविशेष्यतानिरूपितविधेयतायास्तद्व्याप्यधर्मावच्छिन्नो जिज्ञासाविषयतया शक्यः। अतएव तत्रायं ब्राह्मण इत्येवोत्तरं एवंच प्रश्नवाक्यात्समभिव्याहृतधर्मव्याप्यधर्मप्रकारकं ज्ञानमिष्टसाधनमिति ज्ञानजन्या तादृशज्ञानं मे जायतामितीच्छा जायते, उत्तरेण चविप्रत्वादिरूपविशेषधर्मावच्छिन्नप्रकारताशालिज्ञानोत्पत्त्या तन्निवृत्तिः, इष्टसाधनताज्ञाने तु तादृशधर्मांशे विशेषधर्मानवच्छिन्नप्रकारताशालीत्येव ज्ञानानि विषयः।

एवं प्रश्न वाक्ये यत्प्रधानं तत्समानलिङ्गवचनशब्देनैवोत्तरं यथाकथंचित् प्रश्नविषयजिज्ञासानिवर्त-

---

प्रः पचतीत्यादित एव तन्निवृत्तिर्नतु प्रमेयं पचतीत्यादित इति तादृशप्रश्नानंतरं तदेवोत्तरं न तदित्यर्थक इति। अत्राभेदेन(१)स्वार्थान्वितोद्देश्यवाचकपदांतरसमभिव्याहृतकिंपदस्य स्वार्थाभेदान्वयिपदार्थतावच्छेदकधर्मव्याप्यधर्मावच्छिन्नेति न शक्तिरिति भावः। एवमुद्देश्यवाचककिंपदस्थले उक्त्वाविधेयवाचककिंपदस्थले आहायमिति। पंचम्यंतस्य क्षायते इत्यत्रान्वयः। तद्व्याप्येति समभिव्याहृतपदोपस्थाप्यधर्मव्याप्येत्यर्थः। हृतधर्मेति। हृतपदोपस्थाप्यधर्मेत्यर्थः। जन्येति प्रयोक्तृगतेति भावः। उत्तरेणेति विप्रः पचतीत्यादिवाक्येन चेत्यर्थः। तादृशधर्मांशे विप्रत्वरूपधर्मवान्पाककर्त्तेति बोधादितिभा-

---

(१) स्वार्थोचितो इति पा०

कत्वं च एवंच के शिष्या अस्येति प्रश्ने कठा इत्येवो-त्तरं नतुकठ इति। एवं किंशिष्योऽयमिति (१)बहुव्रीहि-समासेन प्रश्ने कठ इत्येव नतु कठा इति। तस्य क-ठत्वे शिष्याणां कठत्वमर्थप्राप्तमित्यार्थमिदमुत्तरमि-त्यनेकमन्यपदार्थे इतिसूत्रे भाष्ये स्पष्टम्। मुखं कि-मिन्दुरित्यादावव्ययाकिमो वितर्कोऽर्थः। वितर्कश्च सं-भावनात्मकं ज्ञानं इन्दुप्रकारकसंभावनाविशेष्यं मुख-मित्यर्थः। संभावनाप्रयोजकाह्लादकत्वादिसाधर्म्यप्रती-तिस्त्वर्थात्। धनमिदं किं चैत्रस्येत्यादेश्चैत्रस्वामिकं त-त्वेन संभावनाविशेष्यं धनमित्यादिरर्थः। किंगौरि-त्यादौ कुत्सार्थकोऽपि सः।

---

सः। नन्वेवमिष्टसाधनताज्ञानादेवतज्ज्ञाने तथातस्तद्विषयेच्छात आ-हेष्टेति। तत्र समभिव्याहृत धर्मत्वादिनैव निवेश इति भावः। विशेषांतरमाहैवमिति। यथेति तदेवेत्यादिः। विशेष्य-तया विशेषणतया वेत्यर्थः। तत्राद्ये आह क इति। द्वितीये आह एवमिति। नन्वेतावता न जिज्ञासानिवृत्तिरिति नद्वितीयविषयताऽ तआह तस्येति। इत्यनेकमिति। समासेन तादृशप्रश्ने आर्थमेवोत्तरं वाक्येनप्रश्ने तु शाब्दमेवोत्तरं न कदाचिदार्थमितीत्यर्थः। ज्ञानं प्र-योक्तृः अभेदान्वयादाहेंदुप्रेति शेष्यं मुखमिति पाठः। अस्यविशे-ष्यनिष्ठत्वात्। अतएव योत्तरात्वप्र कारक ज्ञानविशेष्येति। भाव-नैव विशेष्येति। धातूपस्थाप्यातिङर्थं प्रति विशेष्येति। संबोधनं प्रकृत्यर्थंप्रति विशेष्यमिति द्वितीयाथाश्रये आधेयतया फलं विशे ष्यमिति च अभियुक्तप्रयोगो राजा विशेषणं पुरुषो विशेष्य इत्यादि-भाष्यप्रयोग स्त्रीदाराद्यैर्यद्विशेष्यमित्यमरप्रयोगश्च संगच्छते। एवं वि-शेष्यं धनमित्यग्रेपि पाठः विशेष्य इत्यपपाठः। विशेष्यं धात्वर्थ इत्यग्रिमप्रयोगे सामान्ये नपुंसकं प्राक् प्रयोगात् इति बोध्यं। दिसेति तद्रूपसाधर्म्येत्यर्थः। शाब्दसंभावनाबोधोत्तरमिति भावः। कंतत्वेनेति।

---

(१) के शिष्या यस्येति. बहुव्रीहिणेत्यर्थः।

स्वपदस्य तद्भिन्नवाक्यघटकक्रियान्विते समभि-व्याहृतपदोपस्थाप्ये शक्तिः। तेन चैत्रस्य भ्राता स्वं पुत्रं पश्यतीत्यादौ स्वशब्देन न चैत्रप्रतीतिः। स्वपुत्रं दर्शितचैत्रं मैत्रः पश्यतीत्यादौ तात्पर्यवशाच्चैत्रपुत्र-मैत्रपुत्रान्यतरप्रतीतिः। कलशो निजहेतुदण्डज इत्यादा-वध्याहृतक्रियान्वयिनः कलशस्य स्वशब्दसमानार्थक-निजपदेन प्रतीतिः। सर्वत्राप्युत्सर्गतः प्रधानपरा-मर्शित्वमित्यस्य प्रधानान्वयिपरामर्शित्वमित्यर्थः। एवमात्मीयधनज्ञातिवाच्यपि स्वशब्द, ऐश्वर्यवाच्यपि स्वामीति प्रयोगविषय इत्यन्यत्र विस्तरः।

एकशब्दः केवलेऽपि शक्तः कैवल्यं द्वितीयरहि-तत्वं द्वितीयशब्दश्च सजातीयसहाये रूढः। एवंच तत्तत्क्रियाकर्तृत्वादिविशिष्टसजातीयराहित्यं कैव-ल्यम्। अयमेकोत्र भुङ्क्ते इत्यादावेतद्देशाधिकरणभो-जनकर्तृसजातीयरहितो भुङ्क्ते इत्यादिरीत्या बोधः। अतएव एकाकी हयमारुढ़ेत्यादौ नानुपपत्तिर्हयस्य द्वि-तीयस्य सत्त्वेऽपि तस्य सजातीयत्वाभावात्। एवं योद्धृत्वेन सजातीयाभावेऽश्वादिपालकमनुष्यसत्त्वेऽ-

---

चैत्रस्वामिकत्वेनेत्यर्थः। स्वामिकत्वेन समिति पाठांतरं। युक्तं चैतत् कुत्सार्थकोऽपीति पाठः। तदिति स्वेत्यर्थः। समभिव्याहारश्चात्रैकवा-क्यघटकत्वं अतएव सकारक एव तदाह तनात। शक्तिश्चास्त्येवै-वेति बोध्यं।

कारकद्वयसत्त्वेन प्राप्तातिप्रसंगमिष्टापत्त्या परिहरति स्वपुत्रेति। अव्यवस्थादिनिरासायाह तात्पर्येति। अःकिमुचक्रस्वामिकारितो गुण इत्यादि ग्राह्यं। नन्वेवं नियमभंगापत्ति रतआह सर्वेति। अन्यत्र उद्यो-तादौ। अपिना संख्यादिसाजात्यं चाबैवक्षिकमित्याह एवमिति। अत-

नि एको रसं गच्छतीत्युपपद्यत इति दिक् ।

दिग्वाचकपूर्वादिशब्दानां स स शब्दः प्रवृत्तिनिमित्तम् । एकस्या अपि दिश उपाधिभेदात्तत्तच्छब्दवाच्यता । तत्र मध्याह्नसूर्यसंयोगवान् देशो मध्यं, तत उदयाचलदेशोपाधिका पूर्वा दिक् । ततोऽस्ताचलपर्यन्तदेशोपाधिका प्रतीची, तत एव मध्याह्नसूर्यसंमुखयावदेशोपाधिका उदक् । तत्पृष्ठस्थयावद्देशोपाधिका दक्षिणा । मध्याह्ने सूर्यस्योदङ्मुखत्वात् । अतएवान्तर्भाविताथयो दिक्शब्दाः । देशादौ तु शब्दोपात्तावध्यपेक्षेति हेलाराजः ।

दिक्चेदमस्मादित्यवध्यवधिमद्भावप्रयोजिकोत्क्षेपणादिक्रियाभेदप्रयोजिका ऋजुवक्रत्वादिव्यवहारप्रयोजिका द्रव्याणां परापरव्यवहारप्रयोजिका च शक्तिः । एकादिक्कमवयवप्रसारणं ऋजुता । अनेकदिक्कं वक्रता । पूर्वमभूत्परतो भविष्यतीति क्रियापौर्वकाल्यमेव कालकृतमिति न दिक्कालशक्त्योरैक्यम् । नापि

---

एवेत्यस्यार्थमाह हयस्येति । मनुष्यत्वादिनैव साजात्यस्य विवक्षितत्वादिति भावः । अतएवाहैवमिति । आदिना श्वादि एवंच स्वभोजनकाले मार्जारादिभोजनेऽपि एकोऽत्र भुंक्ते इति न प्रयोग इत्यादिबोध्यं तदाहेति दिगिति ।

ननु दिश एकत्वात्कथमिदमत आहैकस्या अपीति । उपाधिभेदमेवाह तत्रेति । उपाधीनां मध्ये इत्यर्थः । ततः मध्यात् । एवमग्रेऽपि । अतएव विशिष्टसंयोगाधित्वादेव । अर्थमध्ये इति शेषः । शब्दोपात्तेति । बाह्येत्यादि । दिक्सत्त्वे मानान्याह दिक् चेदमिति । अत्र सर्वत्र साक्षात्कारणाभिन्नत्वात्प्रयोजकत्वनिर्देशः शक्तिरीश्वरस्य । अन्येषां स्पष्टत्वात्तान्युपेक्ष्यात्राहैकेति । ननु कालशक्त्यैव तद्व्यवहारोपपत्तौ

तयोः स्वतन्त्रद्रव्यत्वम् । परोपाधितयैव तदा प्र-
तीतेः । सर्वत्र च तत्कार्यदर्शनात्तयोर्विभुत्वं, सर्वत्र-
कार्यसंपादकत्वमेवामूर्तानां विभुत्वं, देशानां पूर्वापरा-
दिव्यवहारोऽपि दिक्कृत एव । पूर्वदिगादिस्थानां तेषां
पूर्वादित्वात् । यस्त्वभिमुखः पूर्वः, पृष्ठस्थः पश्चात्
हस्तदक्षिणो हस्तवाम इति व्यवहारः स न दिगपेक्षः ।
प्रत्यङ्मुखस्य यत्पश्चाद्देशस्थं तस्य प्राङ्मुखत्वे पूर्वदेश-
स्थत्वेन प्राङ्मुखोऽन्नानि भुञ्जीतेत्यादावव्यवस्थापत्तेः
किन्तु तत्र वक्तृसंमुखदेशत्वाद्येव पूर्वादिशब्दप्रवृ-
त्तिनिमित्तम् । एवं तत्तदवधिकोदयाचलास्ताचलसं-
निहितत्वमपि देशवृत्तिपूर्वापरशब्दयोस्तत् । पूर्वदिग-
भिमुखं स्थितस्य दक्षिणवामहस्तसंनिहितत्वमपि देश-
वृत्ति दक्षिणोत्तरशब्दयोस्तत् । पूर्वाध्युषितत्वं पूर्वा-
र्जितत्वमपि पूर्वशब्दार्थः पूर्वस्मिन् देशे वसतीत्यादौ
तथा प्रतीतेः । सर्वं चेदं हरिग्रन्थे हेलाराजीये च
स्पष्टम् ।

विंशत्यादयः स्वभावात्संख्यायां संख्येये च, (१)तेन

किमर्थमेतत्स्वीकारोऽत आह पूर्वमिति । कालमेव काल्यादिकमेव एवेनो-
क्तव्यवच्छेदः । स्वतंत्रेति किंत्वंगद्रव्यत्वं । नन्वेवं कथं विभुत्वमत आह
सर्वत्रेति । नकेवलमत्रैव किंत्वन्यत्रापीत्याह सर्वत्रेति । फलांतर-
माह देशानामिति । अतिप्रसंगस्तुनेत्याह यस्त्विति । अभिमुखः पूर्व
इत्येको व्यवहारः । पृष्ठस्थः पश्चादित्यपरः । अग्रे द्वौ । एवेनोक्तव्य-
वच्छेदः । एवमन्यत्रापि । तद्भेदानाहैवमित्यादिना । तत्तदिति वैवक्षि-
कमितिभावः । तत् प्रवृत्तिनिमित्तं । आदिना पूर्वतनं द्रव्यं भुंक्ते इति ।
उक्तज्ञातस्य निर्मूलत्वमपाकरोति सर्वंचेदमिति । विंशत्याद्या इत्य-

(१) वर्तन्ते इति पाठोऽधिकः पु० ।

विंशतिर्गवां विंशतिर्गाव इति च। यदाप्येते समुदायवचनास्तदापि समूहस्यानुद्भूतावयवत्वे गवामिति षष्ठी उद्भूतावयवत्वेन संघसंघिनोरभेदविवक्षायां सामानाधिकरण्यमुभयत्राप्येकवचनान्ताः। अन्त्येऽपि शब्दशक्तिस्वभावान्नियमेन धर्मनिष्ठसंख्याया धर्मिण्यारोपेणैव प्रयोगः, वेदाः प्रमाणमितिवत्। तेषानवतेः स्त्रियां, गावोधनमित्याद्येवमेव धर्मनिष्ठसंख्यानारोपे तत्र गावो धनानीत्यपीति विशेषः। संख्यापरत्वं च द्रव्याद्भेदेन संख्याबोधनम्। यथाऽऽस्ये गवां त्रिंशतिमानयेत्यानयनादिक्रिया द्रव्ये एव धर्मे तस्या असंभवात्। धर्मधर्मिणोरभेदाद्वेति 'पङ्क्तिविंशति' इतिसूत्रभाष्योक्तरीत्या बोध्यम्। अभेदेन बोधने संख्येयपरत्वमिति बोध्यम्। एकशेषेण विंशती विंशतय इत्यादीष्टमेव।

द्रोणप्रस्थादिशब्दाश्चेयत्ताविशेषावच्छिन्नपलादिपरिच्छिन्नधान्यादिपरिच्छेदकत्वसमानाधिकरणजातिविशेषरूपद्रोणत्वाद्यवच्छिन्ने शक्ताः। प्रवृत्तिनिमित्तं

---

यदोक्तमाह विंशतीति। तेन उभयेन। द्वितीयविशेषमाह यदाप्येते इति। समुदितवचनांतत्वेऽपि कथंसंख्येयपरत्वमत आहांत्येपीति संख्येयपरत्वेपीत्यर्थः। प्रसंगादाह गाव इति। अनतिप्रसंगायाह संख्येत्यादि। अनेन गवामिति षष्ठीत्यस्यापि संग्रहः। अतएवाह यद्यप्याप्ये इति। तत्रापि तत्पक्षेपि बोधने सति। एकवचनांतत्वमुक्तार्थे एवेत्याहैकेति। द्रोणेति। प्रथमासूत्रे उदाहृतत्वेन पूर्वोपास्थितत्वादस्य पूर्वनिपातः। नन्वेवंशक्यतावछेदकगौरवमतआह प्रवृत्तीति। एवंन तस्य प्रवृत्तिनिमित्तत्वव्यवछेदः। भानंतु धर्मितावछेदकत्वेनेत्याद्युक्तद्वितीयप्रकारेण, तदर्थमेव लिंगवादित्युक्तम्। प्रातिपदिकार्थेति। तत्रहि

तु द्रोणत्वाद्येव । परिच्छेदकत्वं तु लिङ्गवत्तत्समाना-धिकरणमेव प्रातिपदिकार्थसूत्रे भाष्ये ध्वनितमितदि-त्याद्यूह्यम् । गोशब्दस्य स्त्रीत्वसमानाधिकरणं पुंस्त्वसमानाधिकरणं च गोत्वं शक्यतावच्छेदकमिति नानार्थोऽयम् । तत्राद्यं प्रसिद्धमन्त्यं तात्पर्यग्राहक-सापेक्षं बोध्यम् । अत एव गौरित्येतन्मात्रात्स्त्रीव्य-क्तीनामेव बोधः स्वरसतः । अतएव गोबलीवर्दमि-त्यादौ सामान्यविशेषभावाभावात् द्वन्द्वः सिद्धः । अन्त्यस्तु गौर्वाहीक इत्यादौ एतान् गाश्चतुरो बली-वर्दान् पश्येत्यादौ प्रथमयोरितिसूत्रभाष्योदाहृते च ।

एतदेवाभिप्रेत्य त्यदादीनीति सूत्रे 'सामान्यवि-शेषवाचिनोर्द्वन्द्वो ने'ति वक्तव्यम् । एवं हि सति शू-द्राभीरं गोबलीवर्दं तृणोलपमित्यादौ नस्यादित्याश-ङ्कायामाभीरा जात्यन्तराणि, उलपमित्यपां लामर्धेय-मित्यादिना त्रिधापि सामान्यविशेषभावाभाव उक्तो भाष्ये । गोबलीवर्दमित्यत्र गाव उत्कालितपुंस्का वा-हाय च विक्रयाय च स्त्रिय एवावशिष्यन्त इत्युक्तम् । वाहाद्यर्थं पृथक्कृतपुरुषाः स्त्रिय एवगोशब्दव्यवहा-र्यत्वेनावशिष्यन्त इति तदर्थः । लोकव्यवहारेऽप्येव-मेवेत्यलम् ।

---

द्रोणादिषु प्रथमार्थपरिमाणग्रहणमित्युक्तं तस्यापि प्रवृत्तिनिमित्तत्वे तु प्रातिपदिकत एव तल्लाभात्तदानर्थक्यमेव तस्मात्तथैव तत्तु भासमानमपि लिंगवद्विशेष्यान्वय्येव । द्रोणः परिमाणमिति तु द्रोणा-दिशब्दानामनेकार्थत्वान्निर्णयाय । द्वौ ब्राह्मणावितिवद्धेतिबोध्यं । तदाहेत्याद्यूह्यमिति । गोत्वं शक्यतावच्छेदकमिति पाठः । शक्यामिति पाठे प्रकारतयेत्यादिः । जातिपक्षे वा । अतएव अंत्यस्य तत्सापेक्षत्वा

धेनुशब्दस्य धानकर्मत्वं प्रवृत्तिनिमित्तम्। धेट्-पाने इत्यतः कर्मणि नुप्रत्ययसत्त्वात्। अतएवार्वीढे धेनू इत्यादिप्रयोगाः संगच्छन्ते। हविर्धान्यस्मि धेनुषु इति भागवतप्रयोगश्च हविर्धानी गौः। एतेन गोत्वसमानाधिकरणं धानकर्मत्वं प्रवृत्तिनिमित्तमित्यपास्तम्। नचोक्तप्रयोगे लक्षणा शक्त्यैवोपपत्तेः। नचाथैष भूस्त्रिवृदेव सर्वस्तस्य विश्ववत्यस्तोत्रीया धेनुर्दक्षिणेत्यत्र, द्यावापृथिवीभ्यां धेनुमालभेतेत्यत्र च गवामेव प्रतीतिर्न स्यादिति वाच्यम्। अपशवो वान्ये गोऽश्वेभ्य इतिश्रुतेः प्रशस्तत्वेन तत्र गवामेव प्रतीतेः। वडवानां तु न दक्षिणात्वम्। 'भागित्वाद्वा गवा'मिति जैमिन्युक्तेः। भागित्वमुपकारकत्वम्। द-

---

देव। अतएव विशिष्टस्य निमित्तत्वादेव। गोपदव्याख्या बलीवर्दानिति अतएवैतानिति संगतिः एतदेव विशिष्टं प्रवृत्तिनिमित्तमेव। एवंहिनिषेधांगीकारे हि। आदिसं ग्राह्यमेवाह गोवेति आदिना विक्रयः। एतेन गोबलीवर्दन्यायो निरस्तस्तदुल्लेखंकुर्वन्तः सकलग्रंथकारा अपीत्यन्यत्र स्पष्टं तदाहेत्यलमिति। धानं पानं न धारणादीतिसूचयंस्तत्र मूलमाह धेडिति। अतएव रूढौ मानाभावेन केवलयौगिकत्वादेव॥ तैत्तिरीयश्रुतौ सोमायेत्यनुवाकस्थप्रयोगमाहार्वीति। वेदभाष्यतत्सूत्रकपर्दिभाष्यसंमतमिदं। एतेनार्वीति पूर्वान्वितमित्यग्निनाकारोक्तमपास्तं। आदिना सौत्रामणीविशेषे तत्सूत्रेऽनुशिशुं च वडवांधेनुंदद्यादित्युक्तस्य परिग्रहः। अनुगच्छन् शिशुर्यस्यास्तांसकिशोरां तामित्यर्थः अन्यथा वडवादिभिः सामानाधिकरण्यासंगतिः स्पष्टैव। सकलमतं निराचष्टे तेनेति। उक्तविरोधेनेत्यर्थः गोत्वेति। गौरेव हि धेनुर्नान्येति शबरस्वाम्युक्तिस्तेषां मूलं। तदुक्तं साधकांतरं निराचष्टे नचेति ज्योतिष्टोमविकृतिभूतो भूराख्य इत्यर्थः।

त्रिवृदेवेति एवेनतदन्यस्या यस्याः कस्याश्चिद्धानकर्मभूतायाव्यव-

क्रियाहि कश्चिदुपकारार्था । नच ताभिर्दुग्धादिद्वारा-
ऽग्निहोत्राद्युपकारः । नकेसरिणो ददाति; कोऽभयतो-
दतः प्रतिगृह्णातीतिनिषेधाच्च । एतेन धनलाभद्वा-
रा साक्षादप्युपकारकत्वमित्यपास्तम् । नाश्वं विक्री-
णीत इतिस्मृतेश्च । द्यावापृथिवीभ्यां धेनुमालभेतेत्य-
त्रापि उक्तप्राशस्त्यादश्वजातीयस्याश्वमेधातिरिक्ते
ऽनुष्ठानाश्रवणाच्च गोरेवालम्भः । किंच तदग्रे वायव्यं
वत्समालभतेति श्रुतं तत्रच प्रत्यासत्त्या पूर्वालब्धधे-
नोरेव वत्सस्य ग्रहणमितिवेदभाष्यकृद्भिर्व्याख्या-
तम् । एवंच तत्संयोगात्तत्परत्वम् ।

वत्सशब्दस्तु गोत्वसमानाधिकरणवयः प्रवृत्ति-
निमित्तक एवात एव माहिष्यादावपि धेनुव्यवहारो
लौकिकानाम् । अतएव हर्यादिभिः सवत्सासकर-

---

श्रुतिः । विश्वेति विश्वपदघटिता ऋचः । नन्वेवं तत्र वडवानामपि प्रती-
त्यापत्तिरत आह वडवेति । विशिष्य किंचित्पदासमभिव्याहृतधेनु
पदेनेतिभावः । वडवात्वेन तु तासामपि दक्षिणात्वमन्यत्र स्फुटमेव ।
तच्चोक्तमेव अतएव वडवा दक्षिणाऽश्वोदक्षिणेति तैत्तिरीयश्रुतिः
संगच्छते । पौंडरीकादिष्वन्वहं द्वादशानि शतानि ददाति अश्वसहस्र-
मुत्तमे इति सूत्रं च । ताभिर्वडवाभिः । सुहृदादिभ्यः क्रियमाणपुरु-
षार्थाश्वदानादिपरनिषेधानां साधारण्येन तथा विहितभिन्ने सं-
दिग्धोक्तविषयेऽपि प्रवृत्तिरित्याह नकेसेति । प्रजापतिर्वरुणायाश्वमन
यदितिविहितेष्टिस्तु वैदिकाश्वदाननिमित्तेति स्पष्टं जैमिनीये एतेन
निषेधस्य तस्य तत्परत्वादिदमयुक्तमित्यपास्तं । एतेन निषेधेन
नन्वेतावता आद्ये निर्वाहेपि द्वितीये कथमत आह द्यावेति । उभय-
संग्रहापत्याह । अश्वेति । इदमेतद्विकारभूतसर्वमेधस्याप्युपलक्षणं
युक्त्यंतरमाह किंचेति । तदग्रे द्यावेत्यग्रे । तत्तत्परत्वं गोपरत्वं क्वचिदेवं
पाठएव ननु तस्यापि सामान्यार्थत्वे कथं ततो निर्णय इत्यत आह

आऽवत्साऽकरभा धेनुरिति संयोगविप्रयोगयोरुदाहृतम् वत्ससंयोगादिना गौः करभसंयोगादिनोष्ट्री उच्यते इतिच विवृतम्। अतएवतथा सुवर्णशृङ्गीणां गोधेनूनां चतुःशतमिति कर्णपर्वणि भारते प्रयोगः संगच्छते इत्यलम्।

अन्योन्येतरेतरत्परस्परशब्दानां क्रियाव्यतिहारविषयमेकमात्रावृत्त्यन्योन्यत्वमखण्डोपाधिरूपं प्रवृत्तिनिमित्तमिति सर्वेष्टसिद्धिः॥

इति प्रातिपदिकार्थ निर्णयः॥

---

वत्सेति। अतएव तस्य शुद्धयौगिकत्वादेव एवमग्रेपि उभयत्र। एवंच प्रत्याम्नायस्थलीयधेनुपदेपीत्थंबोध्यमिति न तद्विरोधस्तदाहेत्यलमिति। मात्रमवधारणे तेनानेकवृत्तित्वंसूचितं। अन्यप्रकारासंभवादाहाखंडोपेति। प्राचांमतेनेदं। सिद्धांतेजातिरूपं प्रोक्तरीत्या वोध्यं।

इति प्रातिपदिकार्थनिर्णयः।



# अथ सुबर्थनिर्णयः ।



अथ तत्प्रकृतिकसुबर्थो निर्णीयते । तत्र प्रथमाद्वितीयातृतीयाचतुर्थीपञ्चमीषष्ठीसप्तमीत्याख्याः सप्त विभक्तयः । तत्र तासां मध्ये प्रथमाविधायकं प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमेति । तत्र प्रातिपदिकार्थशब्देन तत्तच्छब्दप्रवृत्तिनिमित्तं तदाश्रयश्च । अतएव लिङ्गादिग्रहणं चरितार्थम् । तेषां मपि प्रातिपदिकार्थत्वात् । तदाश्रयश्चारोपितप्रवृत्तिनिमित्ताश्रयोऽपि । तेन सिंहो माणवको द्रोणो व्रीहिरित्यादौ नदोषः । किञ्च शक्यार्थे पदं साधुत्वेनान्वाख्याय पश्चात्पदान्तरसंनिधानेऽन्वयानुपपत्त्या वक्तृश्रोतृभ्यां लक्षणाश्रयणामिति नदोषः । अन्यथा गङ्गायां घोष इत्यादौ सुबुत्पत्तेः प्राक् प्रातिपदिकस्यैव लक्षणायां नपुंसकह्रस्वत्वापत्तिः ।

तिङ्समानाधिकरणे प्रथमेत्यादिना तिङन्तार्थे सामानाधिकरण्येनान्वययोग्यमेव प्रथमान्तं साधयितुं तावद्बोध्यते । अन्ततो लट्परस्यास्तेः सत्त्वात् । ननु

---

संगतिमाहाथेति । तादिति । प्रातिपदिकेत्यर्थः । तत्र निर्णये । सुप्सु तत्र तासां मध्ये । अतएव तत्रतयोरेव ग्रहणादेव । आदिना संख्या ननु तस्य नैव ग्रहणप्रसंगोऽतआह तेषामपीति । श्रयोपीति व्याख्याश्रात् । अपिना वास्तवतत्समुच्चयः । अभ्युपेत्येदं । वस्तुतो नैतस्योपयोग इत्याह किंचेति । अन्यथोक्तरीत्यतिक्रमे । भाष्यादाहांतत इति ।

तदन्वयबोधोत्तरं प्रत्ययोत्पत्तिर्बोध्यते। एवमन्यैरपि कारकाधिकारस्थसूत्रैः युष्मद्युपपदे इत्यादिभिश्च। अतएवार्थवत्सूत्रे भाष्यं शुक्लामित्युक्ते कर्म निर्दिष्टं कर्ता क्रिया चानिर्दिष्टे। अभ्याजेत्युक्ते क्रिया निर्दिष्टा कर्ता कर्म चानिर्दिष्टे। देवदत्तेत्युक्ते कर्ता निर्दिष्ट इतरदनिर्दिष्टमिहेदानीं गामभ्याज कृष्णां देवदत्तइत्युक्ते सर्वं निर्दिष्टं गामेव कर्म देवदत्तैव कर्ता अभ्याजैव क्रियेत्युक्तम्। तत्तत्कारकादिमात्र प्रयोगे योग्यसर्वक्रियाद्यध्याहारे प्रसक्ते नियमार्थस्तत्तत्प्रयोग इति तात्पर्यम्।

एवं च सामान्यतः क्रियान्वययोग्यताबुद्धिरेव कारकविभक्तिप्रयोजिका नतु विशिष्येति लभ्यते। कारकत्वं क्रियाजनकत्वयोग्यताबुद्धिविषयत्वमेव। वृद्धिसूत्रे भाष्येऽप्युक्तं संस्कृत्य संस्कृत्य पदान्युत्सृज्य-

---

इत्येतावादित्यस्य व्यवच्छेद्यमाह नत्विति। बोध्यते इत्यस्याग्रेऽनुषंगः। अतएव उक्तवार्त्तिकस्योक्तार्थकत्वादेव। आद्येअनिर्दिष्टाविति पाठः। देवदत्तेति उक्ते इति पाठः कर्त्ता निर्दिष्ट इति संबोधनविषयनियतक्रियं कर्त्तृमात्रमित्यर्थः। गामेवेति गामितिशब्दवाच्यमेव कर्मेत्यादिक्रमेणार्थः। वाच्यवाचकयोरभेदो वा। दत्तैवेतिपाठः। आदिभ्यां यथाक्रमं क्रियाकारकयोः परिग्रहः। प्रसक्ते इति।

एतेन सर्वत्र वाक्यमेव बोधकमिति पदार्थान्यः कश्चिद्वाक्यार्थोऽस्तीति सूचितं। अतएवेत्यस्यार्थं विशदयति एवंचेति। तथोक्तौ चेत्यर्थः। सामान्यतः क्रियात्वादिना। ननु तस्यां दशायां कारकत्वमपि कथमत आहकारकत्वंचेति। भाष्यांतरसंमतिमप्याह वृद्धीति। संवंधेति तस्यभेदनियतत्वात्। अस्य साधारणत्वादाह विशेष्येति। सकलग्रंथकारोक्तिं खंडयति यत्त्विति। अतएव तस्यासंवंधत्वादेव व्यपेति। औपाधिकभेद इत्यर्थः। यद्यपि तस्य संवंधत्वेपि तद्भाष्यात्त-

न्ते तेषां यथेष्टमभिसंबन्धो भवति। आहार पात्रं पात्रमाहरेति। द्रोणो व्रीहिरित्यादौ पदद्वयोपस्थाप्यव्यक्त्योरेकत्वेन संबन्धाभावेऽपि विशेष्यविशेषणभावो बोध्यः। यत्त्वभेदसंबन्धेनान्वय इति तन्न। तस्य संबन्धत्वे मानाभावात्। संबन्धिभेदनियतत्वात्संबन्धस्य। अतएवाद्यन्तवत्सूत्रे राहोः शिर इत्यादौ षष्ठ्युपपादनाय व्यपदेशिवद्भाव इति भाष्ये उक्तम्। किंच तस्य संबन्धत्वे नीलो घट इत्यादौ षष्ठयापत्तिः। भेदमूलकसबन्ध एव षष्ठीत्यर्थस्य सूत्रतो वाच्यवृत्त्याऽलाभात् अतएव तार्किकनव्यैरपि कर्मधारयोत्तरभावप्रत्ययस्य पदार्थतावच्छेदकसामानाधिकरण्यवचनत्वं कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेनेत्यभियुक्तोक्तेरित्युक्तम्।

---

स्यषष्ठीनिमित्तता नेति सुवचं तथाप्यतिरिक्ततत्संबंधांगीकारे गौरवं फलाभावश्च। अन्यथा भेदसंसर्गस्याप्यतिरिक्तत्वापत्तिर्निर्हेतुकवैषम्यस्य निर्बीजत्वात्तथा बोधाबोधाभ्यां तदंगीकारानंगीकाराविति तु स्ववासनामात्रकल्पितत्वाद्दुर्वचं। एवंचाभेदो न संसर्गइत्यस्यनातिरिक्तः सम्बन्धविशेष इत्यर्थो बोध्यः।

दोषांतरमाह किंचेति पतेरितिपाठः। परसंमतमपीदमित्याहाातएवेति। तस्यासम्बन्धत्वादेवेत्यर्थः। नव्यैरपि दीधितिकृदादिभिः। अतएवेत्युक्तं विशदयति–अभेदस्येति। भाने भानेतु। एतेनाभेदस्य सम्बन्धत्वं वदन्तो न्ये तदीयादयः परास्तास्तदाहेति दिगिति। परमतं खण्डयति नचेति। अभ्युपेत्याह नीलमिति। आदिना धान्येनंधनवानित्यादि तदिति इष्टाभेदेत्यर्थः। तथैवाह नचेति ननु भेदवाक्ये तदन्यविशेषसंबंधस्य तत्वमस्त्येवेत्यभेद वाक्येपि तथाऽतआह राज्ञइति। ननुद्वितीयादेस्तत्कारकार्थकत्वं प्रसिद्धं न सम्बन्धार्थकत्वमत आह कारकेति। यथाक्रममाह कारक इतीति। अग्रे द्वितीया

अभेदस्य संबन्धत्वेन भाने तस्यैव तदुत्तरभावप्रत्ययवाच्यता वक्तुं युक्ता। राजपौरुष्यमित्यादौ पूर्वोत्तरपदार्थयोः संबन्धस्यैवेति दिक्। नचप्रथमार्थः स इत्यदोषः। अनुशासनाभावात्। नलिं घटं पश्येत्यादौ तद्भानानापत्तेश्च। नचाकाङ्क्षालभ्यः सः। वाक्ये विशेषणविशेष्यभावातिरिक्तस्याकाङ्क्षालभ्यत्वाभावात्। राज्ञः पुरुष इत्यादावाकाङ्क्षितसंबन्धस्य षष्ठया, रामं भजतीत्यादौ क्रियाकारकयोः संबन्धस्य द्वितीयादिना लाभात्। कारकविभक्तीनां तत्तच्छक्तिः तत्तत्क्रियाकारकभावसंबधश्चार्थ इति कारक इति सूत्रभाष्यात्समर्थसूत्रभाष्याच्च लभ्यते इत्यग्रे निरूपयिष्यामः। नच सम्बन्धसम्बन्ध आकाङ्क्षालभ्यस्तद्भाने भानाभावादनवस्थापत्तेश्च।

यदपि वीरः पुरुष इत्यादौ गुणभेदेनैकस्यापि द्रव्यस्य भेदारोपेण भेदाभेदगर्भं तादात्म्यं सम्बन्ध इति तदपि न। वास्तवभेदमूलक इवारोपितभेदमूलकसम्बन्धेऽपि षष्ठयापत्तेः। तत्र विभक्तिवाच्यस्यापि सम्बन्धस्य संसर्गतयैव भानम्। अत एवार्थवत्सूत्रे भाष्ये एषां पदानां सामान्ये वर्तमानानां यद्विशेषेऽव-

---

प्रकरणे तथैवाह नचेति। मतांतरं तत्र खण्डयति यदपीति इत्यादावित्यस्य भेदगर्भमित्यत्रान्वयः तत्र भेदः कथमितिशङ्कायामाह गुणेत्यादिरित्यंतेन भेदाभेदगर्भमित्यपपाठः। तस्य तदर्थत्वेन तद्गर्भत्वाभावात्। मूलके स्वस्वामिभावादिसम्बन्धे। ननु तेषां ततो लाभे प्रकारत्वाद्यौचित्येन कथं तस्य सम्बन्धत्वमतो भाष्यसंमतं विशेषमाह। तत्रेति। रामं भजति राज्ञः पुरुष इत्यादावित्यर्थः। इदमप्यग्रे स्फुटीभविष्यति। अतएव तदन्यस्य तल्लभ्यत्वाभावादेव।

स्थानं स वाक्यार्थ इत्युक्तम् । विशेषे इत्यस्य विशेषणविशेष्यभावरूपपदार्थसंसर्गरूप इत्यर्थः । सम्बन्धान्तरस्य समर्थसूत्रभाष्ये षष्ठ्यादिवाच्यतोक्तेः ।

अतएव प्रातिपदिकार्थसूत्रे वीरः पुरुष इत्यादौ विशेषणविशेष्यभावस्याधिक्यस्य प्रतीत्या प्रातिपदिकार्थमात्राभावात्प्रथमा न प्राप्नोतीत्याशङ्क्य यदत्राधिक्यं स वाक्यार्थ इत्युक्तम् ।

अत्र कैयटः वीरप्रातिपदिकात् वीरः क इत्येवमाकाङ्क्षया प्रापितं विशेषणत्वमनपेक्ष्य स्वार्थमात्रनिष्ठात् प्रथमा पश्चात्त्वाकाङ्क्षावशाद्विशेषणविशेष्यभावावगतिरिति । षष्ठी शेषे इति सूत्रे भाष्येऽपि स्फुटमेतत् । घटो घट इत्यादौ विशेष्यविशेषणभाववारणाय सोपि धर्मभेदमूलकारोपितभेदसापेक्ष इति बोध्यम् । हरिणाप्युक्तम् ।

विशेषणविशेष्यत्वं पदयोरुपजायते ॥

न प्रातिपदिकार्थश्च तत्रैव व्यतिरिच्यते । इति ॥

पदयोः संबद्धयोरिति शेषः । वीरः पुरुष इत्यादौ परस्परसम्बन्धेन गुणप्रधानभावापन्नार्थकत्वेन वाक्यार्थभूतविशेष्यविशेषणभावयुक्तार्थकत्वात्पदयोरपि तत्वम् । एवं राज्ञः पुरुष इत्यादौ प्रातिपदिकार्थस्य राज्ञो विशेषणत्वं, पुरुषस्य विशेष्यत्वं

---

ननुसएवकुतोऽतआह । सम्बन्धांतेति उक्तरूपेत्यर्थः । आदिना द्वितीयादि अतएव तस्यैव अधिकमिति । आधिक्यमिति पाठे स्वार्थे ष्यञ् । ननु विशिष्टस्य न तथापि प्रातिपदिकार्थत्वमिति शङ्काप्ययुक्तैवातआह अत्रेति । षष्ठीति यथाचैतत्तथाऽन्यत्र स्पष्टं । प्रयोगद्वयसत्वस्य भावप्रकाशेप्रतिपादितत्वादाह विशेष्यविशेषणभावो

स्वामित्वेन स्वत्वेन च यथा तयोर्व्यतिरेकः रूपान्तरेण परिवर्तनान्न तथा प्रकृत इति तदर्थः।

अतएव जात्याकृतीतिसूत्रे न्यायवार्तिककारेण यदुक्तं 'विशेषण विशेष्यभावस्यैकाविषयत्वात् यदि गोशब्दातिष्ठतिशब्दयोरेकमभिधेयं भवति ततो विशेष्यविशेषणभावापन्नयोः तिष्ठति गोशब्दयोः सामानाधिकरण्यं युज्यते' इति तत्संगच्छते। अन्यथा राज्ञः पुरुष इत्यादौ भेदेऽपि तस्य सत्त्वेनैकविषयत्वादित्यसङ्गतिः। अत्रैकमभिधेयमित्युक्त्या क्रियाक्रियावतोरभेदः सूचितः। अभिधेयपदस्य विशेष्ये एव प्रसिद्धेस्तस्माद्द्वेधा स द्वयोर्धर्मिणोः सम्बन्धेन वैकत्वेन वेति। एवंच विना सम्बन्धं विशेष्यविशेषणभावस्यैकविषयत्वादिति तदर्थो वाच्यः। एवंचाभेदस्य सम्बन्धत्वाभावः स्पष्टमेव तदभिहितः।

---

पि। तस्यैव तत्त्वे हरिसंमतिमप्याह। हरिणापीति तत्र वीरः पुरुष इत्यादौ। एवं सति पूर्वार्धोक्तप्रकारे सति। तदर्थमाह पदयो रिति। अनतिप्रसङ्गायाह सम्बद्धयोरिति। स अभिव्याहृतयोरित्यर्थः। ननु तस्यार्थनिष्ठत्वेन कथं पदयोस्तत्वमत आह वीरइति। सम्बन्धेन समभिव्याहाररूपेण एवं अभेद उक्तप्रकारेण। उत्तरार्धार्थमाह स्वामित्वेनेति। प्रकृते वीरः पुरुष इत्यादौ। परग्रंथासाङ्गत्यं ध्वनयन् तन्मूलसंमतमपीदमित्याहातएवेति। अभेदस्य सम्बन्धत्वाभावादेवेत्यर्थः। अन्यथा अभेदस्य सम्बन्धत्वे। अपिना त त्समुच्चयः।

परग्रन्थासाङ्गत्याय सिद्धांतरीत्या प्रसङ्गादाहात्रैकमिति। ननु विशेषणांशमादायैव तथा कुतो नात आहाभीति। तत्तात्पर्य माह तस्मादिति। सः विशेषणविशेष्यभावः। एवंच द्वैविध्ये च तदर्थोवार्तिकार्थः। एवंच तथावश्यं वाच्यत्वे च। नन्वेवं भवत्वभेदस्य तत्त्वाभावस्तथापि धर्मिणोरेकत्वं तन्नियामकमिति तदभिमतं न

यद्वा तत्र प्रवृत्तिनिमित्तयोः साहित्यरूपः सम्बन्ध एव तदाश्रययोः विशेषणत्वादिनियामकः सोपि वाक्यार्थ एव। एतदेवाभिप्रेत्य कर्मधारयविषये द्वन्द्वापादनं चार्थे द्वन्द्व इति भाष्ये कृतम्। एवंच वीरत्वपुरुषत्वसमूहवान् वीरः पुरुष इति बोधः। सामानाधिकरण्यं चैकधर्मिबोधकत्वमेव। एतेन प्रकारता विशेष्यते सांसर्गिकविषयतानिरूपित एवेति नियम इत्यपास्तम्। मानाभावात। अभेदान्वय इत्यस्याभेदेऽप्यन्वयो विशेषणविशेष्यभाव इत्येवार्थो नत्वभेदसंसर्गको बोध इतत्यिलम्।

---

युक्तं घटो घट इत्यादौ तथात्वापत्तेस्तत्रापि तथाभेदाङ्गीकार एकत्वस्यातत्वेन भेदे सम्बन्धस्यैव तन्नियामकत्वेन तदावश्यकत्वादत आह यद्वेति। तत्र वीरः पुरुष इत्यादौ एवेनाभेदस्य तत्त्वनिरासः। तस्यापि वाचकान्तराभावादाह सोपीति। अपिना तत्समुच्चयः। अत्र मानंध्वनयन्नाहैतदेवेति। अन्यथोभयत्रापि साहित्ये द्वन्द्वविधानात्तत्र तदभावात्तदसङ्गतिः स्पष्टैवेति व्यक्तीभविष्यत्यग्रे।

नन्वेवमपि कथं तयोः सामानाधिकरण्यं तस्यार्थनिष्ठत्वेन शक्तेस्वपक्षेन्यतरासंभवात् अत आह सामेति। एवेन तद्वत्प्रवृत्तिनिमित्तभेदगर्भस्यापि व्यवछेद इत्यन्यत्र स्पष्टं। एतेनेत्यस्यार्थमाहमानेति तत्र तदभावादिति भावः। नन्वभेदस्यातत्त्वे कथंनामार्थयोरभेदान्वय इत्यादिघंटाघोषास्तत्रहि कर्मधारयो बहुव्रीहिर्वातआहाभेदेति। किंचाभेदस्यातत्त्वे राजपौरुष्यभावस्य तु नभावप्रत्ययवाच्यता कृत्तद्धितसमासेभ्य इत्यभियुक्तोक्त्या संबंधविशेषाभिधायकत्वप्रतिपादनात् अन्यथा भावप्रत्ययानां कृत्तद्धितसमासेभ्यः परेषां तुल्यार्थतापत्तिः नीलोत्पलत्वराजपुरुषत्वादिनाविशेष्यभूतानांतुल्यत्वापातिश्च एवं तस्य षष्ठीप्रयोजकतापि न प्रागुक्तविशेषसंबंधान्यबोधकशेषपदस्वारस्यात् इत्यन्यत्र विस्तरस्तदाहेत्यलमिति।

तत्राव्ययानि स्त्रीपुमान्नपुंसकमित्यादिशब्दाश्च प्रातिपदिकार्थमात्र इत्यस्योदाहरणम्। कृष्णः श्रीर्ज्ञानं तटस्तटी तटमित्यादि लिङ्गाधिक्यस्य। द्रोणः खारी आढकमित्यादौ प्रवृत्तिनिमित्तजातिरूपद्रोणत्वाद्यपेक्षया परिच्छेदकत्वस्याधिकस्य तेभ्यो भानेन प्रातिपदिकार्थमात्रविहितप्रथमाया अप्राप्त्या परिमाण ग्रहणम्। एको द्वावित्यादौ संख्याया उक्तत्वात्तदप्राप्त्या वचनग्रहणम्। अत्रानुवृत्तस्यानभिहित इत्यस्य संख्याविशेषणत्वात्।

यद्वा प्रवृत्तिनिमित्तसंख्यात्र विभक्तिवाच्या। नच तद्द्वयबोधाननुभवः। एकत्वस्य प्रचितस्य ततो बोधात्। सजातीयसंवलनं हि प्रचयः द्वित्वाद्युपजनयोग्यत्वं हि प्रचितत्वम्। प्रातिपदिकस्य तु प्रचिताप्रचितसाधारणं तदर्थः। तत्प्रतीतिश्चैकपुत्र इत्यादौ। एवं द्वौ बहव इत्यत्रोद्भूतावयवभेदसमूहप्रतीतिर्विभक्त्या, तदभावे तु द्विपुत्रो बहुपुत्र इत्यादावनुद्भूता-

---

कैयटादिसकलग्रंथासंगत्याह । तत्रेति सूत्रोक्तनिमित्तानांमध्ये-इत्यर्थः। आदिना क्लीबादि तत्रलिंगविशिष्टपरिभाषया स्त्रीत्युदाहरणं बोध्यं। ननु तत्र संख्याया उक्तत्वेपि सूत्रस्य तत्राप्राप्तिः कुतः प्रातिपदिकार्थमात्रस्य सत्वादत आहात्रेति। सर्वत्र प्रकृत्या तस्याभिहितत्वेन तद्विशेषणत्वासंभवादाह संख्येति । तत्खंडनप्रकारमाहयद्वेति। प्रवृत्तिनिमित्तस्यैकत्वादेर्या संख्या एकत्वादिरूपा सेत्यर्थः। अत्र एक इत्यादौ। ततः विशिष्टात्। ननुप्रचितत्वं पुष्पादिवत्कथमतआह सजेति। नन्वेवमपि प्रकृते किं तत्त्वमतआह द्वित्वेति वस्तुतोऽत्रतदभावादाहयोग्यत्वमिति ननु तस्यापि प्रकृत्यैव लाभोऽतआह प्रातीति। तत्एकत्वं। तत्रेति अप्रचितैकत्वप्रेत्यर्थः। एवं एक

वयवभेदसमूहरूपाश्रित्वादिभानम् । एतन्मूलकमेव सं- भेदे नान्यतरवैयर्थ्यमिति पद्यते । यदा न केवलेति नि- यमेन स्वाभाविकं सहाभिधानमत्र लुग्विधानारम्भे- ण केवलेनाप्यभिधानं ज्ञाप्यते । एवंच प्रकृत्यर्थानु- वादिका विभक्तिः ।

यद्वा प्रकृतिप्रत्ययसमुदायवाच्यः सोऽर्थ इत्यनुक्त- त्वादेव विभक्तिरत्र । अन्वयव्यतिरेकाभ्यां ह्यत्र प्र- कृतिप्रत्ययार्थावधारणमर्थवत्सूत्रादौ भाष्ये उक्तम् । एकशब्दादौ च वचनान्तराभावाद्व्यतिरेकाभावेऽन्व- यस्याप्यनिश्चयात्केवलप्रकृत्यर्थानवधारणमेव । वृत्तौ तु वृत्तिस्वभावादेवान्यार्थसंबद्ध उपसर्जनार्थः केवलप्रकृ- तेरेव गम्यते इति न तत्र विभक्तिः सैव चानुत्पत्ति- र्लुकान्वाख्यायते ।

यद्वा एकत्वादिविशिष्टः प्रकृत्यर्थो विभक्तिवाच्ये- नैकत्वादिना विशिष्यते । एकत्वादिविशिष्ट एवार्थो

---

इत्यत्रेव तदेतिविभक्त्यभावेत्वित्यर्थः । अत्र संमतिं ध्वनयन्नाह एत- दिति । तादृशबोधस्याप्यननुभवात्प्राचोक्तमेवाह यद्वेति । नन्वेवं वृत्तौ कथमत आह लुगिति । नापि प्रादिपदिकेन । अपि स्वतत्समुच्चये तथा सति तात्पर्यार्थमाहैवंचेति । अतएवविरुद्धविभक्तिर्न । तन्न्यायप्रवृ- त्तिमभ्युपेत्य तन्न्यायेन समाहितं । वस्तुतः सैवनेति । तदर्थिनेति लाघवादाह यद्वेति । लोकप्रयोगे आह प्रकृतीति । ननु सर्वत्रैवं सत्वे- प्यन्वयव्यतिरेकाभ्यां तत्तदर्थावधारणस्यान्यत्रेवात्रापि सत्वात्कथं- तथाऽतआहान्वयेति । हि यतः । अत्र सुबन्ते । चस्त्वर्थे । स्वरूपतस्त- त्सत्वेन तत्तोवैषम्यादाहानिश्चयादिति । नन्वेवं वृत्तौ दोषोऽतआह वृत्तौ त्विति । वादेवेत्यव्यवहिते एवान्वेति । एवेन कारणांतरनिरा- सः । एवेन विभक्तिव्यवच्छेदः । एवंचोक्तप्रकारस्तदन्यविषयः । नन्वेवं कथं तत्र तत्प्रयुक्तं कार्यमतआह सैवचेति । संभवात्प्रकारांतरमाह

ननु गुणान्तरविशिष्ट इति । एवंच वचनग्रहणं न कार्यम् । स्पष्टं चेदं सर्वमनभिहितसूत्रे भाष्ये संख्यासमुद्देशे हरिग्रन्थे चेति दिक् ।

इदमपि सूत्रं क्रियायोग एव प्रवर्तते कर्मणि द्वितीयेत्यादिसाहचर्यात् । तथैवाकाङ्क्षितत्वाच्च 'तिङ्समानाधिकरणे प्रथमे'तिवार्तिकाच्च । क्रियान्वयिकर्त्रादौ अभेदान्वयाच्च क्रियायोगो बोध्यः । यत्र क्रिया न श्रूयते तत्राध्याहारः । अन्ततोऽस्तीत्यस्य । अस्तिर्भवन्तीपरो प्रयुज्यमानोऽप्यस्तीति भाष्यात् ।

'संबोधने चे'त्यनेन संबोधनाधिक्ये प्रातिपदिकार्थे वर्तमानात्प्रातिपदिकात्प्रथमा । तत्र संबोधनमभिमुखीभावः, तत्फलं प्रवृत्तिनिवृत्ती । तेन संबोधनाविभ-

---

यद्वेति । एवंच प्रकारचतुष्टये च । एवंच यदत्र कैयटादिभिरुक्तं स्वार्थादिकं तत्प्रत्युक्तमेवेत्यन्यत्रस्पष्टं । तदाहेतिदिगिति ।

प्रथमा न कारकविभक्तिस्तदधिकारापाठादिति प्राचां ग्रंथासंगत्यायाहेदमपीति । अपिना तदधिकारस्थसूत्रविहित संज्ञाहेतुकविधिसमुच्चयः । अतएवाह कर्मणीति । साहचर्यस्यासार्वत्रिकत्वादाह तथैवेति । तस्या अपि सर्वासंमतत्वादाह तिङिति । ननु प्रथमांतार्थस्य नसाक्षात्क्रियायोगोऽतआह क्रियेति चस्त्वर्थे अतएव प्रथमांतार्थस्यापि क्रियाजनकत्वादस्याः कारकविभक्तित्वेन व्यवहारो भाष्ये । भाष्यादिमतेन नीलमिदं ननु रक्तमित्यादावन्यनिवृत्तिपरे वाक्ये क्रियाया अनावश्यकत्वोक्तिः प्राचामपास्ता उक्तभाष्यविरोधात् । एतदर्थकमनभिहित इति सूत्रस्थं भाष्यमप्येकदेश्युक्तिर्नतु सिद्धान्तिन इति तद्वार्थसाधक मतएव तत्राभ्युपगमवादेन त्वेतदुच्यते इति कैयटेनोक्तम् ।

पूर्वसूत्रेणागतार्थत्वमाह । संबोधेति । तत्र सूत्रे । वक्ष्यमाणहदिसमस्तग्रहाभिमुखीति । तेन तस्य कर्तृत्वेन । इत्थमत्रोविनिर्धरके

क्तिरनुवाद्यविषया संबोध्यतावच्छेदकरूपेण संबोध्यस्य सिद्धिं विना तत्त्वासंभवात्। तेन राजा भव युध्यस्व’इन्द्रशत्रुर्वर्धस्वेत्यादौ न संबोधनविभक्तिः। राजत्वादेरसिद्धत्वेनानुवाद्यत्वाभावात्। अतएव राजन् युध्यस्वेत्यस्य कुमारावस्थायां, राजा भव युध्यस्वेत्यस्य राजावस्थायां न प्रयोगः।

केचित्तु संबोधनं सम्यक् ज्ञापनं संबोध्यज्ञापनार्थमेव संबोधनविभक्त्यन्तपदघटितवाक्यप्रयोगात्। तत्फलं प्रवृत्तिनिवृत्ती इति पूर्ववत्। ज्ञापने सम्यक्त्वं चावश्यकर्तव्यत्वादिविषयकज्ञानानुकूलत्वम्। तादृशज्ञानानुकूलव्यापारश्चैतद्विभक्त्यन्तपदघटित वाक्यप्रयोग एव।

यत्तु प्रयोक्त्रिच्छाविषयकत्वं ज्ञानेसम्यक्त्वमिति तन्न। तस्य वाक्यप्रयोगानुमेयत्वेन विभक्तिबोध्यतावच्छेदककोटौ निवेशे मानाभावात्। संबोधनपदाघटितवाक्यप्रयोगेऽपि बोध्यबोधे प्रयोक्त्रिच्छाविषयत्वा-

---

ति भागवतं त्वार्षं। तेनेत्यस्यार्थमाहराजत्वादेरिति। प्राचां दीक्षितादीनां मतमाह केचित्त्विति। सम्बोधनं न प्रकृत्यर्थः किन्तु प्रत्ययार्थ इत्याह सम्यगिति। तत्रमानमाह सम्बोध्येति। सम्बोध्यस्य यत् ज्ञाणादिज्ञापनं तत्फलकमेवेत्यर्थः। एतेन कस्येत्याकांक्षानिरस्ता। तत्फलं सम्यक्ज्ञापनफलं। ननु तथा ज्ञापनं कुतोऽतआह तादृशज्ञापनेतिः ज्ञापनेतिपाठः ज्ञानेत्यपपाठः पूर्वविरोधापत्तेः सम्यक्त्वमेकदेशे ज्ञाने विशेषणं नतु ज्ञापने इति मतं खण्डयति यत्त्विति। इच्छाविषयत्वमिति पाठः। विषयकत्वमित्यपपाठः। दोषग्रन्थविरोधापतेः। तस्य प्रयोक्त्रिच्छाविषयत्वस्य सम्यक्ज्ञापनं वाक्यश्रवणरूपं विभक्तिबोध्यं तदवच्छेदकं सम्यक्ज्ञानं तत्कोटावितितदर्थः अनन्यलभ्य इति

नुमानात्। अन्यथा तस्य तत्प्रयोक्तृत्वमेव न स्यात्। त्वं पचेत्यादौ प्रयोज्यप्रवृत्तेस्तदिष्टत्वस्य प्रवर्तनानुमेयत्वदर्शनाच्च। हेशब्दादि संबोधनतात्पर्यग्राहकं। अचेतने तु चेतनत्वारोपेण गौणः प्रयोगः। संबोधनं चाभिमुखीकृत्याज्ञातार्थ ज्ञानानुकूलव्यापारानुकूलव्यापारोऽर्थः। तद्व्यापारजन्यज्ञानानुकूलव्यापाराश्रयत्वं संबोध्यत्वम्। तत्त्वेन बुद्धश्च स्वनिष्ठज्ञानविषयज्ञेयसाकाङ्क्ष इति ज्ञेयेऽर्थे तस्यान्वयः। स एवच ज्ञाप्योऽर्थस्तेन राम त्रायस्वेत्यादौ रामसंबोधनविषयस्त्राणमिति बोधः। अभिमुखीकरणं स्ववचनार्थग्रहणे सादरत्वकरणम्। तद्व्यञ्जकंच मुखपरावृत्त्यादि। हे राम त्वं सुन्दर इत्यादा-

---

न्यायादितिभावः। ननुविनिगमनाविरहोऽतआह सम्बोधनेति। सम्बोधनविभक्त्यतपदेत्यर्थः। अतएवाहबोध्यति तेनैवेति भावः। ननु तत्रैवकिंमानमतआहान्यथेति। तत्र तेन तदनुमाने इत्यर्थः। यतइत्यादिः। अन्यत्राप्येवं दृष्टमित्याह त्वमिति। तदितिप्रयोजकेत्यर्थः। नन्वेवं हेशब्दादिप्रयोगो व्यर्थोऽत आहहेशब्देति। सिद्धस्य गतिरितिन्यायेन द्वौ ब्राह्मणावित्यादिवदितिभावः। नन्विदमचेतने बाधितमत आह चेतने त्विति। एवमसंनिकृष्टे संनिकृष्टत्वारोपेण तथा प्रयोगः यथा हा देवि धीरा भवेत्यादि। सम्बोधकनिष्ठोक्तताद्दशाज्ञापना नुकूलव्यापारमाह सम्बोधनं चेति। कृत्येत्यस्यविशिष्टप्रयोक्तुरितिशेषः। अज्ञातार्थस्त्राणादिः। व्यापारः तत्प्रयोगरूपः। जन्यत्वादि व्यापारविशेषणं। नन्वेवं तस्यान्यत्रान्वयापत्तिरत आह तत्वेनेति सम्बोध्यत्वेनेत्यर्थः। बुद्धिश्चेति पाठे साकांक्षे इति सप्तम्यंतं बुद्धश्चेति पाठे साकांक्ष इति प्रथमांतं। ज्ञेये त्राणादौ अत्र पक्षे तस्य विभक्तिवाच्यत्वेन प्राधान्यादाह रामसम्बोधनेति। अत एव सम्बोधनं प्रकृत्यर्थं प्रति विशेष्यं क्रियां प्रति विशेषणमिति तेषां सिद्धांतः। प्रागुक्तल्यबंतार्थमाहाभीति। ननु वक्ष्यमाणरीत्याऽस्य क्रियान्वयनियमेन तच्छून्ये कथमतोमूर्खादिकर्तृकत्वमेव तदभावे इति

मस्मीत्यस्याध्याहारः । एवंच घिङ्मूर्खेत्यादौ क्रियाध्याहारे प्रथमा । तदभावे द्वितीयेत्याहुः ।

तत्तु सिद्धस्याभिमुखीभावेत्यादिवक्ष्यमाणहरिग्रन्थविरुद्धम् ।

संबोधनपदं यच्च तत्क्रियायां विशेषणम् ।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति ॥

इति हरिः । अत्र पुञ्जराजः । 'आख्यातं सविशेषणं वाक्य'मिति समर्थसूत्रभाष्योक्त वाक्यलक्षणस्य संबोधनपदार्थे क्रियाविशेषणत्वाभावे व्रजानिदेवदत्तेत्यादावभावेन समानवाक्ये इति प्रकृत्य विहितो निघातो न स्यादिति संबोधनपदार्थोक्तेरनुवाद्यविषयतयाऽनुवाद्यस्यच विधेये एवान्वयेन विधेयतायाश्च क्रियानिष्ठत्वेन तस्याभेदान्वय इत्युक्तम् । एतच्च कडीतिसूत्रे भाष्येध्वनितमिति समानाधिकरणसमासप्रकरणे समासवादे निरूपयिष्यामः । तदुक्तं हरिणा ।

सिद्धस्याभिमुखीभावमात्रं संबोधनं विदुः ।
प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते ॥
संबोधनं न वाक्यार्थ इति वृद्धेभ्य आगम इति ।

---

मूर्खसम्बन्धिनिर्देति बोधः तत्खण्डयति तन्विति । तस्य क्रियां प्रति विशेषणत्वमात्रं तु युक्तमेव तदुक्तमिति सूचयन्नाह सम्बोधनेति । तथा सति व्रजानि देवदत्तेत्यत्र निघातः सिध्यतीत्युत्तरार्धार्थः । तदभावे इति अहंपदार्थादिकर्त्राद्यन्वयादिति भावः । तदुक्तं तस्य तदन्वयं समर्थयते सम्बोधनेति । उक्तहेतोरितिभावः । विधेये एवेति तत्रैव साकांक्षत्वात् अत्र भाष्यसम्मतिमाहैतच्चेति । तदुक्तमिति । भाष्येध्वनितं स्पष्टमुक्तमित्यर्थः ।

केचिन्मतस्यैव तद्विरुद्धत्वं प्रागुक्तमाहैवंचेति । तेन तथोक्तौ प्रे-

एवंच केचिन्मतोक्तसंबोधनपदार्थफलभूतोऽभिमुखीभाव एवात्र संबोधनपदार्थः। नतु सर्वः। तदुक्तमभिमुखीभावमात्रमिति। एवंच क्रियासु विनियोगफलकोऽभिमुखीभावः संबोधनमिति सूचितम्। अत्र सिद्धस्येत्यनेन तस्यानुवाद्यत्वं, विनियुज्यते इत्यनेन प्रवर्तनाविषयक्रियासंबन्धस्तस्येति बोधितम्। एवंचाभिमुखीभवद्ग्रामाद्युद्देश्यकप्रवर्तनाविषयो रक्षणमिति बोधः। व्रजानि देवदत्तेत्यादावपि जानीहीत्यध्याहारो वाक्यैकदेशन्यायेन। तत्र व्रजनस्य कर्मत्वाद्देवदत्तस्योद्देश्यत्वादुभयोः समानवाक्यस्थत्वं उद्देश्य-

---

त्यर्थः। केचिन्मतोक्तः सम्बोधनपदार्थः फलभूतो यस्येत्यर्थः। अत्र सिद्धांतमते एव व्यवच्छेद्यमाह नतु सर्व इति। इदमेव तत्र मात्रपदव्यवच्छेद्यमित्याह तदुक्तमिति। अनभिमुखः अभिमुखः संपद्यते तथाभावः अभिमुखीभावः सन्मुखीभावस्तन्मात्रं। प्रयोक्तृवचनार्थग्रहणे सादरत्वभवनं तत्सम्बोधनं विदुरित्यर्थः। यदर्थं संमतिरुक्ता तदाहैवंचेति। तुर्यपादोक्तौ चेत्यर्थः। विनीति गुरुकुलवत्समासः। भावः स एव।

प्रागुक्ते तत्संमतिमप्याहात्रेति हरिपद्ये इत्यर्थः। तस्येति सम्बोधनस्यानुवाद्यविषयत्वमित्यर्थः। तत्फलमाह प्राप्तेति। प्राप्तमाभिमुख्यं संमुखता येन मुखपरावृत्त्यादिना सः अर्थात्मा अर्थपूर्ण आत्मा शाकपार्थिवादिः। प्रयोक्तृवचनार्थज्ञानवान्। यद्वा शब्दरूपत्वव्यावृत्तये अर्थात्मेति कर्म सम्बोध्यमानस्वरूपः क्रियासु प्रयोक्तृज्ञाप्यक्रियासु वाक्यप्रयोगानुमेयत्वमपि तस्य न किन्त्वदृष्टप्रवर्त्तनानुमेयत्वमेवेति। प्रागुक्तं विशेषमाह विनीति। प्रेर्यत इत्यर्थः। अत्र मते तस्य प्रकृत्यर्थत्वात् तत्र प्रकारत्वमेवेत्याहाभिमुखीति। लोडर्थमाहप्रवर्तनेति एतेन दीक्षिताद्युक्तमपास्तम्।

नन्वेवं व्रजानीत्यादावेतदसम्भवेन तत्र निघातासिद्ध्योक्तहर्यादिग्रन्थासङ्गतिरत आह व्रजानीति। अध्याहारस्य खण्डितत्वात्त-

विधेयभावो वाक्यार्थः । अभिमुखीभवनानुकूलस्य संबोधनविभक्त्यन्तशब्दप्रयोगरूपव्यापारस्येतरैरप्रेक्ष्येणैव प्रतीतेस्तत्र वाक्यार्थ इति तदर्थ इति बोध्यम् । तत्र वाक्यैकदेशन्यायेन व्रजानि देवदत्तेत्यनेनैव जानीहीत्येतद्घटितवाक्यार्थबोधः इति एकतिङ्वाक्यमिति वाक्यलक्षणमपि तत्रास्त्येवेति निघातसिद्धिः ।

एतन्मूलकमेव संबोधनस्यकर्तृकारकत्वव्यवहारो वृद्धानाम् तस्यैवत्वंपदार्थत्वेन विनियोज्य क्रियाकर्तृत्वात् । अतएव तिङ्समानाधिकरणेप्रथमेति वार्तिकमते प्रथमासिद्धिः । 'संबोधने' तन्न्यासे हि प्रातिपदिकार्थेति सूत्रवदस्याप्यकरणमेव ।

---

स्याप्यनिघातसिद्धेश्चाह वाक्यैकेति । प्राप्तकाले लोट् । तदेव ध्वनयन्नाह तत्रेति । ज्ञाने इत्यर्थः । समानेति लौकिकोक्तलक्षणसत्वात् पारिभाषिकस्यापि वक्ष्यमाणरीत्या सत्वात् । अन्यथा तिङंतद्वयसत्वेन तन्नियामकपारिभाषिकैकवाक्यत्वस्याभावात्तदसिद्धिरेव । नन्वेवमप्युद्देश्यत्वलाभः कुतोऽत आहोद्देश्येति । सम्बोधनं नेत्यर्थार्थमाहाभिमुखीति । इतरेति पदांतरेत्यर्थः । प्रतीतेर्जननात् । तत् सम्बोधनं । नन्वेवमपि तिङंतद्वयसत्वेन पारिभाषिकं न तदत आह । तत्रेति उक्तवाक्ये इत्यर्थः । अपिना लौकिकं । अयमेवोक्तहरिपुञ्जराजयोराशयः । तयोरपि क्रियाशब्देन प्रयोक्तृज्ञाप्यक्रियाया एव ग्रहणादेवं च न तद्विरोधोपि । वृद्धसम्मतमपीदमित्याहैतन्मूलेति अस्यार्थमाह तस्यैवेति । वार्तिकसम्मतमपीदमित्याहातएवेति । तस्य तत्रैवान्वयादेवेत्यर्थः । ननु तदभावेपि तत्रापि मते सूत्रेणैवात्र प्रथमेति आह तन्न्यासे हीति । नन्विदं न स्पष्टं भाष्यादितो लभ्यतेऽत आहातएवेति तन्मते तद्वत्तस्याकरणादेवेत्यर्थः । मात्रेति । सूत्रमते इति भावः । तदेव स्पष्टयति तेन हीति ज्ञापके तत्प्रत्याख्यानेन हीत्यर्थः । तत्र मते अभ्युपेत्याप्याह वार्तिकेति । सूत्रेति सू-

अतएव संबोधनेचेति सूत्रं कर्मादिविशिष्टे प्रथमाभावे ज्ञापकमाश्रित्य प्रातिपदिकार्थसूत्रे मात्रग्रहणं प्रत्याख्यातम्। तेन हि संबोधनविषयेऽपि प्रातिपदिकार्थ इत्यनेन सिद्धिः सूचितेति तत्खण्डनवार्तिकेनैव तत्र सिद्धिरुचितेति बोध्यम्। वार्तिकनये सूत्रसत्त्वेऽपि संबोधनाधिक्ये तिङ्समानाधिकरणेऽर्थे वर्तमानात्प्रथमेत्यस्यैव तदर्थस्यौचित्याच्च। तस्मात्कर्तृकारकत्वं संबोधनस्येति वृद्धोक्तं साध्वेव। व्रजानि देवदत्तेत्यादौ व्रजनक्रियान्वयेनैवैकवाक्यत्वमिति न युक्तम्। तस्यां तस्य नियोगाभावेन क्रियासु विनियुज्यते

---

म्बोधने चेतीत्यर्थः। संकोचे मानाभावादाह तिङिति। उक्तमुपसंहरति तस्मादिति।

यत्तु दीक्षितादयः उक्तहरिपुंजराजाभ्यां व्रजनक्रियान्वयेनैवैकवाक्यतेति निघातसिद्धिरन्यथोक्तरीत्या न स्यादिति सैव तस्य क्रियान्वयसाधिकेति तन्मतं खण्डयति व्रजानीति। तस्यामिति व्रजनक्रियायां देवदत्तस्येत्यर्थः। किञ्च एवं सति नद्या यत्कूलं तत्र तिष्ठतीत्यर्थके(१) शालीनां ते ओदनं ददामीत्यादौ षष्ठ्यन्तस्य क्रियाविशेषणत्वाभावेन तद्घटितस्य वाक्यत्वानापत्तौ समर्थ इति सूत्रभाष्यसम्मतनिघातस्यतत्रानापत्तेस्तस्मात्सविशेषणमित्यस्य साक्षादन्यद्वारा वा यद्विशेषणं तत्सहितमित्यर्थोऽवश्यं वाच्यः एवंचैतत्प्रकृते न क्रियान्वयनियमसाधकं। एतेन यत्पदात्परस्य पदस्य निघातादयः क्रियंते तयोः परस्परान्वयनियम इत्यप्यपास्तं। एवंच सपुंजराजस्य बोधनमिति हरेरेतद्द्वयैकवाक्यतयोक्तरीत्योपपत्तौ तयां मते संबोधनान्तस्य क्रियायामेवान्वये साधुत्वं दृढतरं मानं चिन्त्यं तेषां तथानुभवश्चेदस्तु एवं च देवदत्त बहुते सौन्दर्यमित्यादौ सौन्दर्येऽप्यन्वयेऽनुभवातिरिक्तं न किञ्चित बाधकम्।

---

(१) नद्यास्तिष्ठतीति वाक्ये इति शेषः।

इति हरिग्रन्थविरोधापत्तेरितिदिक् ।

यत्तु संबोधनस्य प्रकृत्यर्थविशेषणत्वे भो ब्राह्मणाः त्वं पचेति प्रयोगापत्तिरिति तन्न । शब्दशक्तिस्वाभाव्येन संबोधनविभक्त्यन्तपदसमभिव्याहारे युष्मदस्तत्पदबोध्ययावत्परामर्शकत्वस्य व्युत्पत्तिसिद्धत्वेनैकवचनस्यासाधुत्वादित्यलम् ।

इति प्रथमा ।

---

एतेन तथा भूषणाद्युक्तं सम्बोध्यसम्बोधनभावसम्बन्धः प्रथमार्थः ण्यर्थकर्म सम्बोध्यः । तत्प्रकृत्यर्थकर्म सम्बोधनं तस्यैव करणत्वेन विवक्षणात् सूत्रे कर्मणिल्युट् कर्मादिविहिताद्वितीयादीनां यथाक्रियाकारकभावः सम्बन्धो वाच्यस्तथास्या अयं । सम्बोध्ये वर्त्तमानात्प्रत्यय इति सूत्रार्थः । एवंच संबोध्यरामबोधविषयस्त्राणमितिबोध इत्यन्योक्तं चापास्तं तदाहेति दिगिति । असाधुत्वादिति । अतएव हे देवदत्तायं पचतीत्यादौसम्बोध्यमानस्य पाके कर्तृत्वं न शब्दशक्तिस्वाभाव्येन सम्बोध्यमानातिरिक्तस्यैवेदंशब्दार्थत्वात् । एतेन राम त्रायस्वेत्यत्र सम्बोध्यरामकर्तृकं रक्षणमर्थः सम्बोधनं प्रकृत्यर्थं प्रति विशेषणं प्रकृत्यर्थश्चाख्यातार्थेऽभेदेन विशेषणं । नचैवं रामेत्यादौ प्रथमपुरुषापत्तिः । युष्मद्युपपदे इत्यत्र युष्मदीत्यस्यार्थपरत्वेन युष्मदश्च सम्बोध्यमानार्थकतया रामेत्यस्यापि तदर्थत्वादक्षतेः उक्तरीत्या बोधे तु भो ब्राह्मणास्त्वं पचेति प्रयोगापत्तिरित्यपास्तम् ।

किञ्च हे राम शिवो गच्छति काशीमित्यादावनन्वयापत्तेः किञ्च युष्मदीत्यस्यार्थपरत्वे हे राम भवानागच्छतीत्यत्र मध्यमपुरुषापत्तेः भवदर्थस्य सम्बोध्यासंम्बोध्यसाधारणत्वेपि प्रकृते संबोधनसमभिव्याहारेण सम्बोध्यमानमात्रार्थत्वात् । तत्र प्रथमान्तत्वमित्यध्याहारेण सुशकवारण मिति दिक् तदाहेत्यलमिति ॥

इति प्रथमा ॥

द्वितीयादयो द्विविधाः। कारकविभक्तय उपपदविभक्तयश्च कारकं क्रियाजनकत्वशक्तिः। भाष्ये करोति क्रियां निर्वर्तयति इति व्युत्पत्तिप्रदर्शनात्। ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ ब्राह्मणस्य न कारकत्वम्। पुत्रेणान्यथासिद्ध्या तत्वाभावात्। हरिरप्याह।

स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे।

क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः॥ इति

द्रव्यगता क्रियाजनकत्वशक्तिरेव कारकं साधनमिति चोच्यते। सिद्धस्य द्रव्यस्य स्वरूपतः क्रियाजनकत्वानुपपत्त्या शक्त्याविष्टस्यैव तत्त्वं वाच्यमिति प्राप्ताप्राप्ताविवेकेन शक्तिरेव साधनम्। तदुक्तमनभिहितसूत्रे भाष्ये गुणाः साधनमिति शक्तिरेव पारतन्त्र्याद् गुणत्वेनोक्ता। तत्र कर्तृकर्मणोः स्वाश्रयसमवेत क्रियाजनकता करणादीनामाश्रयान्तरसमवेतक्रियाजनकता। किञ्च द्रव्यस्य

---

शक्तेः स्वरूपमाह क्रियेति। इदमेव भाष्यसंमतमित्याह भाष्ये इति। नन्वेवं परंपरया क्रियाजनकत्वस्य ब्राह्मणे सत्वा त्तत्रातिव्याप्तिरत आह ब्राह्मणस्येति। तत्वेति क्रियाजनकत्वेत्यर्थः। कुलालपितृवदितिभावः। सति तु तस्मिन्पुत्ररूपपृच्छिक्रियाकर्मणा निमित्तस्य ब्राह्मणस्याकथितं चेति कर्मत्वापत्तिः। तच्च सूत्रं प्राप्तापादानत्वाद्यविवक्षायां सर्वथा तदप्राप्तौ च प्रवर्त्तत इत्यन्यत्र स्पष्टं। सैव कारकमित्यत्र हरिसंमतिमप्याह हरिरपीति। समेत्यस्य मध्यमणिन्यायेनान्वयः। भाष्याद्देराशयमाह द्रव्यगतेति। नमिात्त चेति नचेतीत्यर्थः। नन्वत्र मानाभावः द्रव्यस्यैव कारकत्वसम्भवादत आह सिद्धस्येति असिद्धस्य सर्वथाऽसम्भवादेवमुक्तं यत इत्यादिः। तदुक्तं तदेतदभिप्रेत्योक्तं। ननु तत्र गुणा इत्युक्त्या न तत्प्रकृतार्थसाधकमत आह-

कारकत्वे तस्यैकरूपत्वेन कार्यवैचित्र्यानुपपत्तिः । दृश्यते च घटं पश्य घटेन जलमाहर घटेन जलं निधेहीत्यादौ कार्यवैचित्र्यम् । सर्वस्य च सर्वशक्त्याश्रयतेति कदाचित्कस्याश्चिद्विवक्षया तत्तद्विचित्रानेककार्योपपत्तिः । क्वचिच्छक्त्याविष्टद्रव्यस्यापि साधनत्वेन व्यवहारः शक्तिशक्तिमतोरभेदस्यापि सत्त्वात् । शक्त्या करोतीत्यादौ शक्तेरपि द्रव्यायमाणतया शक्त्यन्तरयोगः । अतएव विभक्त्यर्थेनाव्ययेनाव्ययीभावः संगच्छते । द्रव्यस्यैव साधनत्वे तु तस्यशब्देनैवोक्तत्वाद्द्रव्यस्य प्रयोग एव नेति कथं तेन समासः स्यात् । पशौ कर्तरीत्यादेश्च कर्तृशक्त्याश्रये इत्यादिप्रकारेणार्थ इत्यलम् ।

---

शक्तिरेवेति । अत्र उक्तभाष्ये । हृर्यर्थमाह तत्रेति कारकाणां मध्ये इत्यर्थः । विपक्षे बाधकमप्याह किंचेति । ननु सिद्धांते शक्तिभेदेपि द्रव्यस्यैकरूपत्वेन तत्रैकस्मिन्कथं कार्यवैचित्र्यं बाधितत्वादत आह सर्वस्येति द्रव्यस्येत्यर्थः । इतीति तत्स्वरूपसत्ताप्रयुक्तकार्यस्य विनिगमकाभावेनासम्भवादित्यर्थः । कार्योपपत्तिरितिपाठः । नन्वेवं दण्डो घटसाधनमित्याद्युच्छेदापत्तिरत आह क्वचिदिति । तत्र बीजमाह शक्तीति । अपिना भेदसमुच्चयः । नन्वेवमपि शक्त्या करोतीत्यादौ दोष एव शक्तेः शक्तियोगासम्भवादत आह शक्त्येति । पारिभाषिकद्रव्यत्वेपि प्रसिद्धद्रव्यत्वाभावादाह द्रव्यायेति । अतएव शक्तेरेव साधनत्वादेव । निपातानामत्र वाचकत्वादाहार्थार्थकेनेति । अव्ययेनेत्यर्थः । विपक्षे बाधकमाह द्रव्यस्यैवेति एवेन पक्षद्वयनिरासः ।

नन्वेवमपि पशावित्यादौ दोष एवात आह पशाविति । एतेन शक्तिमत्कारकमिति सकलग्रन्थकारोक्तमपास्तं तदाहेत्यलमिति । उक्तं सर्वत्रोपपादयति सर्वेषांचेति । अतएवेत्यस्यार्थमाह क्रियेति ।

सर्वेषां च कारकाणां स्वस्वावान्तरक्रियाद्वारा प्रधानक्रियानिष्पादकत्वम्। अतएव तेषां भावनायामेवान्वयः क्रियाजनकत्वावगतौ का सा क्रियेत्याकाङ्क्षोदयेन तत्रैवान्वयौचित्यात्। असन्निहितसम्प्रदानस्यापि दातृबुद्धिस्थत्वे सति दातृज्ञानपूर्वकालत्वेनैव जनकत्वं तावतैव दानक्रियानिष्पत्तेः। घटं स्मरति घटं करोतीत्यादौ बौद्धघटादेः पूर्वकालत्वात्स्मृत्यादिनिष्पादकत्वमित्यूह्यम्। क्रियान्वयित्वं कारकत्वमिति तु न, कारकाणां भावनान्वय इ-

---

यत्तु क्रियाजनकत्वं न कारकत्वं पूर्वोदाहरणे पुत्रस्य कारकत्वाभावापत्तेः। तं विना प्रश्नक्रियाया अनिष्पतेस्तस्यापि जनकत्वमिति चेत्तथापि संप्रदानेऽव्याप्तिरविद्यमानसंप्रदानकस्यापि दानस्य जायमानत्वेन तस्य नियतपूर्ववृत्तित्वाभावात् नच यागस्य पूर्ववृत्तित्वाभावेपि अपूर्वद्वारा जनकत्ववत्संप्रदानादिज्ञानस्य पूर्ववृत्तित्वेन तद्द्वारा तस्यापि जनकत्वं सूपपादमिति वाच्यं क्रियानिष्ठविषयताश्रयत्वरूपक्रियान्वयित्वापेक्षयाऽनन्यथासिद्धनियतपूर्ववृत्तित्वघटितक्रियाजनकत्वस्य गुरुत्वात। आश्रयत्वरूपकृदर्थोपपत्तिस्तु जनके इवान्वयिन्यपि सुपपादा। असदुत्पत्तिवादे घटो जायते घटं करोतीत्यादौ कर्त्तृकर्मणोरव्याप्तेश्चेति दीक्षितभूषणकृदादयः तदसदित्याहास्मन्नीति। आदिना घटो जायते इत्यादि क्रियानिष्ठजन्यतानिरूपकजनकत्वमखंडोपाधिरूपं तत्र निविष्टमिति न गौरवं तदाहेत्याद्यूह्यमिति।

यत्तुदीक्षितभूषणकृदादयः क्रियान्वयित्वमेव कारकत्वं अतएव तत्र ब्राह्मणस्य न कारकत्वं क्रियान्वयित्वाभावात्। अन्यथा सुंदरं पुत्रं पृच्छतीत्यादौ सुंदरादिविशिष्टस्य पुत्रस्याक्रियाव्याप्यत्वेन सुंदरादीनां कर्मकारकत्ववत् ब्राह्मणसम्बन्धिपुत्रस्य विशिष्टस्य क्रियाव्याप्यत्वेन तस्यापि तत्वं स्यादेति तत्खण्डयति क्रियेति। संगतेयति पौनरुक्त्यापत्तेरुद्देश्यविधेयभावस्येष्टस्याप्रतीत्यापत्तेश्चेतिभावः। प

त्यस्य क्रियान्वयिनां क्रियान्वय इत्यर्थापत्त्याऽसंगत्यापत्तेः। अधिकरणस्य कारकत्वेन क्रियान्वय इत्यादिभवदीयव्यवहारासंगत्यापत्तेश्च।

(१)कश्चित्तु प्रत्यक्षादिनार्थं ज्ञात्वा परं प्रति संस्कृतेन बोधनेच्छायां संस्कृतस्य व्याकरणत एव प्रकृतिप्रत्ययविभागद्वारा यस्य ज्ञानं तेन पूर्वं क्रियान्वयानवगत्या कारकत्वज्ञानाभावात्तदीयसंस्कृतव्यवहारानुत्पत्त्या भाष्योक्तमेव साधु इत्याह।

यत्तु क्रियान्वितप्रत्ययार्थान्वयित्वं कारकत्वमिति तन्न पक्व ओदन इत्यादौ प्रत्ययार्थे कारकत्वकर्मत्वव्यवहारानापत्तेः। कारकाणां भावनान्वय इत्यस्य भङ्गापत्तेश्च। उक्तदोषाच्च। नच कारकशब्दस्य कर्तृप्रयोज्यत्वेन कारकं कारणमित्यादि विरुद्धं कारकं कर्तेति पुनरुक्तंचेति वाच्यम्। हरिणैव समाधानात्। तथाहि।

---

त्तेश्चेति। किञ्चक्रियाजन्यफलाश्रयत्वरूपस्य क्रियाव्याप्यत्वस्य ब्राह्मणेऽभावादित्यपि बोध्यं। पूर्वं व्याकरणज्ञानात्पूर्वं। कश्चिदित्यरुचिबीजं तु तदनभिज्ञं प्रति तत्प्रयोगे भ्रांतत्वापत्तिस्तदभिज्ञं प्रति तु प्रयोगे इष्टापत्तिर्व्याकरणस्य कल्पनाद्वारा धर्मनियमे उपयोगेपि न तत्रेत्यन्यत्र स्पष्टमिति। कर्मत्वेति तदादीत्यर्थः। कारकस्य प्रत्ययार्थेऽन्वयादाह कारणमिति क्रियान्वितप्रत्ययार्थान्वयिकारकाणां क्रियान्वयाभावेनाहोक्तेति।

एतेन क्रियान्वितविभक्त्यर्थान्वयित्वं कारकत्वमित्यप्यपास्तं पक्व ओदन इत्यादावोदनादेस्तत्त्वानापत्तेः। कर्त्तरि ण्वुलित्याह कर्त्रेति। कारकं कर्म करणमिति पाठः। आदिना संप्रदानं निष्प-

---

(१) केचित्तु अग्र इत्याहुः इति च पाठान्तरम्।

निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके ।
व्यापारभेदापेक्षायां करणादित्वसंभवः ॥

इति तेनोक्तम् । सर्वेषां तद्व्यापारद्वारा स्वातन्त्र्येणैव क्रियाजनकत्वात्कर्तृत्वेन कारकत्वम् । ततः कः केन किं क पचतीति विवक्षायां स्वस्वव्यापारवशेन करणादित्वम् । तत्र साधनान्तरानियोगव्यापारः कर्ता । तद्व्यापार एव सर्वत्र प्रधानधात्वर्थः । कर्तुः क्रिययेप्सिततमव्यापारं कर्म । कारकान्तरसाध्यव्यापारं करणम् । प्रेरणानुमत्यादिव्यापारं सम्प्रदानम् । अवधिभावोपगमव्यापारमपादानम् । कर्त्रादिव्यवहितक्रियाधारोऽधिकरणम् । स्वतन्त्रं प्रेरयन् हेतुः । तत्र सामान्यपूर्वकत्वाद्विशेषस्य कारकत्वमनुवृत्तमिति करणं कारकमित्याद्युपपत्तिः ।

यथा पुत्रजन्मनि पित्रोः कर्तृत्वेऽपि विवक्षयाऽयमस्याम् , इयमस्मात्पुत्रं जनयतीति व्यवहारस्तथैवमीदृशे स्थलेऽपादानस्य कर्तृत्वेऽपि ग्रामादागच्छतीत्येतद्विषये ग्राम आगच्छतीति प्रयोगो न । अनभिधा-

---

स्तीति निष्पत्तित्वावच्छिन्ननिरूपितकर्तृत्वं सर्वत्रैव कारकेऽस्तीत्यर्थः । भेदो विशेषः तदर्थमाह सर्वेषामिति । प्रागुक्तमेवाह स्वस्वेति । एवेनेतरापेक्षानिरासः । क्रियेति प्रधानेत्यादिः । सामान्यज्ञानस्य विशेषजिज्ञासाजनकत्वादाह तत्र इति । तदेव स्पष्टयति तत्रेति तेषां मध्ये इत्यर्थः । साधेति कर्मादिप्रेरणारूपव्यापारक इत्यर्थः । तदिति कर्त्रेत्यर्थः । एवं सर्वत्राग्रे बहुव्रीहिः । साध्यव्यापारमितिपाठः । आदिना कर्म क्रिया फलं व्यापारश्च । आधारशब्दोऽजहल्लिङ्गः । शंकोक्तदोषद्वयाभावमाह तत्रेति । सर्वत्र कर्त्रादावित्यर्थः । आदिना पौनरुक्त्याभावः अस्याहष्टचरत्वनिरासायाह यथेति । विवेत्यस्य विशेषेत्या-

नात् । करणत्वाद्यवस्थायां कर्तृसंज्ञा तु न कारकत्वादेव स्वातन्त्र्ये लब्धे स्वतन्त्रः कर्तेति पुनः स्वतन्त्रग्रहणं स्वातन्त्र्यमेव यस्य तस्य कर्तृत्वार्थं नतु पारतन्त्र्ययुक्तस्वातन्त्र्ययुक्तस्य । सा कारकसंज्ञा तु वस्तुसत्स्वातन्त्र्य स्थितिमात्रेण करणादीनां विधानसामर्थ्यात्प्रवर्तते इत्यलम् ।

यद्वा प्रधानक्रियाजनकपूर्वोक्तस्वस्वव्यापारे कर्तारः प्रधानकर्त्रा न्यक्कृतेऽपि स्वगततत्तद्व्यापारे स्वातन्त्र्यसत्त्वात् । अकुर्वतः साधनत्वानुपपत्तेः । एवं च तत्तद्व्यापारलब्धकरणत्वादिमन्त एव कर्तृपारतन्त्र्येऽपि स्वस्वव्यापारे स्वातन्त्र्यसत्वात्तद्वारा मुख्यक्रियायामपि स्वतन्त्रा इति प्रधानक्रियाकर्तृत्ववन्तोऽपीति तदुपपत्तिः । विभक्तिस्तु करणादिनिमित्तैवानवकाशत्वात् करणत्वादेरेवोद्भूतत्वात् । कर्तृवियोगेन तदीयव्यापारस्यैव धात्वर्थत्वेनोद्भूतस्वातन्त्र्यविवक्षायां तु कर्तृविभक्तिरेव सर्वत्र ।

---

दिः । नन्वेवमेतीतिप्रसंगापत्तिरत आह एवमिति । उक्तप्रकारेण तादृश्यव्यापारकापादानस्थले इत्यन्यत्र तथा प्रयोगस्येष्टत्वादाह ग्रामादिति । कारकत्वादेवेति यत इत्यादिः । अधिकारादिति भावः इति इत्यत्र सेत्यस्येतीति शेषः । ननु तत्रापि ण्वुलः कर्त्तरि विधानात्कथमेवमत आह विधानेति कारकाद्दत्तश्रुतयोरित्यादौ कारकशब्दः स्वर्यते तेन कारकाधिकारोक्तं कर्त्रादिषट्कमेव गृह्यते इति नाति प्रसंग इत्यन्यत्र स्पष्टं तदाहेत्यलमिति ।

स्वतन्त्रपदसामर्थ्यलभ्यप्रकारान्तरमाह यद्वेति । न्यक्कृतेऽभिभूतेपि करणादौ स्वव्यापाराभावे बाधकमाहाकुर्वत इति । एवं च स्वस्वव्यापारावश्यकत्वे च । तत्तदिति प्रागुक्तस्वस्वेत्यर्थः तदुपेति कारकं कर्मेत्याद्युपपातिरित्यर्थः । नन्वेवं तत्प्रयुक्तापि विभक्तिः कुतोना-

क्वचित्संप्रदानापादानयोस्तु न सा । अनभिधानादित्युक्तम् । यथा युद्धकर्तारोऽपि योद्धारो राजनियोगापेक्षत्वादस्वतन्त्रा अपि नियोगोत्तरं पुनः स्वतन्त्रा एव । नियोगमात्रात्तु तन्निष्ठजयादिभाक् राजा । तथा कर्तृनियोगोत्तरं यत्करणादिषु स्वव्यापारद्वारा क्रियानिष्पादने स्वातन्त्र्यं तत्करणत्वादिकालेऽबाधितमेवेत्यदोषात् । नियोगमात्रेण च तत्रैव कर्तृव्यवहारोऽपीति दिक् ।

यद्वा ज्वलनादिरूपस्वस्वव्यापारे स्वातन्त्र्यात्तेषां धात्वर्थत्वे एधाः पचन्तीत्यादिदर्शनाच्च । तत्कालिकस्वातन्त्र्येण कारकत्वं स्वस्वव्यापारद्वारा प्रधानक्रियानिष्पादकत्वेन च करणत्वादि । संप्रदानापादानयोरपि स्वव्यापारे स्वातन्त्र्यमादायैव ग्राम आगच्छति विप्रो ददातीति प्रयोगाभावेऽपि कारकत्वं बोध्यम् ।

---

त आह विभक्तिरिति । ननु विनिगमनाविरहो त आह करणत्वादेरिति । तत्पारतंत्र्येण स्वातंत्र्यस्यानुद्भूतत्वात् पारतंत्र्यमेव हि तत्रोद्भूतं । तत्वं च प्रकृतधात्वर्थानाश्रयत्वरूपत्वमेव । इदमपि वैवक्षिकमिति सूचयन्नाह कर्तृवीति तदीयेतिकरणादीयेत्यर्थः । स्वातंत्र्ये उद्भूतत्वं च विवक्षिते प्रकृतप्रधानसंपूर्णधात्वर्थाश्रयत्व रूपत्वमेव । सर्वत्रेत्यस्य कर्मकरणाधिकरणेष्वित्येवार्थ इति सूचयन्नाह क्वचिदिति । अस्य व्याख्या संप्रेति । पूर्ववदत्रापि दृष्टांतेन प्रोक्तं द्रढयति यथेति पूर्वयुद्धेति । अस्य प्रतिपादितत्वादाह पुनरिति । मात्रपदेन युद्धव्यवच्छेदः । इत्यदोष इतिपाठः । तत्रैव मुख्यकर्त्तर्यैव । यद्यपि ण्वुल् कर्त्तर्यैव तथापि कारकसंज्ञाविधानसामर्थ्यादन्यत्रापि तदाहेति दिगिति । प्राग्वदाह यद्वेति । धात्वर्थत्वे प्रकृतेत्यादिः । तात्कालिकेति पाठः । चकेति करणत्वा चेत्यर्थः । प्राग्वदाह संप्रेति वेऽपीति । अनभिधानाद्व कारकेति विधानसामर्थ्यात् ॥ पक्षत्रयेऽपि तदंशे

तदुक्तं भाष्ये पर्याप्तं करणाधिकरणकर्मणां कर्तृत्वनिदर्शनमपादानादीनां कर्तृत्वनिदर्शनायेति वृक्षोऽवधिभावमुपगच्छति विप्रोऽनुमन्यते इत्यादौ स्वस्वव्यापारप्रवृत्तयोः कर्तृत्वं दृश्यते। दाधातुवाच्यता तु नतद्व्यापारस्यानभिधानादिति बोध्यम्। कारकत्वं चोपलक्षणं सदेव तत्तत्संज्ञापयोगीति। स्पष्टं चेदं सर्वं भाष्ये सूक्ष्मदृशाम्।

ये तु क्रियान्वयित्वं कारकत्वं वदन्ति तेषां कर्तृसमवायेऽपि कारणं कारकमित्यादेरनुपपत्त्यभावात्तदाशङ्कासमाधानपरभाष्यासङ्गतिः। तदर्थे कारकशब्दस्य साधुत्वानुपपत्तिश्चेति बोध्यम्।

---

मानमाहतदुक्तमिति। भाष्येद्वयोरेवोल्लेखात्कर्मण उपलक्ष्यत्वेन ग्रहादाह करणेति तेषां निदर्शितं कर्तृत्वं तेषां त्तत्वनिदर्शनाय पर्याप्तमित्यर्थः। इतिर्भाष्यसमाप्तौ तदेव कैयटोक्तमाह वृक्ष इति। अनतिप्रसंगमाह पत्नीति। उक्तक्रमविवक्षया एवमुक्तं। नन्वत्र पक्षे यदा कदाचिद्विद्यमानस्वनिष्ठतत्क्रियोपयोगिक्रियानिरूपितस्वातंत्र्यमादाय कारकत्वमिति करणत्वादिकाले तदभावेन कथं तन्निमित्तककरणादिसंज्ञा तत्स्वय माह कारकत्वं चोपयोगीति वोध्यमिति पाठः। सर्वत्र स्वोक्तार्थे संमतिमाह स्पष्टं चेदमिति। साधारण्यनिरासायाह सूक्ष्मेति।

तदेवं स्पष्टयन् सिंहावलोकनन्यायेन खंडितमपि अन्यथापि खंडयति येत्विति दीक्षितभूषणकृदादय इत्यर्थः। कारकशब्दः सप्तम्यंतः क्रियापरः करोतिकर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः। अन्वेतीत्यध्याहारेणोक्तार्थलाभ इति तद्भावः। तत्र प्रागुक्तवाक्ये आशंकाया अज्ञानतोपि सम्भवादाह समेति। अतएवाह तदर्थे इति। यद्यपि भाष्येपियावत ब्रूयात् क्रियायामिति तावत्कारके इतीत्युक्तं तथापि विषयसप्तम्या तांद्वषयस्य कर्मादिसंज्ञेत्यर्थः। विषयत्वं च जनकत्वेनेति नक्षेष इत्यन्यत्र स्पष्टं। तत्र द्वितीयादिविभक्तीनां मध्ये द्वि

तत्र कर्मणि द्वितीयेति सूत्रे। तत्र कर्मत्वं व्याकरणशास्त्रे बोधितकर्मसंज्ञकत्वम्। तत्र कर्तुरीप्सिततमं कर्मेति सूत्रबोधितं कर्मत्वं कर्तृगतप्रकृतधात्वर्थव्यापारप्रयोज्यव्यापारव्यधिकरणफलाश्रयत्वेन कर्तुरुद्देश्यत्वम्। तण्डुलं पचति इत्यादौ विक्लित्याश्रयत्वात्कर्मत्वम्। विक्लितिरूपफलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात्तत्वम्। अतएव तत्समानाधिकरणे स्तोकं पचति इत्यादौ कर्मत्वम्। उद्देश्यत्वं च सत्ता गर्भितम्। अतएव कर्मणा यमभिप्रैति इति सूत्रे कर्मणेत्यस्याभावेऽपि कर्मण एव संप्रदानसंज्ञा पर्यायेण स्यात् इत्यापादितं भाष्ये।

---

तीयायाः कर्मणि शक्तिग्राहकमिति शेषः। तन्त्रे सकलसंग्रहायाह व्याकेति। तत्र एतद्बोधितकर्मसंज्ञकानां मध्ये प्रयोज्यत्वं फलविविशेषणं तत्वेन यः कर्तुरुद्देश्यस्तद्गतामित्यर्थः। ननु तल्लक्ष्ये तंडुलं पचतीत्यादौ तादृशं किं फलं यदाश्रयत्वेन तस्योद्देश्यत्वात्तद्गतत्वं तस्यात आह तंडुलमिति विशेषमाह विक्लित्तीति। तत्वं कर्मत्वं अस्य फलमाहातएवेति। तस्य कर्मत्वादेवेत्यर्थः। तस्याप्रातिपदिकत्वादाह तदिति इत्यादिघटकस्तोकादावित्यर्थः।

ननु तत्सूत्रात्तस्य तत्वं कथं लब्धमिति चेत् शृणु ईप्सितशब्दस्तत्रक्रियापरो नाभिप्रेतपरो रूढः व्याख्यानात्। स्पष्टं चेदं वारणार्थानामित्यत्र भाष्यकैयटयोः। कर्तुरिति क्तस्य च ति कर्तरि षष्ठी आप्नोतेः सन्नतान्मतिबुद्धीतिसूत्रेण कर्मणि क्तः मतिरिछेति तत्राकरः। एवं च कर्त्राआप्तुमिष्यमाणं कर्म। आप्तिश्चात्र सम्बन्धः तत्र कर्त्रा कर्मणः साक्षात्सम्बन्धस्यासम्भवात्कर्मत्वादीनां क्रियोपाधिकत्वाच्च क्रियाद्वारकः परंपरासम्बन्धो गृह्यते प्रधानधात्वर्थव्यापाराश्रयरूपकर्तृपदार्थविशेषणतया तस्या उपस्थिततयोपस्थितपरित्यागेनानुपास्थतकल्पनायां मानाभावाच्च। एवंच कर्त्रा स्वनिष्ठव्यापार

उद्देश्यत्वं च साक्षात्फलरूपे धात्वर्थे क्रियायाः फलेच्छापूर्वकेच्छाविषयत्वात् तदाश्रयत्वात्तण्डुलादीनामपि तत्त्वम्। फलस्यापि क्रियाजनकत्वम्। तज्ज्ञानपूर्वकं क्रियोत्पादनात्। रथो ग्रामं गच्छतीत्यादौ तु उद्देश्यत्वारोपेण निर्वाहस्तस्य न कालिकादिसंबन्धेन फलाश्रयेऽतिव्याप्तिः। फलतावच्छेदकसंबन्धेन तदाश्रयस्य ग्रहणात्।

---

प्रयोज्यफलेनसम्बन्धुमिष्यमाणं कर्मेत्यर्थः। एवंच कर्त्तृव्यापारप्रयोज्यफलसम्बन्धी ईप्सितपदेनोच्यते। फलसम्बन्धश्चाप्तता क्तप्रत्ययोपात्त वर्तमानत्वं तु न विवक्षितं तेन कटं कृतवान् करिष्यतीत्यादिसिद्धिस्तदेतदभिप्रेत्याहोद्देश्यत्वमिति। तद्भिनेच्छाविषयत्वासम्भवात्तद्व्यभ्यंतरीकृतमित्यर्थः। तदुपलक्षितमिति यावत्। अत्रमानमाहातएवेति। तस्योपलक्ष्यत्वादेवेत्यर्थः। द्वयोरनवकाशत्वादाहापर्यायेणेति। अन्यथा तस्य चतुर्थ्यर्थत्वेनात्र तदभावेन तदसंगतिः। अन्यथा प्रयोगस्यापि देवदत्तव्यापारजन्यविभागाश्रयत्वेन स दुर्वार एव तस्य प्रकृतधात्वर्थोद्देश्यता तु नेति स्पष्टमेव अवध्यन्वयाय तत्र विभागस्यापि धात्वर्थत्वात्।

ननु फलस्योक्तरीत्या फलाश्रयत्वेपि न कर्मत्वं क्रियाजनकत्वाभावेनाकारकत्वादत आह फलस्यापीति। नन्वेवं रथो ग्राममित्यादौ कर्त्तुरचेतनत्वेन तत्रेच्छाया असंभवात् कर्मणः कर्त्तृगतेच्छाविषयत्वाभावेनानुद्देश्यत्वात्कर्मत्वं न स्यादतआहोद्देश्यत्वारोपेति। (१)बन्धेन तदाश्रयस्य एवं च तत्र सम्बन्धनिवेशो नैवेतिलाघवमिति भावः) नन्वेवमपि चैत्रो ग्रामं गच्छतीत्यादौ संयोगादिरूपफलाश्रयचैत्रादेः कर्मत्वापत्तिरत आह गच्छतीति। नन्वेवमात्मानमित्यादि नस्यादत आहात्मानमिति तदुपालब्धमाहकर्त्तृगतेति। अन्यथा तदनिवेशे। अस्य कर्त्तुरिति सूत्रस्य। नचाग्नौ तच्चरितार्थे तस्यापि तदुपस्थाप्यसंयोगरूपफलाश्रयत्वात्कर्मत्वप्रासेः। तदाह

---

(१) अत्र किंचित्पाठस्त्रुटित एव सर्व पुस्तके।

यद्वा तस्य नोद्देश्यतेति न दोषः। गच्छतियोगे गम्यर्थसंयोगरूपफलाश्रयस्यापि कर्तुर्न कर्मत्वम्। पर-था कर्तृसंज्ञया बाधात् आत्मानं आत्मा हन्तीत्यत्र तु शरीरान्तः करणरूपावच्छेदकभेदेनात्मनि भेदमारोप्य कर्मत्वकर्तृत्वोपपादनं भाष्ये कृतम्। कर्तृगतप्रकृतधा-त्वर्थ व्यापारप्रयोज्यफलेत्युक्तेरग्नेर्माणवकं वारयती-त्यादावग्न्यादेर्न कर्मत्वम्। अन्यथा वारणार्थानामिति सूत्रमस्यापवादः स्यादिति माणवकस्यापि कर्मत्वं न स्यात्। वारयतेश्च संयोगाद्यनुकूलव्यापाराभावा-नुकूलो व्यापारोऽर्थः।

चैत्रं ग्रामं गमयतीत्यादौ ग्रामस्य कर्मत्वाय प्रयो-ज्यत्वनिवेशः। प्रयोज्यता च जन्याजन्यसाधारणी विषयताया अजन्यत्वे च स्वविषयज्ञानसामग्रीप्रयो-ज्यज्ञानविषयसाधारणी च निवेश्या

---

वारेति। एष एव प्रवृत्तिविघातः। ईप्सितशब्देनोभयत्रापि क्रिया-शब्द एव नच संयोगो नतत्कर्तृव्यापार जन्य इति तत्रकर्मत्वाप्रा-प्तिरिति वाच्यं कर्तृव्यापारवाचकधातूपात्तफलाश्रयत्वमित्यर्थस्यैव तेन लाभात्। आदिना गां दोग्धीत्यादौ विभागानुकूलव्यापारा-नुकूलव्यापारार्थक दुहित्वेन पयसः कर्मत्वसंग्रहः। ननु तावता-पि कथं संग्रहोऽत आह प्रयोज्येति चोह्यर्थे। नन्वेवमपि जाना-तीच्छतीत्यादौ विषयतानिरूपकज्ञानेच्छादि रेव व्यापार इति पक्षे विषयताया ज्ञानाजन्यत्वेन कथं फलाश्रय त्वमतआह विषेति। चस्त्वर्थे तेनारुचिः सूचिता।

वस्तुतो जन्यत्वमेवेति नैतस्या उपयोग इति। स्वं व्यापारः चेन पूर्वसमुच्चयः।

ननु माषेषु प्रसक्तमश्वं माषनाशो मा भूदित्यन्यत्र बध्नातीत्यर्थ-के माषेष्वश्वं बध्नातीत्यत्र कर्मण ईप्सिता माषा न कर्तुरिति कर्तृ-

माषेष्वश्वं बध्नातीत्यादौ बन्धनप्रयोज्यभक्षणाश्रयमाषाणां तत्त्ववारणाय प्रकृतधात्वर्थेति फलस्यापि विशेषणं बोध्यम्। पयसौदनं भुङ्क्ते इत्यत्र पयसः करणत्वस्यैव विवक्षणेन प्रकृतधात्वर्थफलाश्रयत्वेनाविवक्षणेनच न कर्मत्वम्। उभयविवक्षायां परत्वात्कर्मत्वमेव। नच पयसः कर्त्रुद्देश्यत्वाभावादेव तदप्राप्तिः यदा कृतभोजनोऽपि पयोलाभेन भोजने प्रवर्तते तदा तात्क्रियाया पयउद्देश्यकत्वसत्त्वात्।

फलत्वं च कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयतद्धात्वर्थत्वम्। पश्य मृगो धावतीत्यादौ धावनादेः फलत्ववारणाय तद्धात्विति। अन्यथा प्राधानानुरोधिकर्मत्वस्य बलवत्त्वान्मृगस्य कर्तृत्वं न स्यात्। कर्मणि विहितद्विती-

---

ग्रहणेन वारणेपि यदा पुष्ट्यर्थंमाषभक्षणाय माषक्षेत्रे एवाश्वबन्धनं तदा तेषां तत्वापत्तिर्बंधन प्रयोज्यभक्षणरूपफलाश्रयत्वादिति चेन्न फलव्यापारयोः प्रकृतधात्वर्थत्वस्य प्रत्यासत्तिलभ्यत्वात्तदाह माषेष्विति। भक्षणेति तद्रूपफलेत्यर्थः। तदाश्रयत्वेन तस्योद्देश्यत्वान्न तेन वारणमिति भावः। अतएव पुष्पेभ्यः स्पृहयतीत्यादौ नेति स्फुटीभविष्यत्यग्रे सूत्रे विशिष्टस्येदं फलं न तमपः। पयोऽन्युभयव्यावर्त्तकैकप्रकर्षस्य दुर्वचत्वात्तस्य तदुक्तामिति सूचयन्नाह पयसौदनमिति। पञ्चकं प्रातिपदिकार्थपक्षे आहोभयेति। ननु कर्त्तुरुद्देश्यं कर्मेत्येवास्तु किमीप्सितग्रहणेनेत्याशयेनाह न चेति। कत्वेति। सामान्ये नपुंसकं ईप्सितेत्यादेः क्रियाशब्दत्वेन विवक्षा लब्धेतिभावः। यद्यपि धात्वर्थव्यापारनिष्ठजनकतानिरूपितजन्यताश्रयत्वं फलत्वमिति प्राचोक्तं तथापि विषयतादीनामजन्यत्वमते विषयतायास्तत्वनिर्वाहायाह कर्त्रिति। आदिना चैत्रकर्त्तृकपाककर्मकोत्पत्त्यनुकूलयत्नस्त्वत्कर्त्तृक

यायाः कर्मत्वशक्तिमानर्थः। कर्मणीति सूत्रस्वरसात्। एवं सर्वविभक्तीनां तत्तत्कारकशक्तिमद्धर्मि बोधकत्वं बोध्यम्। तत्रच प्रकृत्यर्थो विशेषणम्। विशेष्यं धात्वर्थस्तच्छक्तिनिरूपकत्वसंबन्धेन। एवंच हरिं भजाति इत्यादौ हरिरूपं यत्कर्म तन्निष्ठशक्तिनिरूपकप्रीत्यनुकूलो व्यापार इति बोधः। प्रीत्यनुकूलो व्यापारश्च भजेरर्थः।

यत्तु फलाश्रयः कर्म तत्र फलस्य धातुना लाभादाश्रयो द्वितीयार्थस्तत्र प्रकृत्यर्थो विशेषणमाधेयतया

---

इत्याद्यर्थकस्य देवदत्तः पचति करोषीत्यादेः संग्रहः।

हेतुमतीतिसूत्रभाष्यसिद्धांतमाह प्रधानेति। पक्वौदनो भुज्यत इतिवत् प्राचीनमतखंडनायाह कर्मणीति। सूत्रेति अन्यथा कर्मत्वे इत्येव वदेत्। तत्रच कर्मत्वशक्तिमति च। सामान्ये क्लीबतया आह विशेष्यमिति एतेन पूर्वविरुद्धमिदमित्यपास्तं। अभेदस्यातत्वादाह, रूपमिति नतु प्रीत्येत्यादि कस्यार्थोऽत आह प्रीत्येति।

दीक्षितभूषणकृदादिमतं खण्डयति यत्त्विति। तत्र तयोर्मध्ये। तत्र द्वितीयार्थाश्रये। ननु कथं तस्य तत्वं गुरुभूतत्वान्नच गुरुण्यपि तत्वं निरूपितमिति वाच्यं। एवमपि निरूपकभेदेन सम्बंधिभेदेन च सा भिन्ना अन्यथा घटाश्रयतादिग्रहे पटाश्रयतादिग्रहापत्तिरितिशक्तिग्रहासौकर्यात्। अतएव तस्य नाखण्डोपाधित्वमत आहाखण्डोपेति तदादिन्यायेनेतिभावः। यत्तु आश्रयत्वं शक्यं अखण्डोपाधिरूपमाश्रयतात्वं च शक्यतावच्छेदकं तत्र शक्यतावच्छेदकेपि शक्तिरशक्यस्यैव वावच्छेदकत्वमित्यन्यत। तस्य च निरूपकतया फलेऽन्वयः। हरिवृत्याश्रयतानिरूपकप्रीत्यनुकूलेत्यादिक्रमेण बोधः। आश्रयस्य शक्यत्वे आधेयत्वस्य संसर्गत्वमुपेयं। तथाच तंडुलः पचतीत्यतोपि बोधापत्तिः।

नच द्वितीयासमभिव्याहारस्तादृशबोधे कारणं प्रथमायाः कर्मत्वे शक्तिभ्रमदशायां ततोपि तथा बोधेन व्यभिचारादिति प्राञ्च-

फलं विशेष्यमाश्रयत्वं शक्यतावच्छेदकमखण्डोपाधिरूपमाश्रयतात्वं वा तदनुगमकम्। आश्रयत्वस्य निरूपकतया फलेऽन्वय इति तु न युक्तम्, कर्मणि इति सूत्रस्वरसभङ्गात्। नचाधेयत्वस्य संसर्गत्वाङ्गीकारे तण्डुलः पचतीत्यतोऽपि बोधापत्तिरिति वाच्यम्। विभक्त्यर्थमद्वारीकृत्य प्रातिपदिकार्थधात्वर्थयोः साक्षाद्भेदेनान्वयाव्युत्पत्तेः। अन्यथा कर्मतासंसर्गकबोधस्याप्यापत्तिरिति तन्न। सप्तमी पञ्चम्यौ कारकमध्ये इत्यत्र कारकशब्दस्य शक्तिपरत्वेन शक्तिशक्तिमतोरभेदेन शक्तिमत एव द्वितीयाद्यर्थताया भाष्यादिसंमतत्वात्।

किंच अर्थी शब्दानां प्रवृत्तिरिति भाष्यसंमतमुख्यपक्षे संज्ञाशब्दैरारोपितस्वप्रवृत्तिनिमित्तबोधो यथा डित्थादिपदैः पूर्वपूर्वडित्थादिगुणारोपेण तत्तड्डित्थादिबोध इति ऋलृक्सूत्रे कैयटे स्पष्टम्। एवंचात्रत्यसंज्ञाशास्त्रैस्तत्तत्प्रवृत्तिनिमित्तशक्तेः संज्ञिनि बोधनमेवोचितम्। उद्देश्यतावच्छेदकस्यैव तत्तत्संज्ञाशब्दप्रवृत्तिनिमित्तत्वे फलाश्रयत्वात्कर्मत्वमित्यादिव्यवहारासंगत्यापत्तेः। नचास्य तत्वात्कर्मसंज्ञेत्यर्थः। लक्षणापत्तेः। संज्ञामजानतामपि तथा व्यवहाराच्च। अर्थीपक्षे कर्मादिशब्दानां पदप्रवृत्तिनिमित्तकत्वाभावेन तदुत्तरत्वप्रत्ययेन पदानभिधानाच्च। अनादित्वा-

---

एतन्मतं खण्डयति आश्रयत्वेति। तदुक्तं दोषमुद्धरति नचेति। दोषांतरमाह किंचेति। तस्यैव आश्रयत्वस्य। नन्वादौ तत्संकेतज्ञानात्कथं शक्तिग्रहोऽत आह अनादित्वादिति। अर्थसंबन्धैकवाक्य

व्यवहारस्य पूर्वपूर्वव्यवहारेण कर्मादिपदानां तत्तच्छक्तिमति ग्रहः ।

केचित्तु वृद्धिरादैजित्यादावप्येवमेव । तत्तत्प्रवृत्तिनिमित्तं च क्वचिद्वास्तवं क्वचिदारोपितमित्यपि व्यवहारतो निर्णयम् । यत्र टिघुभादिषु प्रवृत्तिनिमित्तज्ञानासंभवस्तत्र पदप्रकारक एव बोधो नलपदादाविवेति प्राहुः ।

किंचाश्रयत्वस्यातिप्रसक्तत्वान्न तच्छक्यतावच्छेदकमुचितम् । नच फलनिरूपितत्वाविशिष्टमाश्रयत्वं तथा । तद्रूपेणावच्छेदकत्वे गौरवात् । वैकुण्ठमध्यास्ते इत्यादौ तदभावेन तस्य न्यूनवृत्तितया द्वितीयाशक्यतावच्छेदकत्वानौचित्याच्च । तत्र शुद्धाश्रयत्वस्य शक्यत्वेऽमादेर्नानार्थत्वापत्तिः । हरिपदात्तस्य लाभेऽपि शक्तिमत्त्वेनालाभान्न दोषः । कर्मादिपदवत्त्वेन शक्यत्वे तु

---

तया । शब्दसंज्ञास्थलेपि नारायणाद्युक्तिमाह केचित्त्विति । एवमेव संज्ञाशास्त्रैः संज्ञिषु तत्तत्प्रवृत्तिनिमित्तबोधनमेव । पूर्वतो विशेषमाह तदिति । क्वचित् वृध्यादौ वर्धते रूपं । क्वचित् गुणादौ । ननु त्वयीपक्षे किं पदप्रवृत्तिनिमित्तत्वाभाव एव नेत्याह यत्रेति । तस्य सत्वेप्याह ज्ञानेति अस्यावश्यकत्वं लोकेपीत्याह नलेति । केचिदित्यरुचिबीजं तु वृध्यादौ नतथेतीदं तु बोध्यमित्यादिना प्रागुक्तमेवेति तदुक्तसंगतिमाह किंचेति । यद्यपि तेन रूपेणानुगमात्तत्र शक्तिग्रहसौकर्यं तथापि आहातीति तद आश्रयत्वं इमं दोषं परिहरति नचेति । एवमनतिप्रसक्तत्वेपि न्यूनवृत्तित्वात्तस्य तत्वमनुचितमेव । अन्यूनानतिरिक्तवृत्तिधर्मस्यैव तत्वांगीकारादिति दोषांतरमाह वैकुण्ठमिति फलनिरूपितत्वविशिष्टाश्रयत्वाभावेनेत्यर्थः । यस्य शक्यत्वे इति प्रकारत इति [illegible] । शक्यतावच्छेदक इत्यर्थो वा । तृतीयार्थस्य

गौरवम् । आकृत्यधिकरणरीत्या शक्तिरेव वाच्येत्य-न्यदेतत् ।

परे तु कर्मत्वादिशक्तिमान् तद्गतं विशेषणत्वं क्रियाकारकभावः सम्बन्धश्च द्वितीयार्थः । तद्द्योत्यो वा प्रातिपदिकार्थ एवं हि नानाशक्तियोगात्कर्मादि-शब्दवाच्य इति स एव विशिष्टशक्तियुक्तो विभ-क्त्यन्तवाच्य इति प्रशस्यस्य श्र इति सूत्रे कैयटो-क्तेः । विभक्त्यन्तरवाच्य इति पाठेऽपि प्रथमाति-रिक्तविभक्त्यन्तवाच्य इत्येवार्थः । अर्थाद्विभक्तिवि-

---

सम्बन्धित्वेन विवक्षया षष्ठीवा ।

ननु कर्मत्वशक्तिमानपि न शक्योऽन्यलभ्यत्वादतआह हरीति सकलसंग्रहाय संभावितप्राचोक्तप्रकारांतरं खण्डयति कर्मादीति । आश्रयस्य कर्मत्वादिशक्तिमतो वेति भावः । नन्वेवमाकृत्यधिकरण-विरोधः । उक्तविभक्तीनां तत्तच्छक्तिश्चेति प्रागुक्तविरोधश्चात आहा-कृत्येति । कर्मादिपदानां च शक्तिवाचकत्वमेव सप्तमीपंचम्यावि-त्यत्र कारकपदस्य शक्तिपरत्वात् शक्तिशक्तिमतोरभेदाद्युष्मत्समाना-धिकरणे इत्यपि नानुपपन्नं । अनभिहिते इत्यस्य तत्तच्छक्त्यनभि-धाने इत्येवार्थः । जात्या व्यक्त्याक्षेपवत्तया स्वाश्रयव्यक्त्याक्षेपः । तत्प्रकारकशक्तिग्रहस्य तद्विशिष्टविषयकोपस्थितित्वं कार्यतावच्छे-दकं वा अभेदाद्वा आश्रयबोधः । एवंच तिङ्कृतोरपि तत्रैव शक्ति-रस्तु स्पष्टं चेदं सार्वधातुके यगिति सूत्रे कैयटे । तथा च तत्तदाश-यकमिति न विरोध इति भावः ।

इदमपि प्राचामनुरोधेनोक्तमिति सूचयन् सिद्धांतमाह परेत्विति तत्रादौ प्रागुक्तमाह कर्मत्वादीति विशेषमाह तद्गतमिति । प्रागेतः दनुक्तिस्तु अनुपयोगात् । अर्थः वाच्यः । अयमपि न सिद्धान्त इति सूचयन्नाह तद्द्योत्योवेति । तत्रोभयसाधारणमाद्ये मानमाह प्रातीति । ननु पाठान्तरे वाचकत्वस्यैव लाभोऽतआह विभक्त्यंत-रेति । अन्तरेति । अन्तरशब्दस्यान्यार्थत्वे तदुक्तिरेव मानमित्याहा-

परिणामो भविष्यतीति भाष्यमुपादाय विभक्ति-शब्देन विभक्त्यन्तार्थ उच्यते इत्युपक्रमात्। कष्टं श्रितो भवतीत्यत्र क्रियाकारकयोरभिसम्बन्धस्य द्वितीया वाचिका भवतीति समर्थसूत्रभाष्याच्च।

यत्तु कैयटेनोक्तं अत्राभिसम्बन्धपदेन शक्तिरेवोच्यते तयोरभिसम्बन्धनिमित्तत्वादिति तन्न। राज्ञः पुरुष इत्यत्र राजा विशेषणं पुरुषो विशेष्यस्तयोरभिसम्बन्धस्य षष्ठी वाचिका, तथा कष्टं श्रित इति क्रियाकारकयोरित्यादि संदर्भेण षष्ठीवदस्या अपि संबन्धवाचकत्वस्यैव प्रतीतेः। भाष्यस्थसम्बन्धपदस्य लाक्षणिकत्वे मानाभावाच्च। क्रियात्वकारकत्वसमूहः सम्बन्ध इति तद्भाष्यार्थः। भेदसमानाधिकरणविशेषणत्वज्ञान एव सम्बन्धाकाङ्क्षेति तदपि द्वितीयावाच्यं। विशेषणत्वं च शक्तिमत्वे एवेति सापि तद्वाच्या।

---

र्थादिति। आद्ये तृतीयांशे मानमाह कष्टमिति। इति इत्यत्र तत्सं-बन्धस्वरूपं भाष्याभिमतं तद्वदाह क्रियात्वेति। प्रागुक्तहेतोराह समूह इति। ननूक्तभाष्यात्तावत एव लाभ इति आद्ययोर्निर्मूलत्व मतो द्वितीये युक्तिमाह भेदेति। अभेदस्थलनिरासार्थमिदं सम्बन्धेति। तद्विशेषेत्यर्थः। तदपि विशेषणत्वं चाति। अपिना तद्वतः संग्रहः। ननु तस्य विशेष्यत्वमेवेत्थं सति स्यादतआह शक्तेश्चेति। नन्वेवमपि पक्षान्तरं दोषएवात आहकारकेति। अत्र दृष्टान्तमाह संख्यावदिति नकेवलं दृष्टान्तमात्रमपितु वाचनिकोप्ययमर्थं इत्याह सत्वेति। ननु तत्प्राधान्येपि न सत्वप्रधानताहानिरत आह विभक्त्यर्थश्चेति। तदेवाह तत्र हीति। असत्वेति तादृशान्वयार्थस्येति भावः।

शक्तेश्च पञ्चकं प्रातिपदिकार्थं इति पक्षे विभक्ति द्योत्यतया विशेषणत्वमुचितम् । कारकस्य विभक्त्यर्थत्वपक्षेऽपि तथैव संख्यावत् । सत्त्वप्रधानानीति निरुक्ताच्च । विभक्त्यर्थश्चासत्त्वभूत इति तद्धिताश्चेति सूत्रे भाष्ये स्पष्टम् । तत्र हि विभक्त्यर्थप्रधानाव्ययस्य विभक्त्यर्थप्रधानत्वादसत्त्वभूतत्वमुक्तम् । विशेषणभूतत्वेऽपि कर्म हरीतिवत् हरिकर्मकेत्यप्युल्लेखः । कर्मशब्दस्य समासघटकस्य संज्ञाशब्दत्वेन तत्र विशेष्यविशेषणभावे कामचारात् । काण्डे इत्यादि विभक्त्यर्थप्रधानत्वोक्तिस्तु तदर्थसम्बन्धे प्रकृत्यर्थस्य प्रकारकत्वमात्रेण' संसर्गभानेन संसर्गविशेष्योभयनिरूपितत्वस्य प्रकारतायां स्वीकारात् । अतएवानेकमन्यपदार्थे इति सूत्रभाष्ये विभक्त्यर्थमुपक्रम्य तत्र हि सर्वपश्चात्पदं वर्तते इत्युक्तम् ।

---

नन्वेवं हरिकर्मकेति प्रसिद्धबोधाच्छेदापत्तिरत आह विशेषणेति शक्तेरित्यादिः । उल्लेख इत्यनेन आनुपूर्वीमात्रभेदो नत्वर्थभेद इति सूचितम् । तत्र मानमाह कर्मेति । अनति प्रसङ्गायाह हरीति । संज्ञेत्यनेन क्रियाव्यवच्छेदः । तत्र तेन समासे । नन्वेवं कांडे इत्यादेर्विभक्त्यर्थप्रधानत्वंतत्रैव भाष्योक्तं विरुध्येतात आह कांडे इति । संबंधे क्रियाकारकभावरूपे । मात्रपदेन शक्तिप्राधान्यनिरासः । ननु प्रकारताया विशेष्यतानिरूपितत्वमेवेति सूचितं । अत्र मानमाहातएवेति । तत्र (?)तकारादेवेत्यर्थः । विभक्त्यर्थमिति । अथवा विभक्त्यर्थोऽभिधीयते इत्यस्य समर्थनायेतिभावः । भाष्यमाह तत्रहीति । पदेन प्रकृत्यर्थोपसर्जनः प्रत्ययार्थः संबंधरूपोऽभिधीयत इतिविभक्त्यर्थस्यैव प्राधान्यादन्यपदार्थपदेन ग्रहणं सर्वपश्चादित्यत्र भाष्यकारवचनप्रामाण्यादव्ययेनापि षष्ठीसमास इति कैयटः । पूरणगुणेत्यत्राव्ययशब्देन कृदव्ययमेव गृह्यत इति गुरुचरणाः ।

अत्र द्योतकतापक्ष एव मुख्यः। पञ्चकं प्रातिपदिकार्थ इति पक्षे तत्त्वस्यैवोचितत्वात्। कुत्सिते इति सूत्रभाष्येऽपि।

स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतं।
समवेतस्य च वचने लिङ्गं संख्यां विभक्तिं च॥
अभिधाय तान् विशेषानपेक्षमाणश्च कृत्स्नमात्मानं।
प्रियकुत्सनादिषु ततः प्रवर्ततेऽसौ विभक्त्यन्तः॥

इत्यनेन पञ्चकं प्रातिपदिकार्थ इत्येवोक्तम्। सर्वत्र स्वार्थाभिधायकशब्दस्यैवाभिधानकर्तृत्वप्रतीतेः कर्मणि द्वितीया द्व्येकयोरित्यादीनां भाष्ये नियमत्वं युज्यते। तदुक्तं बहुष्विति सूत्रभाष्ये सुपो विशेषेण प्रातिपदिकमात्राद्विधीयन्ते इति। कैयटेन च

---

वर्त्तत इत्यस्यास्येति शेषः। सिद्धांतमध्येऽपि सिद्धांतमुपपादयितुमाहात्रेति अनयोर्मध्ये इत्यर्थः।

सिद्धांतपक्षेणाह पंचकमिति भाष्यमप्यत्र मानमित्याह कुत्सित इतीति। अस्योक्तमित्यत्रान्वयः। आर्याद्वयेन निरपेक्षो निमित्तांतरनिरपेक्षः शब्दः स्वार्थं प्रवृत्तिनिमित्तमभिधाय समवेतं तत्संबद्धं द्रव्यमाह समवेतस्य द्रव्यस्याभिधाने सति लिङ्गं वचनं सख्यां विभक्तिं कारकं त्वाह तानेतान्विशेषान् लिंगादीनामभिधाय स्वार्थादिपंचकवृत्तं कृत्स्नमात्मानमपेक्षमाणः शब्दः प्रियकुत्सनादिषु विभक्त्यंतः पुनः सतु वर्त्तते इत्यर्थः। अनेन अथवेत्युपक्रम्योक्तेन ग्रंथेन। ननु कथं ततस्तल्लाभोऽतआह सर्वत्रेति। द्रव्याविषये इत्यर्थः समानेतिक्तः। सत्वादिति भावः।

भाष्यान्तरमप्याह कर्मणीति। भाष्ये बहुषु बहुवचनमित्यादिसूत्रस्थे। (तदा हि यतसात्पक्षे) एवमुपपादने मानमाह तदुक्तमिति कैयटेन चेति। एतदग्रिमं यद्यप्यविशेषेण विधीयन्ते इति भाष्य प्रतीकमुपादाय सुपस्तावत्स्वार्थे विधीयमानाः स्वार्थद्रव्यलिङ्ग-

शक्तेश्च पञ्चकं प्रातिपदिकार्थ इति पक्षे विभक्ति द्योत्यतया विशेषणत्वमुचितम् । कारकस्य विभक्त्यर्थत्वपक्षेऽपि तथैव संख्यावत् । सत्त्वप्रधानानीति निरुक्ताच्च । विभक्त्यर्थश्चासत्त्वभूत इति तद्धिताश्चेति सूत्रे भाष्ये स्पष्टम् । तत्र हि विभक्त्यर्थप्रधानाव्ययस्य विभक्त्यर्थप्रधानत्वादसत्त्वभूतत्वमुक्तम् । विशेषणभूतत्वेऽपि कर्म हरीतिवत् हरिकर्मकेत्यप्युल्लेखः । कर्मशब्दस्य समासघटकस्य संज्ञाशब्दत्वेन तत्र विशेष्यविशेषणभावे कामचारात् । काण्डे इत्यादि विभक्त्यर्थप्रधानत्वोक्तिस्तु तदर्थसम्बन्धे प्रकृत्यर्थस्य प्रकारकत्वमात्रेण' संसर्गभानेन संसर्गविशेष्योभयनिरूपितत्वस्य प्रकारतायां स्वीकारात् । अतएवानेकमन्यपदार्थे इति सूत्रभाष्ये विभक्त्यर्थमुपक्रम्य तत्र हि सर्वपश्चात्पदं वर्तते इत्युक्तम् ।

---

नन्वेवं हरिकर्मकेति प्रसिद्धबोधोच्छेदापत्तिरत आह विशेषणेति शक्तेरित्यादिः । उल्लेख इत्यनेन आनुपूर्वीमात्रभेदो नत्वर्थभेद इति सूचितम् । तत्र मानमाह कर्मेति । अनति प्रसङ्गायाह हरीति । संज्ञेत्यनेन क्रियाव्यवच्छेदः । तत्र तेन समासे । नन्वेवं कांडे इत्यादेर्विभक्त्यर्थप्रधानत्वंतत्रैव भाष्योक्तं विरुध्येतात आह कांडे इति । संबंधे क्रियाकारकभावरूपे । मात्रपदेन शक्तिप्राधान्यनिरासः । ननु प्रकारताया विशेष्यतानिरूपितत्वमेवेति सूचितं । अत्र मानमाहातएवेति । तत्र (?)तकारादेवेत्यर्थः । विभक्त्यर्थमिति । अथवा विभक्त्यर्थोऽभिधीयते इत्यस्य समर्थनायेतिभावः । भाष्यमाह तत्रहीति । पदेन प्रकृत्यर्थोपसर्जनः प्रत्ययार्थः संबंधरूपोऽभिधीयत इतिविक्त्यर्थस्यैव प्राधान्यादन्यपदार्थपदेन ग्रहणं सर्वपश्चादित्यत्र भाष्यकारवचनप्रामाण्याद्व्ययेनापि षष्ठीसमास इति कैयटः । पूरणगुणेत्यत्राव्ययशब्देन कृदव्ययमेव गृह्यत इति गुरुचरणाः ।

अत्र द्योतकतापक्ष एव मुख्यः। पञ्चकं प्रातिपदिकार्थ इति पक्षे तस्यस्यैवोचितत्वात्। कुत्सिते इति सूत्रभाष्येऽपि।

स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतं।
समवेतस्य च वचने लिङ्गं संख्यां विभक्तिं च॥
अभिधाय तान् विशेषानपेक्षमाणश्च कृत्स्नमात्मानं।
प्रियकुत्सनादिषु ततः प्रवर्ततेऽसौ विभक्त्यन्तः॥

इत्यनेन पञ्चकं प्रातिपदिकार्थ इत्येवोक्तम्। सर्वत्र स्वार्थाभिधायकशब्दस्यैवाभिधानकर्तृत्वप्रतीतेः कर्मणि द्वितीया द्व्येकयोरित्यादीनां भाष्ये नियमत्वं युज्यते। तदुक्तं बहुष्विवति सूत्रभाष्ये सुपो विशेषेण प्रातिपदिकमात्राद्विधीयन्ते इति। कैयटेन च

---

वर्त्तत इत्यस्यास्येति शेषः। सिद्धांतमध्येऽपि सिद्धांतमुपपादयितुमाहात्रेति अनयोर्मध्ये इत्यर्थः।

सिद्धांतपक्षेणाह पंचकमिति भाष्यमप्यत्र मानमित्याह कुत्सित इतीति। अस्योक्तमित्यत्रान्वयः। आर्याद्वयेन निरपेक्षो निमित्तांतरनिरपेक्षः शब्दः स्वार्थं प्रवृत्तिनिमित्तमभिधाय समवेतं तत्संबद्धं द्रव्यमाह समवेतस्य द्रव्यस्याभिधाने सति लिङ्गं वचनं सख्यां विभक्तिं कारकं त्वाह तानेतान्विशेषान् लिंगादीनामभिधाय स्वार्थादिपंचकवृत्तं कृत्स्नमात्मानमपेक्षमाणः शब्दः प्रियकुत्सनादिषु विभक्त्यंतः पुनः सतु वर्त्तते इत्यर्थः। अनेन अथवेत्युपक्रस्योक्तेन ग्रंथेन। ननु कथं तंतस्तल्लाभोऽतआह सर्वत्रति। द्रव्याविषये इत्यर्थः समानेतिक्तः। सत्वादिति भावः।

भाष्यान्तरमप्याह कर्मणीति। भाष्ये बहुषु बहुवचनमित्यादिसूत्रस्थे। (तदा हि यतसात्पक्षे) एवमुपपादने मानमाह तदुक्तमिति कैयटेन चेति। एतदग्रिमं यद्यप्यविशेषेण विधीयन्ते इति भाष्य प्रतीकमुपादाय सुपस्तावत्स्वार्थे विधीयमानाः स्वार्थद्रव्यलिङ्ग-

स्यष्टमेवोक्तम्। अतएव दधि राजेत्यादौ प्रातिपदिकमात्रात्सर्वबोधः सङ्गच्छते। लुप्तस्मरणं तु लोपमजानतोऽसम्भवि। एकशेषसूत्रे प्रत्ययलक्षणकार्यं लोपफलं वदता भाष्यकृता तिरस्कृतं च। अतएव क्रीतात्करणपूर्वादिति सूत्रे गवाक्रीतेत्यत्रातिप्रसङ्गमाशङ्क्य विभक्त्या व्यवधानान्नेत्युक्तम्। अन्यथा विभक्त्यन्तस्यैव करणवाचकत्वेन तदसङ्गतिः स्पष्टैव।

सम्बन्धस्तु वाच्य एव। अतएव प्रकारीभूतविभक्त्यर्थसम्बन्धेन नामार्थधात्वर्थयोरन्वय इति वृद्धाः। हरिकर्मकप्रीतीत्यादिक्रमेण बोधः प्रकारीभूतो विभक्त्यर्थः। कर्मत्वादिशक्तिस्तद्घटितेन क्रियात्वकारकत्वसमूहरूपसम्बन्धेन तयोरन्वय इति वृद्धोक्त्यर्थः। प्रकारीभूतस्यापि सम्बन्धघटकत्वं दृष्टम् राज्ञः स्वामित्यादौ। अतएव घटमित्येतावन्मात्रोक्तौ क्रियाविशेषजिज्ञासा॥ तत्रापि वाक्यैकदेशन्यायेन घटकर्मिकेत्येव बोधः।

---

संख्याकर्मलक्षणः पंचकः प्रातिपादकार्थ इति दर्शने संख्यायां सिद्धा इति तेनोक्तं। उक्तं द्रढयति। अतएवेति। तत्पक्षस्यांगीकारादेवेत्यर्थः। परोक्तिखंडनं दार्ढ्याय स्मरति नकेवलं तावन्मात्रं किंतु दुष्टमपीत्याहैकेति। सरूपेतीत्यर्थः। दोषांतरमपि प्रागुक्तं अत एव द्योतकतापक्षस्य मुख्यत्वादेव। उक्तसिद्धांत्येकदेशिना पंचम्यर्थे बहुव्रीहिरितितद्भावः।

सिद्धांतस्तु करणादिति वाच्ये पूर्वपदादनुवृत्तप्रातिपदिकरूपान्यपदार्थावयववाचिपूर्वशब्देन बहुव्रीहिरिति तत्र नैवातिप्रसंगो मनसाक्रीतीत्यस्य सिद्धिश्चेति बोध्यं। अन्यथा वाचकत्वं। उक्तं द्योतकत्वमुभयनिरूपितं तृतीयनिरूपितमित्याह! संबंधस्त्विति। क्रिया-

यदा तु प्रातिपदिकार्थं इतराविशेषणत्वेनैव विवक्षितः शक्तिश्चतदभेदेनैव विवक्षिता तदाघटः कर्मेत्याद्येव। यदा शक्तिर्भेदेन विवक्षिता तदा द्वितीयादयः स्पष्टं चेदं षष्ठीशेषे इति सूत्रे भाष्ये। तदुक्तम्—

स्वशब्दैरभिधाने तु स धर्मो नाभिधीयते।

विभक्त्यादिभिरेवासौ उपकारः प्रतीयते इति॥

स धर्मःशक्तिरूपः विभक्त्याभिरित्यादिनांतरेत्याद्यव्ययग्रहणं। दधि तिष्ठति इत्यादौ प्रतिपादि-

---

कारकभावरूप इत्यर्थः। तस्य प्रकारतया अभानात् तदेवाहात एवेति। तस्यवाच्यत्वादेवेत्यर्थः। पूर्वं बोधानुक्तत्वादाह हरीति कर्म हरिकर्मकप्रीतीत्याद्यर्थः। ननु यस्य प्रकारत्वं न स संबंधो यश्च सः नस प्रकार इति विरुद्धेवेयमत आह प्रकारीति। त्त्यर्थः तत्घोषः। प्रत्येकं तस्यासत्वादाह समूहेति। ननु प्रकारीभूतस्य संबंधघटकत्वमपि विरुद्धमत आह प्रक्रेति अतएव तेन संबंधेनान्वयादेव। अन्यथा तदसंगतिः स्पष्टैव। ननूत्थापकाभावात्कथं सा ऽतआह तत्रापीति सिद्धांतमतेनाह वाक्यैकेति तथाच तयोर्नित्यसंबंधेन तदुत्थापकं सामान्यज्ञानमस्त्येवेति भावः।

विशेषमाह यदात्विति। धात्वर्थनिष्ठविशेष्यता उपजायंते तत्कृताश्चाख्याः प्रादुर्भवति कर्त्ता कर्मेत्यादि। ताश्च पुनर्विभक्तीनामुत्पत्तौ कदाचिन्निमित्तत्वेनोपादीयंते कदाचिन्न यदा व्यभिचरंति प्रातिपादिकार्थे तदा आद्यं यदा हि न व्यभिचरंति आख्याभूता एव तदा भवति कर्म करणमित्यादीत्युक्तं। तत्रत्य कैयटमूलं हरिमाह तदुक्तमिति स्वशब्दैः कर्मादिशब्दैः। नाभीति। सामान्यतोविशेषतो वा पृथक् नाभिधीयत इत्यर्थः। फलाश्रयत्वादिनैव ततो बोधादिति भावः। अत्रकर्मादिशब्दै र्नाभिधीयते इत्युक्त्या कृदंते सर्वथ तदनभिधानमिति लभ्यते। नहि कृतकर्मशब्दयोः कश्चिद्विशेषः। उभयत्रापि कर्मणि प्रत्ययात्। ग्रहणं चेति आदिशब्द आश्रयवाचीति। उद्योतस्तु प्राचामनुरोधीति बोध्यं। प्रातीते स्वप्रकृत्यर्थस्येत्यर्थः।

कग्रहणं च। उपकारशब्दोऽर्शआद्यजन्तत्वेन प्रातिपदिकार्थस्य स्वावेशेन विशिष्टद्रव्यवाचकानि ननूद्भूकारकशक्तिप्रतिपादकानि इति गतिकारकोपपदादिति सूत्रे भाष्यकैयटयोः स्पष्टम्।

अनभिहितसूत्रे तु अनुद्भूतशक्तिककर्मादिग्रहणं नेत्येतत्तात्पर्यकमेव। तिङोक्तावपि घटोऽस्तीत्यादौ प्रातिपादकस्योद्भूतकर्त्रादिशक्तावप्रवृत्तेः।

---

विशेषणेति। इतरेत्यादि किं परमकारकं कृतेपि तत्रात्र प्राप्नोति एतदपि कारकं एवं तर्हिचैत्रस्य कारकं इदमप्युदाहरणं। परमं कारकं परमकारकमिति नैतद्धि कारकं कारकविशेषणमेतत् यावत् ब्रूयात्प्रकृष्टं कारकमिति तावदेतत्परमं कारकमितीत्युक्तं। यथा संप्रदानादयः शब्दा न कारकरूपतां प्रतिपादयंति तथा कारकशब्दोपि इति कृदंता हि क्रियायोग्यताविशिष्टद्रव्यवाचिनो नतूद्भूतां कारकतां प्रतिपादयन्ति परममित्येतच्च न करोति क्रिया विशेषणं यतः कर्मकारकमेतत्स्यादपितु द्रव्यविशेषणं तथाचसमानाधिकरणसमास उपपद्यते इति च कैयटस्तत्र।

नन्वेवमनभिहित इति सूत्रं व्यर्थं अतआहानभीति। मेवेति तथा त द्विषये प्रातिपादिकस्योद्भूततच्छक्तौ वृत्त्यभाव इति उद्भूते कर्मणि वर्तमानात् द्वितीयेत्यर्थः सूत्रस्य फलितः। एवंच तिङ्कृतद्धितसमासैरभिधाने इत्यस्यापि तैरुक्तरीत्या बोधनविषये तत्तच्छक्त्यावेशेन न भानमिति विभक्त्यप्रसक्तिरिति। ननु पंचकपक्षे च प्रातिपदिकेनोक्तेपि कर्मत्वादौ यथा द्वितीया भवति तथा क्रियते कट इत्यादौ तिङादिभिरूक्तेपि तत्रेयं दुर्वारा विभक्तीनां द्योतकत्वेन तत्समभिव्याहारं विना प्रातिपदिकमात्रस्य तदबोधकत्वात् प्रं विना जयतेः प्रकृष्टजयाबोधकत्ववत्। किंच दार्ढ्यार्थं समासस्येति सूत्रभाष्योक्तेन द्विर्बद्धं सुबद्धं भवतीति न्यायेनोक्तार्थप्रयोगोपि स्यादत आह तिङाद्युक्तावपीत्यर्थः। ननूद्भूतत्वं तद्वत्तत्राप्यस्त्येव तुल्यत्वादत आह शक्ताविति। तद्वेपेति शक्तावनुद्भूतत्व

शक्त्यनुपमूलत्वं च सर्वत्र प्रतीयमानप्रातिपदिकार्थभेदेन प्रतीयमानत्वं तद्वैपरीत्ये निमित्तं चाकाङ्क्षादि प्रतिपाद्यत्वं तत्समानाधिकरणत्वं च। तदुक्तमभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति। अन्तर्भूतत्वं भेदेनाप्रतीयमानत्वमेव। प्रथमापि विशेषणत्वबोधिका। अस्तिक्रियायाः सर्वत्र सत्त्वात्। अतएव प्रथमायाः कारकाविभक्तित्वव्यवहारो भाष्ये इत्याहुः।

कारकान्वययोग्यक्रिया च धातूपस्थितैव न तु तद्धिताद्युपस्थिता। स्पष्टं चेदं कर्तृकर्मणोरिति सूत्रे भाष्ये। अतएव शतेन क्रीत इत्यर्थकशत्यपदोपात्तक्रियायां न कारकान्वयः। शत्यो देवदत्तेनेत्यादि।

---

इत्यर्थः। तदुक्तमिति अनेकमित्यत्र भाष्ये इति भावः। चित्रगुरित्यत्र षष्ठ्यर्थस्य नियमेन भानात् षष्ठी प्राप्नोतीत्याशंकायामाहाभीति। संपन्न इतीत्यस्य प्रथमेतीतिशेषः। अभिहित इति अनेनाशेषत्वरूपं षष्ठ्यप्राप्तिबीजमुक्तं अंतर्भूतइत्यनेन चित्रग्वादौ संबंधस्यैव प्रवृत्तिनिमित्तत्वेन प्रातिपदिकार्थपदेन ग्रहणयोग्यतोक्तेति बोध्यं।

ननु तत्र भेदेनाप्रतीत्या प्रथमास्थले को विभक्त्यर्थोऽतआह प्रथमापीति आद्यस्यासंभवादाह विशेषणेति। नन्वेवं क्रियाशून्ये कथमत आहास्तीति अतएव तिङ्समानाधिकरणेप्रथमेति वार्तिकं संगच्छते अस्तिर्भवंतीपर इति भाष्यं च। अतएव तस्याः सर्वत्र सत्वादेव भाष्ये द्वितीयपादादौ विशेषमाह कारकेति। तदन्वययोग्यतावच्छेदकरूपेण साध्यत्वेन तत एवोपस्थितेरिति भावः। एवव्यवच्छेद्यमाह नत्विति। आदिना अतएव तद्योगे न कर्मादिसंज्ञा द्विगुणादिसमासश्च स्पष्टमिति। तत्रहि कृतिकिं कृतोये कर्तृकर्मणी तत्रैव यथा स्यात्तद्धितस्य ये कर्तृकर्मणी तत्र माभूदित्युक्तम्। अतएव तेन रूपेण तत्र क्रियादेरभानादेव। तमेवाह शत्यइति। नन्वेवं भाष्यप्रयोगविरोधोऽत आहाधिकेति। क्रियायोगाभावेन कर्तुः कर्तृत्वाभावे जनकत्वरूप-

अधिका खारी द्रोणेनेत्यत्र तु हेतुतृतीया। विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतमित्यत्र तु पुनः साधुत्वाय इष्यते इत्यध्याहारावश्यकत्वेन तेन कर्मण उक्तत्वेन न दोषः। विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमिष्यते इति यत्तदसांप्रतमन्याय्यमित्यर्थः। तादृशेच्छाया अन्याय्यत्वं च तद्विषयस्याप्यन्नाय्यत्वेन। एवंच इच्छार्थेषु इति तुमुन्। अमुं नारद इत्यबोधीत्यादौ नारद इतीति श्रीकृष्णीयज्ञानाकारानुकरणं नारद इत्येतच्छब्दाभिलप्यमानाकारो बोध इत्यर्थ इति प्रथमान्तस्याप्रातिपादिकात्वान्न द्वितीयेत्यन्यत्र विस्तरः।

---

हेतुत्वसत्वात्। नन्वेवं विषेत्यादौ दोषोऽत आह विषेति। परमते नाहेत्यध्येति। अन्यथा क्रियार्थक्रियोपपदत्वाभावाच्छकादियोगाभावाच्च न स स्यादिति भावः

यद्यपि सांप्रतमितीदानिमित्यर्थकममरे उक्तं तथापि निपातानामनेकार्थत्वादाहान्याय्यमिति। ननु नेछायाः स्वतोऽन्याय्यत्व मतआह तादृशेछेति। यत्तु युज्यत इत्यध्याहारान्नदोषः साप्रतं इदानीं। असमर्थसमासः इदानीमेव संवर्ध्येदानीमेव च्छेदनमयुक्तमित्यर्थ इति तदसदिति ध्वनयन्नाहैवं चेति। तदध्याहारे चेत्यर्थः अन्यत्राप्येवं माहामुमिति सच शब्दो विभक्त्यंत इत्याह प्रथमेति। अतएवाधिहरीत्यादौ समासः एतेन क्वचिन्निपाते नाप्यभिधानमिति सकलग्रंथकारोक्तमपास्तं भाष्ये तिङित्यादेः परिगणनताया एव स्पष्टत्वाच्च। त्तद्वचनसामर्थ्येनापि तत्वकल्पनाया एव युक्तत्वाच्च। अतएव अभ्रआँ अप इत्यादौ सप्तमी। किंच निपातेनाभिधानेपि प्रातिपदिकादुद्भूतत्तच्छक्तिमत्वेनैव भानमिति तत्र विभक्तिः सुलभा शब्दशक्ति स्वभावादस्यैवार्थस्य द्योतको धिर्निपातः। अतएव परिगणनप्रत्याख्यानेऽपि न दोषः। तत्सत्वे तद्धिताद्युदाहरणं तु औपगवश्चित्रगुरिति नतु शसः। प्राप्तानंद इति। एतेन तथा सकलग्रंथकारोक्तमपास्तं

तण्डुलानोदनं पचतीत्यत्र विक्लेदनं निर्वर्तनं च पचेरर्थः। तण्डुलान् विक्लेदयन्नोदनं निर्वर्तयति इत्यर्थ इत्यनेनैव द्वयोःकर्मत्वम्। तण्डुलानामोदनं पचती-त्यादौ विकारयोगे षष्ठी निर्वर्तनेच पाकस्य करणत्वं तण्डुलविकारमोदनं पाकेन निर्वर्तयतीत्यर्थः। शेषष-ष्ठ्यन्तार्थस्य स्वान्वययोग्यनामार्थसमभिव्याहारे तेनै-वान्वय इति व्युत्पत्तेर्न तदर्थस्य क्रियान्वय इति कर्तु-रीप्सितेति सूत्रे भाष्ये स्पष्टम्। काष्ठं भस्म करोती-त्यादौ विकृत्यनुकूलव्यापारानिर्वर्तनं धात्वर्थोऽन्वयः प्राग्वत्। अत्र प्रधानकर्मणि लादयः।

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्॥

---

वस्तुतस्तयोरपि न प्रत्युदाहरणत्वमित्यन्यत्र स्पष्टमिति तत्प्रत्या-ख्यानपक्ष एव ज्यायानितिबोध्यं तदाहेत्यन्यत्रेति। उद्योता-द्वावित्यर्थः।

नन्वेवं तण्डुलानोदनं पचतीति कथं प्रसिद्धार्थेऽनेनोभयत्र कर्म-त्वाप्राप्तेःभाष्ये दुहियाचिरुधिप्रछिभिक्षिचिञ्ब्रूशासामेव अकथितं-चेत्यस्याप्यप्राप्तेरतआहतंडुलानिति। एवेनाकथितमित्यस्य व्यवच्छे-दः। एवं द्व्यर्थत्वमन्यत्रापीत्याहतंदुलाना मिति विशेषमाह विकारेति। ननु क्रियान्वयेऽपि कर्मत्वाविवक्षायां षष्ठी सूपपादाऽत आह शेषेति षष्ठ्यंतस्येति पाठः षष्ठ्यंतार्थस्येति पाठे बहुव्रीहिर्बोध्येः। तदर्थस्य शेषषष्ठ्यंतार्थस्य। इति उक्तं सर्वं तत्र हि द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठीत्येवोक्तं एवमन्यत्रापीत्याह काष्ठमिति। उक्तक्रमेणाह विकृत्येति काष्ठं विकारयन् भस्म निर्वर्त्तयतीत्यर्थ इत्याहान्वय इति भाष्यमते इष्टसिद्धिरेवेत्याहात्रेति। उभयविषय इत्यर्थः ननु विक्लित्याद्यनाश्रय-त्वात्कथमोदनादेः प्रधानकर्मत्वमत आह प्रधानेति व्यापारस्य विशे-षणेत्यर्थः। अस्यावश्यकत्वमाह ण्यंतेति तत्सूत्रेति कर्त्तरीति सूत्रेत्यर्थः।

इति भाष्योक्तेः। प्रधानकर्मत्वं च कर्तृप्रत्ययसमभिव्याहारे प्रधानभूतव्यापारविशेषणफलाश्रयत्वं व्यक्तविषये ईदृशप्राधान्यस्यैव ग्राह्यत्वात्। तदोक्तोदाहरणयोर्निर्वर्त्यमानौदनभस्मनोरेव तन्निष्ठफलविशेषणकव्यापारस्यैव तत्सूत्रस्थभाष्येण शाब्दप्राधान्यस्य प्रतीतेः। तण्डुलरूपे कर्मणि लादय इति तु नव्यानां प्रमाद एव। दुहादिषु भाष्ये गणनाभावाच्च।

नीहृकृष्वहामुत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापारार्थकानामनेनैव द्विकर्मता। संयोगस्य फलतावच्छेदकसम्बन्धो ग्रामनिष्ठस्तदनुकूलव्यापारश्चाजानिष्ठः प्रधानव्यापारजन्यफलाश्रयत्वादजा प्रधानं तत्र लादयः। उक्तभाष्यात्। 'तप्ते पयसि दध्यानयति सा

---

दीक्षिताद्युक्तिं खंडयति तंडुलेति उक्तं भाष्यविरोधात्। ननु दुहादिष्वाशयात्तदुक्तिरतो दोषांतरमाह दुहादीति एवमन्यत्रापीत्याह नीति यद्यपि वहेः स्कंधग्रहणादिपूर्वः सोर्थः नत्वनुकूलव्यापारविशेषः। कृषेर्बलात् ग्रहणपूर्वकंदेशांतरप्रापणं हरतेर्नयतेर्मौल एवेति भेदस्तथापि सामान्यस्य सर्वत्रानुस्यूतत्वादाहेतरेति।

वस्तुतस्तु क्वाचिकमिदं न सार्वत्रिकं उत्सर्गस्तु नीवह्योः प्रापणार्थत्वं एवंहृकृषोरप्यन्यार्थत्वं यथायथं प्रसिद्धमिति नशब्दरत्नादिविरोध इतिस्पष्टमन्यत्रेति बोध्यं।कर्तर्यनतिप्रसंगायाह संयोगस्येति संबंधअनुयोगित्वं तत्र अजारूपप्रधानकर्मणि। उक्तेति प्रधानेतीत्यर्थः नन्वेवं दध्नः प्रधानकर्मत्वेन तत्परामर्शापत्तौ मीमांसकसिद्धांतविरोधोऽत आह तप्ते इति। आर्थंतद्रूपं। नन्वेवमपि ग्रामवत् पय सोपि द्वितीयापत्तिरत आह दध्नीति। इदं संयोगविशेषणं तदनुकूलो व्यापारः कर्तृनिष्ठः सएव धात्वर्थो नतु पूर्ववद्व्यापार द्वयं तथा च कर्मद्वारा क्रियाधारत्वमिति भावः धातोरिति पूर्वान्वयि। नेया इत्यनेनारुचिः सूचिता अप्राधान्येपि तत्परामर्शसंभवरूपा। सर्वनाम्नां प्रधानपरामर्शित्व-

वैश्वदेव्यामिक्षा' इत्यत्र दध्यानयनेन पयसः संस्कार्यतयार्थप्राधान्यमादाय तच्छब्देन पयसः परामर्श इति मीमांसकग्रन्था नेयाः। दधिनिष्ठसंयोगानुकूलव्यापारार्थत्वाद्धातोः पयसः सप्तमी।

दुहेरप्यन्तःस्थितद्रवद्रव्यविभागानुकूलव्यापारानुकूलव्यापारार्थत्वे गां दोग्धि पय इत्यत्र गोपयसोरुभयोरप्यनेन कर्मत्वम्। गोः कर्तृव्यापारजन्यफलाश्रयत्वात् पयसः तत्प्रयोज्यफलाश्रयत्वात्। गोर्विभागाश्रयत्वेन तु न कर्मत्वम्। पयोनिष्ठविभागीयसम्बन्धस्यैव फलतावच्छेदकत्वात्। तत्त्वेनानुद्देश्यत्वाच्च। उक्तप्राधान्यं च गोरिति तत्र लादयः। एवमन्येषामपि दुहादीनां जिदण्ड्यादीनां च द्विकर्मकत्वं। बोध्यम्।

गर्गाः शतं दण्ड्यन्तामित्यत्रोक्तं प्राधान्यं गर्गा-

---

स्यौत्सर्गिकस्य भाष्यादिसंमतत्वादिति एवमन्यत्रापीत्याह दुहेरपीति गौः पयस्त्यजति गवा पयस्त्याजयतीत्याद्यर्थप्रतीत्या पयोनिष्ठविभागानुकूलगोनिष्ठव्यापारानुकूलव्यापारार्थकत्वे इत्यर्थः। क्रमेणोपपादयति गोरिति। संबंधविशेषनिवेशेऽपि नात्र दोष इत्याह तत्वेनेति फलाश्रयत्वेनेत्यर्थः। इदंचावश्यकमिति प्रागुक्तमेव उक्तेति। प्रधानेत्यादिना। गोः गोरेव। तत्र तत्रैव। अस्यैव द्विकर्मकत्वमाकडारसूत्रे भाष्ये उक्तं उपसंहरति एवमिति व्यापारद्वयार्थकत्वेनेत्यर्थः दुहादीत्यतद्गुणसंविज्ञानबहुव्रीहिणायाच्यादिग्रहणं दण्ड्यादीत्यादिना चुदिः। भाष्या विरोधं वक्तुं दाण्डिस्थले उपपादयति गर्गा इति।

नन्वेवं भाष्यविरोधोऽत आहोद्देश्येति आदिना शक्कारमलिचोदित इत्यादि परिग्रहः एवं सतियथाऽकथितंचेत्यस्य न वैयर्थ्यं

णामिति तत्रैव लादयः। उद्देश्यत्वरूपमार्थं प्राधान्यं तु ज्ञातस्येत्यनुद्देश्यत्वेनाप्रधानगर्गानुरोधान्न ज्ञातानुवृत्तिरिति न वृद्धिसूत्रस्थभाष्यविरोधः। अमृतमम्बुनिधिर्ममन्थ इत्याद्यप्येवमेव ॥

मासमास्ते इत्यादावास्यादेरासनादिकरणके व्यापने वृत्तिर्व्याप्तिर्मासादिनिष्ठा फलं, मासमासनेन व्याप्नोतीत्यर्थः।

---

तथाग्रे स्फुटीभविष्यति। अकर्मकेत्यस्याविधायकत्वस्यान्यत्र स्पष्टत्वात्तल्लक्ष्येष्वनेनैव कर्मत्वमाह मासमितिफलतावच्छेदकसंबंधो मासादिनिष्ठ इति व्याप्तिरूपफलाश्रत्वेन तत्वमित्याह व्याप्तिरिति। इत्यर्थः इत्याद्यर्थः। विनिगमनाविरहादाह यद्वा व्यापनेति। कर्त्तुरिति अत एव कालाध्वनोरित्यत्र 'कालाध्वनोः कर्मवदिति वार्त्तिकप्रत्याख्यानाय प्राकृतमेवैतत् कर्म यथा कटं करोतीत्युक्तं अकथितं चेत्यत्रत्यस्य अकर्मक प्रकृतिकण्यन्तानां कथंचित्सकर्मकत्वमिति शंकाया मुक्तस्य।

कालभावाध्वगंतव्याः कर्मसंज्ञा ह्यकर्मणां।

देशश्चेत्यस्य हिशब्दघटितत्वेनाविधायकस्य वचनत्वे उक्तंवा प्राकृतं वेति वदेत् इति भावः।

एतेन तत्कर्मसंज्ञाविधायकमिति सकलग्रन्थकारोक्तमपास्तम्। ननु एवमपि नासनजन्यत्वं व्याप्ताविति कथं तत्वमत आहासनेति। उभयथापीत्यस्यादावनुषंगः। अस्यावचनत्वमन्यथाप्याहानयेति। पक्षद्वयेनेत्यर्थः। तुल्यन्यायात् वचनत्वे तु तत्कर्मत्व मस्यास्तथा च तेषामपि कालादिकर्मणा सकर्मकत्वं तत्र कालादिकर्माप्रधानं द्रव्यकर्म तु प्रधानं कालस्याप्रधानत्वेनद्रव्यद्वारैव क्रियासंबन्धात्। किंच कठिणपाक्यस्य महा परिमाणस्य बहुसंख्यस्य च चिरेण पाकोऽस्याचिरेणेति द्रव्यधर्मपर्यालोचनया क्रियासु कालयोग इतिस बहिरंगः। अपिच साधन संबंधे जाते क्रियायाः परिच्छेदक बाह्यकालाकांक्षेति स बहिरंगः अकर्मक व्यवहारस्तुधातूनां द्रव्यकर्माभावनिमित्त-

यद्वा व्यापनपूर्वके आसने वृत्तिः मासं व्याप्नु- वन्नास्ते इत्यर्थः । उभयथापि कर्तुरिति सूत्रेण कर्मत्व- म् । आसनजन्यत्वस्य व्याप्त्यारोपेण तस्याः फलत्वं अनया रीत्या मासमोदनं पचतीत्यपि भवत्येव । आ- सनादिमात्रे वृत्तौ त्वधिकरणत्वात्सप्तमी । सभायां सभायां विजायते इति यथा ॥

ननु यद्यपि पराधीनतया विषं भुङ्क्ते इत्यादौ भु- जिक्रियाफलाश्रयत्वेनोद्देश्यत्वादनेन सिद्धम् । आत- श्च विषमीप्सितं यच्च द्रुष्यतीति भाष्योक्तेः । तथा- पि चोरान् पश्यति ग्रामं गच्छन् तृणं स्पृशति इत्या- दौ कर्मत्वं न स्यात् तेषामनुद्देश्यत्वात् । चोरा विषये- न्द्रियसम्बन्धाद्दृश्यमाना अपि न दर्शनोद्देश्याः । अ-

---

क एवेत्यन्यत्र स्पष्टं ।

मात्रपदेन व्यापनव्यवच्छेदः । एतेन तथा सतीयं न स्यादित्यपा- स्तम् । अत्र दृष्टांतमाह सभायामिति । इदंच सभां सभामिति सूत्रे भा- ष्यीय विग्रहकथनं इतोपि तस्य न वचनत्व मन्यथा तेन द्वितीयाया एव साधुत्वेन तत्र तदसंगतिः स्पष्टैव । एवंकर्तुरित्यस्य विषय मुक्त्वा तथायुक्तमित्यस्य विषयं वक्तुंशंकते ननुयद्यपीति । आतश्च इतोपि द्वेष्यमाह चोरानिति । उदासीनमाह ग्राममिति । एतेन द्वेष्येतदुदाहरन्तः सकल ग्रन्थकाराः परास्ताः । भाष्योक्तं तत्वमेवोपपादयति चौरा इति यथा स्पृश्यमानस्य गंगादेरीप्सितस्य स्पर्शादि जन्यसंयोगादि फला- श्रयत्वं तथैव तृणादेरपि तथेत्यनेन तदाह तथेति । अनेक कर्मत्वस्य अनति प्रसंगायाह तत्वंचेति अनुद्देश्यत्वं चेत्यर्थः । तेनेति तत्र तस्या नुद्देश्यत्वेपि माणावकस्योद्देश्यत्वमेव तद्धात्वर्थफलाश्रयत्वेनैवाहि त- त्र कर्मत्वप्राप्तिरिति भावः । अपिना कर्तुरिति सूत्रसमुच्चयः । भवत्व- मिति तथाच विषेणौदनं भुंक्त इत्यादौ करणत्वमात्रविवक्षायां विष- स्य न तत्वं अत्र विषस्य स्वव्यापारजन्यत्वसंबंधेन व्यापार एवान्वय-

पित्सनिष्ठदर्शना एवेति द्वेष्याः। तृणेऽप्यौदासीन्या-दनुद्देश्यत्वमिति चेन्न।

तथायुक्तं चानीप्सितमित्यनेन सत्त्वात्। अनी-प्सितत्वमनुद्देश्यत्वम्। तत्वं च प्रत्यासत्त्या यद्धा-त्वर्थफलाश्रयत्वेन कर्मत्वं तद्धात्वर्थकर्तुरेव बोध्यम्। तेन वारयति योगेऽग्न्यादेर्नानेनापि कर्मता। तथा-युक्तत्वं प्रकृतधात्वर्थप्रयोज्यफलाश्रयत्वम्॥

यत्तु परसमवेतक्रियाजन्यधात्वर्थफलाश्रयत्वं क-र्मत्वम्। परसमवेतेति विशेषणाचैत्रश्चैत्रं गच्छती-ति न प्रयोगः। तत्र द्वितीयया स्वप्रकृत्यर्थापेक्षया परत्वं बोध्यते। आख्यातेन तु स्वार्थसंख्यान्वय्यपे-क्षया। परसमवेतत्वं च धात्वर्थक्रियान्वयि गम्यप-

---

विवक्षेति न फलाश्रयत्वं प्रयागात्काशीं गच्छति चैत्र इत्यत्र प्रयाग-स्य च नेतिबोध्यं।

सूत्रद्वयार्थयोरेकलक्षणेन क्रोडीकार इति लाघवात्तदेव युक्तं न सूत्रद्वयमित्याशयेन जीर्णनव्यनैयायिकोक्तं खण्डयति यत्त्वित्यादि क्रि-येति धात्वर्थक्रियेत्यर्थः। धात्वर्थेति धात्वर्थतावच्छेदकेत्यर्थः। त-त्रैतद्रहितं प्राचोक्तमेतत्सहितं नव्योक्तं। चैत्रमिति इदमुपलक्षणं चै-त्रेण चैत्रो गम्यते इत्यपि प्रयोगे न द्वितीया कर्माख्यातयोस्तुल्या-र्थत्वात्।

तयोर्विशेषमाह तत्रेति लक्षणे इत्यर्थः। तयोर्मध्ये वा कर्त्राख्या-ते आह द्वितीति। कर्माख्याते आहाख्येति। फलस्य धात्वर्थत्वेन स्वा-र्थफलाश्रयापेक्षयेत्यस्य दुर्वचत्वादाह स्वार्थसंख्येति त्वयापि तथैव कार्यकारणभावांतरकल्पनात्। तथा च चैत्रो ग्रामं गच्छतीत्यादौ चै-त्ररूपग्रामान्यनिष्ठक्रियाजन्यधात्वर्थतावच्छेदकसंयोगरूपफलशालि-त्वात् द्वितीया। धात्वर्थतावच्छेदके त्यस्य फलमाह गमीति। एवंच गमेः संयोगः पतेरधः संयोगस्त्यजेर्विभाग स्तथास्यंदेर्नाकिंचित्फलं

त्योः पूर्वदेशे, त्यजेरुत्तरदेशे, स्यन्देश्च पूर्वपरयोः कर्मत्ववारणाय धात्वर्थेति । तत्र क्रियाफलस्य धातुनैव लाभादाधेयत्वं भेदश्च द्वितीयार्थः । तत्र फले आद्यान्वयोऽन्त्यस्य सामानाधिकरण्येन व्यापारे भेदे प्रकृत्यर्थस्य फलान्वयि व्यक्तिविशेषावच्छिन्नप्रतियोगितयान्वयः । एवंच ग्रामं गच्छतीत्यादौ ग्रामाधेय फलानुकूलग्रामभेदसमानाधिकरणव्यापारवानिति बोधः ।

एतेन प्रतियोगितासामान्येनान्वये द्वित्वावच्छिन्नप्रतियोगिताकचैत्रभेदस्य चैत्रे सत्वेन चैत्रश्चैत्रं ग-

---

तथेति नदोषः । अतएव त्यागो गमनमित्यनयोर्न पर्यायता । इदंच सर्वं द्वितीयावाच्यम् ।

तथा च ग्रामसमवेतधात्वर्थतावच्छेदकसंयोगानुकूलग्रामान्यसमवेतक्रियाजनककृतिमांश्चैत्र इति बोध इति तदनुवादो भूषणे तदसदिति सूचयन्नाह तत्रेति लक्षणघटकपदार्थानां मध्ये इत्यर्थः । तत्र आधेयत्वभेदयोर्मध्ये । आद्येति आधेयत्वस्येत्यर्थः । फलस्य पदार्थैकदेशत्वेऽपि व्युत्पत्तिवैचित्र्यात् तस्य धात्वर्थतावच्छेदकत्वं च कर्तृप्रत्ययसमभिव्याहारे धात्वर्थविशेष्यकबोधप्रकारत्वं अतएव कर्माख्याते फलस्य विशेष्यत्वेऽपि नक्षतिः ।

वस्तुतस्तदीया वच्छेदकत्वनिवेशो मास्तु अस्तु चेत्तस्य विशेषणत्वं विशेष्यत्वं च गम्यादौ विभागादेरधात्वर्थत्वादेव नदोषः । अतएवात्रगुरुचरणैस्तत्त्यक्तमिति नैव दोषः । धात्वर्थफलशालित्वमेवोच्यतां धात्वर्थफलत्वं च कर्तृप्रत्ययसमभिव्याहारे प्रकारतासम्बन्धेन धात्वर्थव्यापारान्वयिधात्वर्थत्वमिति बोध्यम् । अंत्यस्य भेदस्य । उभयसाधारणमाह प्रकृत्येति । व्यापारेति क्रियानुकूलकृतीत्यर्थः । तस्या अपिव्यापारविशेषणत्वात् ।

एतेन सम्बन्धविशेषनिवेशन । एवं कर्माख्यातेऽपि भेद आधेयत्वं चाख्यातार्थः । तत्र फलांशे आधेयत्वं क्रियायां चयथोक्तसम्बन्धेन भेदः । भेदे च फलाश्रयस्तथेति बोध्यम् । भेदे शक्तिश्चैत्रश्चैत्र-

च्छतीत्यस्यापत्तिः। अन्वयितावच्छेदकावच्छिन्नप्रतियोगितयान्वये देवदत्तो ग्रामं गच्छतीत्यस्यानापत्तिरिति निरस्तमिति।

तन्न। परया कर्तृसंज्ञया बाधेन(१)तत्प्रयोगापत्तेरसंभवेन भेदे शक्तिकल्पनस्य व्यर्थत्वात्। किंच द्वितीयार्थाधेयत्वान्वितफलप्रकारकबोधं प्रति द्वितीयान्तार्थवृत्तिभेदप्रतियोगितावच्छेदकव्यापारोपस्थितेर्हेतुत्वकल्पनेन तद्वारणात्। फलान्वयानुरोधेन तथावश्यके कार्यकारणभावे तादृशव्यापारप्रवेशेन न मे गौरवम्। तव तु भेदशक्तेः सामानाधिकरण्येन तत्प्रकारकबोधे धातुजोपस्थितिः कारणमिति कार्यकारणभावान्तरस्य च कल्पने गौरवं स्पष्टमेव। चैत्रमैत्रौ परस्परं गच्छत इति तूभयोः समम्। तव चैत्रमैत्रयोः परस्परपदार्थभेदवन्मम परस्परपदार्थे व्यापारवद्भेदस्य सत्त्वात्।

---

मित्यस्य साधुत्ववारणाय ततो बोधवारणाय वा तत्र नाद्य इत्याह परयेति। प्रागुक्तरीत्या आहोद्देश्यत्वेति तत्रेनेत्यादि नांत्य इत्याह नचेति। मम तु न तथा बोध इत्याह किंचेति। ततोविपरीतमाह तार्थवृत्तिभेदेति। कर्मणि कर्तृभेदात् तव विपरीतवत्। तादिति बोधेत्यर्थः। नन्वेवमेतत्प्रयुक्तमेव गौरवमत आह फलेति। तादृशेति। जनकतावच्छेदककोटौ द्वितीयांतार्थवृत्तिभेदप्रतियोगितावच्छेदकेत्यर्थः। सामेति तस्य शक्यत्वेपि तथान्यत्रान्वयवारणायेत्यादिः। तदिति भेदेत्यर्थः। धातुजोपेति। तज्जव्यापारो नेत्यर्थः। अवान्तरस्य तत्कार्यकारणभावतो भिन्नस्य। ननु चैत्रमैत्रौ मिथो गच्छत इत्यत्र व्यापारस्य द्वितीयान्तार्थवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकेत्येव

(१) उद्देश्यत्वाभावेन चेतिपाठान्तरम्

किंच घटं जानातीत्यादौ द्वितीयानापत्तिः। उक्तकर्मत्वाभावात्। नच तत्र विषयत्वे लक्षणा। कर्मण्येव द्वितीयेत्यादिनियमैरन्यत्र लक्षणयाप्यसाधुत्वात्। अतएव सुप्विभक्तौ न लक्षणेति त्वद्वृद्धव्यवहारः। वैकुण्ठमधितिष्ठतीत्यादौ अव्याप्तिश्च त्वदुक्तलक्षणस्य। संज्ञाया एव तन्नियामकत्वे तु किं भेदनिवेशेन। अनया रीत्या व्यापारव्यधिकरणधात्वर्थफलाश्रयत्वं कर्मत्वमित्याद्यपि खण्डनीयमित्यलम्।

यत्तु मीमांसकाः साध्यत्वं द्वितीयार्थः। व्रीहीनवहन्तीत्यस्यावहननेन व्रीहीन् भावयेदित्यर्थः। य-

---

विवक्षित मतएव भेदेत्येवोक्तम्।

अभ्युपेत्य दोषांतरमाह किञ्चेति। आदिना घटमिच्छति घटं करोतीति। तथाच त्वदुक्तकर्मत्वस्य द्वितीयोत्पत्तौ तत्साधुत्वे वा न प्रयोजकत्वं सविषयकधातौ तदभावापत्तेः। नच सविषयान्यत्रैतत्तत्र तु विषयतायाऽन्वय एव तथेति वाच्यम् कृष्णाय रोचत इत्यादावतिप्रसंगापत्तेस्तदेतद्धृदि निधायाह नचेति। अतएव तत्र तद्व्यवहारो भाक्त इति तदुक्तिः। अपिना शक्तिः। इदं तवापि संमतं इत्याहातएवेति। असाधुत्वादेवेत्यर्थः। प्राग्वदाह वैकुण्ठमिति आदिना क्रूरमभिक्रुध्यतीत्यादि तदिति द्वितीयेत्यर्थः।

दीक्षिताद्युक्तिंखण्डयति अनयेति चरमदोषेणेत्यर्थः। आदिना धात्वर्थफलशालित्वं॥ एतेन तथाभूषणकाराद्युक्तमन्यसकलग्रन्थकारोक्तं चापास्तं तदाहेन्यलमिति।

यत्तु मीमांसका इति पाठः। यदपीति पाठेऽपि स्त्वर्थे। सक्त्वधिकरणे इति शेषः। कर्तुस्तथेति सूत्रद्वयानुरोधादुभयसाधारणमाह साध्यत्वमिति तदुक्तं तैः।

श्रुत्या साध्याभिधायित्वं द्वितीयायाः प्रतीयते।
कर्तुर्यदीप्सितं यच्च तथायुक्तमनीप्सितं॥

यद्यपि व्रीहयः सिद्धा एव क्रियायाः साधनानि च तथाप्यदृष्टविशेषसाधानत्वरूपसंस्कार्यत्वमेवात्र साध्यत्वं बोध्यम्। सक्तून् जुहोतीत्यत्र सक्तूनां भूतभाव्युपयोगाभावेन प्रागुक्तसाध्यत्वासंभवेन तत्र व्यत्ययो बहुलमिति वचना तृतीयार्थे द्वितीया सक्तुभिर्भावयेदित्यर्थ इत्याहुः।

तेषामयं भावः वेदे कर्मत्वशक्तिः प्रागुक्तसंस्कार्यत्वसमानाधिकरणैवेत्येतावता तस्य द्वितीयार्थत्वमिति।

---

तत्कर्म तत् द्वितीयार्थ इत्येवं पाणिनिस्मृतिः।
बलीयसी च साचारात्प्रयोग श्चास्ति तादृशः॥

इति व्रीहीनित्यस्यैवं चेत्यादि। उक्तवैलक्षण्यमाह सक्तूनिति। अतएव तु यतः सक्तुकरणकहोमानुकूलव्यापारप्रतीतये तृतीयार्थः करणत्वं द्वितीयया लक्ष्यते तदुक्तं भट्टैः।

भूतभाव्युपयोगे हि संस्कार्यं द्रव्यमिष्यते।
शक्तयो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचित्॥
प्राधान्यमेव तत्रापि द्वितीया वदति स्वतः।
विरोधात्तेन सम्बन्धी गुणभावस्तु लक्ष्यते॥

इति भूषणकृदादयस्तन्न प्रागुक्तरीत्या लक्षणयापि तत्रासाधुत्वात्। तदूध्वनयन्नाह तत्रेति। तत्र साध्यत्वं शक्तिविशेष एवेति न कश्चित् कर्मशक्तिर्वाच्येत्यनेन प्रागुक्तेन विरोध इति। भूषणाद्युक्तेरसांगत्यायाह वेदे इति अनेन लोके नैवमिति सूचितं।

यद्यपि दुहादीनां व्यापारद्वयार्थत्वेन द्विकर्मत्वं प्रागुक्तमित्यकथितं चेति सूत्रं व्यर्थं तथापि पयोनिष्ठविभागानुकूलव्यापारादेरेव धात्वर्थत्वे गवादीनामपादानत्वाद्यविवक्षायामन्येनासिद्धकर्मत्वार्थमावश्यकमिति कैयटदीक्षितादिसकलग्रंथासांगत्यमिति च सूचयन् नटस्य शृणोतीत्यादावतिप्रसङ्गमाख्यातोपयोगे इति सूत्रभाष्योक्तपरिगणनताकेन—

दुहियाचिरुधिप्रच्छिभिक्षिचि ब्रूशासां योगेऽपादानत्वसंप्रदानत्वाधिकरणत्वानां विषयाभावे कारकं कर्माकथितं चेति सूत्रात् । तद्विषयाभावश्च सर्वथा तद्प्राप्त्या प्राप्तस्याविवक्षया चेति बोध्यम् । तत्रत्यन्तानां योगे कर्तुरिति विहितकर्मसंज्ञकेन धात्वर्थव्यापारात्प्रागपि यत्संबद्धं तदेव कर्म तेन कांस्यपात्र्यां गां दोग्धि पय इत्यादौ कांस्यपात्र्यादेर्न कर्मत्वं ब्रूशासियोगे तु तद्धात्वर्थव्यापारोत्तरं यदुक्तकर्मणा संबद्धं तत्कर्म । एतद्विहितं कर्म गौणं कर्मेत्युच्यते । पूर्वोक्तप्राधान्यानाश्रयत्वात् तत्वं च फलानाश्रयत्वात् । गां दोग्धि पयः । द्रवद्रव्यविभागानुकूलव्यापारो दुहेरर्थः । अपादानत्वं गोस्तदविवक्षायामनेन कर्मत्वम् । अत्र गौणकर्मणि गवादौ लादयः ।

---

दुहि याचि रुधि प्रछि भिक्षि चिञा मुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना ।

इत्यनेन वारयन् तदुक्तक्रमेणैव तद्विषयमाह दुहीति । तत्र पूर्वविधिशब्देनापादानसंप्रदानाधिकरणान्येव न करणं हस्तादेः करणस्य पयआदिकर्मयुक्तत्वाभावात् । भाष्यस्वरसोऽप्येवमेव । तदाह्वापादानेति विषयेति तत्त्वेत्यर्थः । एवमग्रेपि विशेषमाह तत्रेति । दुहाद्यष्टकमध्ये इत्यर्थः । अत्र दुहाद्यष्टकयुक्तमेवाकथितं कर्म तत्राप्युपयोगनिमित्तमेवेति द्वेधा परिगणनं । तत्रोपयोगनिमित्तमित्यस्य धातूनां स्वार्थफलाश्रयाकांक्षानिवर्त्तकत्वेनोपयुज्यत इत्युपयोगः कर्तुरिति सूत्रविहितं कर्म तस्य निमित्तमिव निमित्तं धात्वर्थव्यापारात्प्रागेव सम्बद्ध मित्यर्थस्तदेतदभिप्रेत्याह कर्त्तुरिति प्रागपीति पाठः । अपिना याचिविशेषे रुधिप्रच्छिविषये च तदनंतरसमुच्चयेन सर्वत्र तत्र संभवात्प्राक्तनमेव ग्राह्यमिति तत्त्वं । पात्र्यादेरिति अधिकरणत्वाविवक्षायामपीति शेषः । तदनंतरं तत्सम्बन्धेऽपि ततः

बलिं याचते वसुधाम् स्वामिस्वत्वनिवृत्तिस्वस्व-त्वोत्पत्युभयानुकूलो दीयतामित्यभिलापादिरूपो व्यापारो दिदापयिषाव्यंजको याचेरर्थः । अत्र बलौ पूर्वविषयस्य कस्यापि नप्राप्तिरिति कर्मत्वं, याचनाप्राग्दपायाभावेन बलेर्वसुधां याचत इतिनेष्टमिति स्पष्टं भाष्ये इत्यन्यत्र निरूपितम् ।

यत्तु स्वोद्देश्यकदानेच्छा याचनमिति तन्न पुत्रार्थं कन्यां याचते इत्यनापत्तेः । स्वसंप्रदानकदानेच्छावति-फलालाभशङ्कया देहीत्यवदत्यपि तथा प्रयोगाप-त्तेश्च । अवनीतं विनयं याचते । स्वीकारानुकूलो व्यापारोऽत्र याचेरर्थः स्वीकारश्चेदमवश्यं करिष्यामीत्य-

---

पूर्वं तत्सम्बन्धाभावादिति भावः । तदनन्तरमेव उक्तेति कर्त्तुरिति विहितेत्यर्थः । तद्वदेव विशेषमाहैतदिति । तत्वं च प्राधान्याना-श्रयत्वं च ।

अथोद्देशक्रमेणोदाहरणान्याह गां दोग्धीत्यादि द्रवेति अन्तस्थि-तपयोनिष्ठविभागेत्याद्यर्थः । गोः पयस्यन्वये षष्ठीति प्राग्वत् बोध्यं । अप्रधाने दुहादीनामिति भाष्योक्ते राहात्रेति एतत्सूत्रविहितकर्म-विषय इत्यर्थः । स्वामीति अत्रेत्यादिस्तन्निरूपितस्वत्वेत्यर्थः । आ-दिना चेष्टादि । न प्राप्तिरिति वसुधया स्वामित्वसम्बन्धश्चेत्यपि बोध्यम् ।

नन्वत्रापादानत्वप्राप्तिरेवात आह याचनेति विभागस्य धात्वर्थ-त्वाभावात् मात्रपदेन दाननिरासः । स्पष्टमिति । तत्र हि न याचना-देवापायो भवति याचितोऽसौ यदि ददाति तदापायेन युज्यते इत्युक्तं । याचिता याचनकाले प्रयोक्ता वाप्रयोगकाले नाध्यवस्य-ति । नूनमस्मादिदं वस्तु निर्गत्य मामेनं वा प्राप्नोतीति कैयटस्तत्र । असंकीर्त्तितपर्यायाकथितग्रहणे गां दोग्धि गोर्दोग्धि च । याचि-पृच्छिभिक्षियोगे कर्मसंज्ञैवेत्येषा व्यवस्थेति सिद्धान्ते कैयटश्च । एतदे-

भिलापादिजनको ज्ञानविशेषः। फलतावच्छेदकसं-
बन्धो विषयता। अत्रापादानादिविषयाभावादनेन कर्मत्वम्। याचनामात्रेण विनयसंबन्धाभावान्नात्र संप्रदानत्वमिति स्पष्टं भाष्ये। विनयेन च तद्विषयज्ञानवत्वं संबन्धः।

व्रजमवरुणद्धि गाम्। निर्गमप्रतिबन्धद्वारा व्रजाधिकरणकचिरस्थित्यनुकूलव्यापारो रुधेरर्थः। व्रजे गौस्तिष्ठति। तत्र तां निर्गमप्रतिबन्धेन चिरं स्थापयतीति संप्रत्ययात्। तस्याधिकरणत्वाविवक्षायामनेन कर्मत्वम्।

माणवकं पन्थानं पृच्छति। जिज्ञासाविषयार्थज्ञानानुकूलः केन पथा गन्तव्यमित्यभिलापादिरूपो व्यापारः पृच्छेरर्थः। माणवकस्य व्यापारे सम्बन्धसामान्येनान्वयः ज्ञानविषयत्वेन पथः कर्मत्वम्। माण-

---

स्वत्ववत् द्रव्यीयविभागाश्रयत्वविवक्षायामपादानत्वं बलेरित्यपास्तं। अतएव पौरवात् गां याचत इति प्रयोगो नेति बोध्यम् तदाहेत्यन्यत्रेति। उद्घातादावि[illegible]र्थः।

परमतं खण्डयति यद्वेति पुत्रार्थमिति पुत्रोद्देश्यकं ह्यत्र दानं तथेति चैत्रो याचत इतीत्यर्थः। विशेषाल्लक्ष्यांतरमाहावीति तमेवाहस्वीकारेति कर्तर्यनतिप्रसङ्गायाह फलतेति। नन्वत्रसम्प्रदानत्वप्राप्तिरवात आह याचनेति। मात्रपदेन तदनुष्ठाननिरासः। अवश्यं कर्मणा सम्बन्धवानेव स्वोद्देश्यो भवति अतएव संदिग्धसम्बन्धे तव दातुमिच्छतीति षष्ठ्येव। नन्वेवं कथमत्र ततः प्राक् तत्सम्बन्ध इत्यत आह विनयेनेति। तदिति विनयेनेत्यर्थः। तदनुकूलतामेस्वमत आह विनयेनेति। तदिति विनयेनेत्यर्थः। तदनुकूलतामे-
खमत आह व्रजेति। तस्य व्रजस्य सम्बन्धस्त्वेनेत्यर्थः। जनकत्वनेति यावत्।

प्राग्वदाह ज्ञानेति माणवेतिच। अपादानत्वं तु नात्र न प्रश्ना-

वक्रेन च तज्ज्ञानाश्रयत्वं संबन्धः। कस्यापि पूर्वविष-यस्याप्राप्तयाऽनेन कर्मत्वम्।

भिक्षिर्याचिना व्याख्यातः।

वृक्षमवचिनोति फलानि। विभागपूर्वकमादानं चेरर्थः। वृक्षात्फलानि आदत्ते इत्यर्थात्। अवधि-त्वाविवक्षायामनेन कर्मत्वम्। माणवकं धर्मं ब्रूते शास्ति वा।

ब्रूञो विषयतया ज्ञानानुकूल शब्दप्रयोगरूपोऽर्थः प्रवृत्तिपर्यन्तस्थायी स शास्तेः। स च धर्मं कुर्वित्यादि विधिघटितोपदेशरूपः। अत्रोभयत्रापि कर्तृव्यापारा-नन्तरं तज्ज्ञानाश्रयत्वरूपो माणवकेन सम्बन्धः वचना-दिकर्मणा धर्मेण माणवकस्याभिप्रेयमाणत्वात्। प्राप्त संप्रादनत्वाविवक्षायामनेन कर्मत्वमिति स्पष्टं भाष्ये। अनयोर्योगे सर्वथा पूर्वविधिविषयाप्राप्तियोग्ये विषये-नानेन कर्मत्वमनभिधानात्। तेन माणवकाय धर्मोप-देशकालं शूद्रेणापि श्रवणे शूद्रं धर्मं ब्रूते इति न प्रयो-गः अनभिधानं च ततः शिष्टलोकस्य बोधाभावरूप-मिति तदस्य तदस्मिन्नितिसूत्रेभाष्ये स्पष्टम्।

---

देवापायो भवति पृष्टोऽसौ यदाचष्टे तदा ऽपायेन युज्यते इति भाष्यात्। सम्प्रदानत्वमपि न कर्मसम्बन्धत्वेनेच्छाविषयत्वाभावात् तदाह कस्यापीति सः उक्तो व्यापारः। स च द्विविधश्च। विषयताश्च फलतावच्छेदकः सम्बन्धः। अत्र च्यंतभिन्नके। नस धर्मस्येतिशेषः। आदिना शासिः। विशेषमाहानयोरिति ब्रूशासोरित्यर्थः। तदेवाह तत्रहीति आद्याया अपि द्वितीयात्वेन यथाश्रुतभाष्यासङ्गतेः। कैयटमाह प्रयोक्तिङ्गति श्रोतापि तादृशएवेत्याह पंरति। ननु किं

तत्र हि द्वयी विवक्षा प्रायोक्त्री लौकिकी चेत्युक्तम् । प्रयोक्तृशब्देन व्यवहारार्थं प्रयोगकर्तारस्ते चापभ्रंशानपि प्रयुञ्जतेऽतस्तद्विवक्षा न शास्त्रे प्रवृत्तौ नियामिका। लोकशब्देन शिष्टलोकः स हि यत्रार्थे यं शब्दं धर्मं बुध्या परांशिष्ट बोधनाय प्रयोक्तुमिच्छति तद्विवक्षा शास्त्रप्रवृत्तौ प्रयोजिकेति तदर्थइति तत्र कैयटे स्पष्टम् । शिष्टाश्च शब्दतत्त्वविदः साक्षात्कृत परावरा इति पृषोदरादिसूत्रे भाष्येस्पष्टामिति भाष्येप्रदीपोद्योताद्यौ विस्तरः ।

अत्रापि कर्मत्वशक्तिमत्त्वेनैव द्वितीयया बोधः । कर्मसंज्ञाविधायकशास्त्रैस्तत्तदर्थे कर्मत्वशक्तिमत्त्वबोधनात् । अतएवाकथितंचेति सूत्रशेषे भाष्येऽनेनैव

---

नाम शिष्टत्वमत आह शिष्टाश्चेति एवं चार्थनिबन्धनेयं संज्ञेति कैयटादेः पञ्चादीनामधिकानामत्र गणनं चनेति नव्यादेश्च प्रमाद एव । अतएवाख्यातोपयोग इति सूत्रभाष्योक्तपरिगणत्वभंगो भिक्षिग्रहणवैयर्थ्यं च नान्यथोभयार्थकयाचिग्रहणेनैव सिद्धे तदानर्थक्यं तद्भंगश्च स्पष्ट एवेति दिक् तदाह विस्तर इति ।

नन्वत्र सर्वत्र गौणकर्मत्वात्कथं बोधोऽत आहात्रापीति । अत्र मानमाहात एवेति । तेनैव बोधादेवेत्यर्थः । अनेनैव अकथितमित्यनेनैव। आद्येति कर्तुस्तथेतीत्यर्थः । त्वेनेति (त्वेति त्वेनेति) त्वे इति पाठांतरं ईप्सितमिति एवं सति तथेत्यप्यावश्यकं अन्यथा बोधवैलक्षण्यात्तयोरावश्यकत्वे तथा समाध्युक्त्यसंगतिः स्पष्टैव । तत्राधारो द्वितीयार्थ इति प्राचामाधारत्वमाधेयत्वं वा द्वितीयार्थ इति परोक्तस्य चासांगत्यायोक्तमेवान्यत्रापि विशिष्याहैवमिति । आदिभ्यामभिनि उपाच्चेति सूत्रयोस्तल्लक्ष्याणां च ग्रहः । विशेषमाहादीवेति एतेन क्रीडार्थकदिवुधातुयोगे शतं दीव्यतीत्यादौ तृतीयांतपदानुपस्थाप्यतद्धात्वर्थसाधकतमत्वमेव तत्कर्मत्वमिति परोक्तमपास्तं कर्मत्वशक्तीति ।

सर्वत्र कर्मत्वसिद्धेः आद्यसूत्रद्वयवैयर्थ्यमाशङ्क्यैवं सति वारणार्थानामिति सूत्रस्यानवकाशत्वेन माणवकादपि पञ्चमी स्यादितीप्सिततमामित्याद्यारब्धव्यमित्युत्तरितम् ।

एवं वैकुण्ठमधितिष्ठतीत्यादावपि बोध्यम् । अधिशीङ् स्थासामित्यादिभिराधार इत्यनुवृत्त्या तस्य कर्मत्वशक्तिमत्त्वबोधनात् । दिवधातुयोगे दिवः कर्म चेति सूत्रात्तद्दात्वर्थं साधकतमस्य कर्मत्वकरणत्वोभयशक्तिमत्त्वं बोध्यम् । शतं शतेन वा दीव्यति । एवंच सर्वसाधारणकर्मत्वं कर्मत्वशक्तिमत्त्वं । धातूनां सकर्मकत्वमपि कर्मत्वशक्तिमदर्थान्वय्यर्थकत्वमिति दिक् ।

उपपदविभक्तीनां सर्बन्धोर्थः । विशिष्यानुक्तेः षष्ठ्यपवादकत्वाच्च । उभयतः कृष्णं गोपाः । कृष्णसंबन्धिपार्श्वद्वयवर्तिनइति बोधः । धिक् कृष्णाभक्तम् । कृष्णाभक्तसंबन्धिनी निन्देत्यर्थः । धिगर्थो निन्दा । उपर्युपरि अधोऽधः अध्यधि वा लोकं हरिः । द्विरुक्तोपर्यादेः समीपोर्ध्वभागसमीपाधस्तनभागसमीपदेशवृत्तित्वानि क्रमेणार्थः। सामीप्यरूपः सम्बन्धो द्वितीयार्थः सामीप्यं न षष्ठ्यर्थ इति त्वन्वयिपदावा-

---

एतेन संकेतविशेषसम्बन्धेन कर्मशब्दवत्त्वमेव त्त्वमिति तदुक्तमपास्तं । अर्थकत्वमिति एतेन व्यापारव्यधिकरणेत्यादि भूषणाद्युक्तमपास्तं अध्यास्ते इत्यादेः सकर्मकतानापत्तेः अकर्मकतापत्तेश्च नचेष्टापत्तिः ।

अन्तः कंचुकिभिर्लसन्मणिधरैरध्यासिता भूमयः ।

इत्यादौ दीव्यंते ऽक्षा इत्यादौ च कर्मणि प्रत्ययानापत्तेर्भावे तदापत्तेश्चेतिदिक् । प्रतिपादितमिदं मूले एवादौ तदाहेति दिगिति ॥

कथं ग्रामदिशं न षष्ठ्यर्थ इत्येव परम् । अतएव वृक्षस्य समीपमित्यादौ तत्र संबंधे षष्ठी । लोकसमीपोर्ध्वभाग वृत्तिरित्यादिक्रमेण बोधः ।

अभितः परितो वा कृष्णं गोपाः । अनयोः समीपसर्वदेशावच्छेदेनेत्यर्थः । सामीप्यरूपः संबन्धो द्वितीयार्थः । अभित इत्याभिमुख्येऽपि कृष्णसंमुखे इत्यर्थः । समया निकषा वा ग्राममित्यत्राव्यये समीप इत्यर्थकेऽधिकरणशक्तिप्रधाने द्वितीयार्थः सामीप्यरूपः सम्बन्धः । ग्रामसमीपदेश इति बोधः । हा कृष्णाभक्तमित्यत्र हाशब्दः शोके । तत्संबन्धी शोक इत्यर्थः । बुभुक्षितं न प्रतिभातीत्यादौ बुभुक्षितसम्बन्धी यत्किञ्चित्विषयप्रतिभाभाव इत्यर्थः । प्रतिभा झटिति स्फूर्तिः । अन्तरा त्वां मां च हरिरित्यत्रान्तरेति मध्ये इत्यर्थकम् । अवधित्वसंबन्धो द्वितीयार्थः । त्वन्मदवधिकमध्यवृत्तिर्हरि रिति

---

अथोपपदविभक्तिभूतद्वितीयार्थं निरूपयन्सामान्यत आहोपेति नन्वेवमनिर्दिष्टार्था इति न्यायेन स्वार्थे स्युरत आह षष्ठ्यर्थेति । देशेति देशानां वृत्तित्वादित्यर्थः । सामीप्ये द्वित्वविधानात्प्रतियोगित्वरूपः सम्बन्धो द्वितीयार्थ इति कश्चित्तन्नेति सूचयन् कैयटोक्तमाह सामीति । ननु सामीप्यमषष्ठ्यर्थ इति सिद्धान्तात्कथं तदपवादभूताया अस्या अयमत आह सामीप्यमिति । तत्र सामीप्यरूपे । अतएवाह सामीप्येतिकृष्णसमीपदेशावच्छिन्ना गोपा इति बोधः । अव्यये समया निकषा रूपे । अधिकरणशक्तिप्रधानत्वादाह मध्ये इति । रूपः सम्बन्ध इति मध्यत्वान्वयीत्यर्थः । त्वदित्यस्यैवं चेत्यादिः । एवमग्रेपि प्रागुक्तसिद्धान्तानुरोधेनाह भाववानिति । अधिकरणप्रधान इत्यर्थः । अत एव वक्ष्यति वृत्तिरिति । तत् अन्तरेति । गित्वं अभावान्वयि । प्रागुक्तसिद्धान्तानुरोधेनाह सुखसत्त्वाभाव इति अभावमात्रमर्थः । भ

बोधः। अन्तरा हरिं न सुखमित्यत्राभा-वार्थस्तदर्थः। हरिशब्दस्तद्भक्तिलाक्षणिकः। द्वितीयार्थः प्रतियोगित्वम्। हरिभक्तिप्रतियोगिकाभाववद्वृत्तिः सुखसत्ताभाव इति बोधः। एवमन्तरेण शब्दोऽपि उभयार्थः। तद्योगेऽपि द्वितीया।

तव मम चान्तरा कमण्डलुरित्यत्र त्वन्मत्सम्ब-न्धी कमण्डलुर्मध्ये इत्यर्थादन्तराशब्दयोगाभावेन न द्वितीया। किञ्च यासामुपपदविभक्तीनां तत्तद्विशेष-सम्बन्धे विधानं तत्र तेषां सम्बन्धानां विशेषरूपेणा-विवक्षायां सम्बन्धत्वेन विवक्षायां षष्ठ्येव। स्पष्टं चेदं चतुर्थीतदर्थार्थेति सूत्रे भाष्ये। तत्र हि तादर्थ्य-स्य सम्बन्धत्वेन विवक्षायां षष्ठ्युक्ता। गुरोरिदं गुर्व-र्थमिति। विशेषसम्बन्धे विधानं च क्वचिद्विशेषोक्त्यैव। यथानुर्लक्षणे इत्यादौ।

क्वचित्तु तत्तदर्थस्य तत्तत्सम्बन्धेन सम्बन्धिनि नि-यताकाङ्क्षया, यथा प्रकृतेऽवधित्व प्रतियोगित्वयोः। एवंच त्वन्मत्संबन्धिमध्ये कमण्डलुरित्यर्थे न द्विती-या। ईदृशस्थले केवलौ तावेव मध्यस्यावधिभूता-वधिभूतामिति न निर्णयः। किंत्वन्यसहितयोरपि त-

---

न्यत्प्राग्वत् तत्प्रतियोगिकाभावसमानाधिकरणः सुखसत्ताभाव इति बोध इति कश्चित्। तत् द्वय मव्ययमेवे त्यन्यत्र स्पष्टं। नन्वेव मतिप्रसंगोऽतआह तवेति। ताद्योगेप्यदोषमाह किंचेति तत्र तदुपप-दविभक्तिविषये तदेवाह तत्र हीति ननु वाचनिकविशेषसम्बन्धे एवं सुवचत्वेऽपि न प्रकृते तथा वचनाभावादत आह विशेषेति। प्रका-रान्तरमाह क्वचेति। एवो व्युत्क्रमे इत्येव नेत्यर्थः। महासंज्ञाकर-णमन्वर्थत्वाय कर्म क्रियां प्रोक्तवंतः कर्मप्रवचनीयाः बाहुलका-

त्वप्रतीतिरिति नात्र द्वितीयेति । हलोऽनन्तरा इत्यत्र कैयटे स्पष्टम् ॥

जपमनु प्रावर्षदित्यत्र द्वितीयार्थो लक्ष्यलक्षणभावः संबन्धोऽनुद्योत्यः। कर्मप्रवचनीयसंज्ञात्वात् हेतुतृतीया बाधकत्वादत्र विभक्तेर्हेतुरपि द्योत्यः। लक्ष्यत्वं च ज्ञानजन्यज्ञानविषयत्वम्। जपज्ञानेन हि जपकालज्ञानद्वारा तदुत्तरकालवैशिष्ट्येन वृष्टिर्ज्ञाप्यते। अत एव कदा वृष्ट इति प्रश्ने इदमुत्तरम्। जपाभिन्नहेतुलक्षणकं वर्षणमिति बोधः। उक्तं च।

क्रियाया द्योतको नायं संबन्धस्य न वाचकः।
नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदक इति ॥

अस्यार्थः। प्रपचतीत्यादौ उपसर्गवन्नायं क्रियागतविशेषद्योतकः। विभक्त्यैवोक्तत्वात्सम्बन्धस्य न वाचकः। नापि प्रादेशं विलिखतीत्यादौ विशब्दवत् क्रियापदाक्षेपी। तत्र हि विना मानक्रियाक्षिप्यते तथा सति तत्क्रियानिबन्धना कारकविभक्तिरेव स्यात्

---

त्कर्तरि भूतेऽनीयः। तेन संप्रति क्रियां न द्योतयन्ति किन्तु क्रियानिरूपितं सम्बन्धविशेषं द्योतयंति ये ते तथेति लब्धमिति भावः। द्वितीये मान माह हेत्विति ॥

ननु तस्य द्वितीयार्थत्वे किमर्थं तस्य द्योतकत्व मत आह कर्मेति। लक्षणे इत्युक्तेराह लक्ष्येति। हेतुरपि द्योत्य इति सो पि द्वितीयार्थोऽनुद्योत्य इत्यर्थः। जन्यत्वरूपं न तदित्याह लक्ष्यत्वं चेति तत्र हेतुमाह जपेति। तत्र प्रकृत्यर्थे हेतौ तदर्थे भेदेनान्वेति तदाह जपाभिन्नेति। लक्षणकं तत्ज्ञानजन्यज्ञानविषयः। उक्तंच हरिणा प्रत्ययं कर्मप्रवचनीयः। क्रियापदलक्ष्यार्थमाह क्रियागतेति। वैषम्ये दृष्टांतः। एवमग्रेपि। सम्बन्धस्य लक्ष्यलक्षणभावादेः। शब्दार्थयोस्ता-

इति कर्मप्रवचनीययुक्ते द्वितीयेति व्यर्थं स्यात् किन्तु विशिष्टक्रियाजनितोऽयं सम्बन्धो विभक्त्यर्थ इति द्योतकः। यथा प्रकृते निशामनक्रियाकृतः सम्बन्ध इति।
लक्षणपदार्थलक्षणं तु हरिणोक्तं—
आश्रिनावधिभावं तु लक्षणे लक्षणं विदुरिति ॥
लक्षणे लक्ष्यवस्तुप्रकाशे आश्रितावधिभावं आश्रितःमर्यादारूपम्। अनु हरिं सुराः। स्वावधिकापकर्षरूपहीनत्वसंबन्धोऽनुद्योत्यो द्वितीयार्थः। हरिप्रतियोगिकापकर्षवन्त इत्यर्थः। उपहरिमित्यत्राप्येवम्। उपः स्वावधिकाधिकत्वसम्बन्धस्यापि द्योतकः। उप सुरेषु हरिरित्यादि।

वृक्षं प्रति विद्योतते विद्युदित्यादौ लक्ष्यलक्षणभावः प्रत्यादिद्योत्यः वृक्षप्रकाशेन हि तत्समीपदेशावच्छिन्ना विद्युद् ज्ञाप्यते। भक्तो विष्णुं प्रति। अत्र भक्तत्वादिप्रकारविशेषरूपः सम्बन्धः प्रत्यादिद्योत्यः। भक्तपदार्थे विशेषणस्यापि तस्य सम्बन्ध-

---

वात्स्यादाह क्रियेति। अत्र हेतुमाह तथासतीति यत इत्यादिःत्वर्थमाह किंत्विति अयं बुद्धिस्थः। प्रकृते जपमान्वित्यत्र। इतिरर्थसमाप्तौ। सूत्रे तस्यैवोक्तेराह लक्षणेति। भावे ल्युडित्याह लक्ष्येति. तथा च ज्ञानजनकज्ञानविषयत्वं लक्षणत्वम्। अधिकेआहोपेति कत्वेति तद्रूपहृति तद्रूपसंबंधेत्यर्थः। अपिः पूर्वसमुच्चये तत्र यस्माद्धिकमिति सप्तमीविधानादाहोप सुरेषु हरिरिति उपसुरान् हरिरित्यपपाठः आदिनोप परार्धे हरे गुंणाः उपखार्यां द्रोण इत्यादि अतएव प्राग्वत् द्वितीयार्थस्येत्यत्र नोक्तं।

लक्षणेत्थमित्यस्य लक्ष्यमाह वृक्षमित्यादि लक्ष्यत्वात्प्राग्वदेवेत्याह वृक्षं प्रति। वृक्षलक्षणका विद्युद्विद्योतत इति बोधः। ननु तस्य

त्वम् । लक्ष्मीर्हरिं प्रति हरिस्वामिकेति बोधः । वृक्षं वृक्षं प्रति सिंचति । अत्र वीप्साविषये व्याप्यत्वं द्विर्वचनद्योत्यं व्याप्यत्वविशिष्टवृक्षादीनां व्यापकत्व सम्बन्धेन सेचनेऽन्वयः प्रत्यादिद्योत्यः सेचने वृक्षादीनां कर्मत्वेऽपि तत्त्वेनाविवक्षायां कर्मप्रवचनीययुक्तत्वाद्द्वितीया अतएव प्रत्यर्थे शब्दनिवेश इत्यादावर्थस्य निवेशनक्रियानिरूपिताधिकरणत्वेऽप्यर्थमर्थं प्रतीत्यैव विग्रहो भाष्यादौ दर्शितः ।

यदत्र ममाभिष्यात्तद्दीयताम् । अत्र सच्छब्दो बुद्धिस्थत्वेन भागवाची । मत्सम्बन्धियद्भागकर्तृका

---

प्रकारत्वात्कथं संबन्धत्वमत आह भक्तेति । स्वस्वामिभावसंबंधस्तत्द्योत्य इत्याह हरिस्वामीति वीप्सा विषयो व्याप्यत्वमिति पाठः तस्याजहल्लिंगत्वात् वीप्साविषयव्याप्यत्वमिति समस्तपाठोवा द्योत्यत्वादेवाह व्याप्यत्वेति । चस्त्वर्थे । यद्यप्ययं द्विर्वचनबलादेव तथापि प्रत्यादिसत्वे सोपि तन्निर्णायक इति एता वतैव संबंधपरिछेदकत्वेन कर्मप्रवचनीयत्वं तदाह प्रत्यादीति। सकल ग्रन्थासांगत्याथाह सेचने इति। किंच कर्मणि द्वितीयायां प्रतिनाऽसामर्थ्यात्प्रतिवृक्षमित्यादौ समासानापत्तिः एतेनोपपदविभक्तिरिति न्यायात्कर्मण्येवात्रद्वितीयेति दीक्षिताद्युक्तं कर्मण्येवात्र द्वितीया पर्यादयस्तु क्रियाविशेषका एवेति हरदत्ताद्युक्तं चापास्तं । किंच प्रत्यादेः क्रियाविशेषकत्वेऽनर्थतया कर्मप्रवचनीयसंज्ञाया एवानापत्तिः अतएव भाष्येऽपि किमर्थं पुनरिद मुच्यते नचोपसर्गादिसंज्ञाबाधनार्थं क्रियायोगाभावादित्युक्त्वा द्वितीयार्थमिति सिद्धांतितं वृक्षंप्रतिसिञ्चतीत्यादि क्वचिल्लक्ष्येक्रियान्वये कर्मत्वादेव द्वितीया सिद्धेति प्रश्नः, तदविवक्षायां षष्ठीबाधानार्थमकर्मकार्थं चावश्यकमित्युत्तरं । तदेतदभिप्रेत्योक्तं द्रढयति अतएवेति । वृत्तिविषये प्रतिरेव वीप्साया अपि द्योतक इत्यन्ये । अभिरित्यस्योदाहरणान्युक्तप्रायाणीति प्रत्युदाहरणमाह यदत्रेति ।

एतदधिकरणिका सत्ता प्रेरणाविषयस्तत्कर्मकं दानमिति बोधः।

सर्पिषोऽपि स्यात्। अत्रापिशब्दबलाद्विन्दुपदाध्याहारेणापेः पदार्थद्योतकता। संभावनायां लिङ्। बिन्दौ सर्पिष इत्यस्यावयवावयविभावेनान्वयः। बिन्दुश्चाख्यातार्थकर्तरि अन्वेति। अपिः क्रियायां स्वद्योत्यबिन्दुदौर्लभ्यप्रयुक्तदौर्लभ्यस्यापि द्योतकः। शब्द-

अपिः पदार्थेत्यस्य लक्ष्य माह सर्पिषोऽपीत्यादि। पदस्याप्रयुज्यमानस्य पदान्तरस्यार्थ इत्याशयेनाहात्रेति। यद्यपि मात्रा विदुः स्तोकमित्यस्यार्थेऽपिर्वर्त्तते इतिवृत्तिकृतोक्तं तथापि तद्द्योतकताभिप्रायमिति सूचयन् पदजन्यपदार्थोपस्थितिः शाब्दबोधे कारणमिति मतेनाह बिन्दुपदेति। प्राचांमतेनाहाध्येति। एतेनापिः बिंदुरूपपदार्थद्योतकः। स्यादिति तिङा कर्त्तृसामान्यबाचकेन विन्दुत्वेन तद्विशेष उच्यते इत्यपास्तं। लिङितिउपसंबादाशंकयोश्चेति सूत्र भाष्यपठितेनोपसंबादाशंकयोर्लिङित्यनेन। तच्च लोकसाधारणमित्यपि तत्रैव भाष्येस्पष्टं। तत्राशांकोत्प्रेक्षात्संभावनाप्युक्ताद्विकोटिका शङ्केवेतिभावः। नन्वेवंकर्मप्रवचनीयद्योत्यार्थे सर्पिषोऽन्वयेन तस्य कर्मप्रवचनीययुक्तत्वात् द्वितीया स्यादत आह बिन्दाविति द्योत्येत्यादिः। क्रियायां स्यात्पदवाच्यक्रियायां। कर्मप्रवचनीयत्वात्तद्योत्यसम्बन्धमाह स्वेति अपीत्यर्थः। बिन्दुदौर्लभ्यमितिषष्ठीतत्पुरुषः अपिर्विन्दुसमुच्चये। अत्र मानमाह शब्देति। तथा च तस्यां तस्य कर्त्तृतया तद्द्योत्योक्तसम्बन्धेन चान्वयस्तदाहैवंचेति तथाऽन्वये चेत्यर्थः। बिन्द्विति तदभिन्नैककर्तृकेत्यर्थः। तदिति सर्पिरवयवेत्यर्थः। सत्तेति पाठः विशिष्टसत्तायाः सम्भावनाविषयत्वबोधे दौर्लभ्यस्यापि सम्भावना विषयत्वमनुभवसिद्धं। (१)यायाः स्तुतः। तथाच प्रकृतेऽवाङ्मनसगोचरंविष्णुमपि स्तुयादिति शक्त्युत्कर्षाविष्करणमिति बोध्यं। एतेन शक्त्युत्कर्षेत्यस्यौचित्योत्कर्षादेरप्युपलक्षणत्वेन। इदं च

(१) अत्र किञ्चित्पाठः खण्डितः।

शक्तिहन्याभावात्। एवंच सर्पिरवयवबिन्दुकर्तृका त-द्दौर्लभ्यप्रयुक्तदौर्लभ्यवती संभावनाविषयः सत्तेति बोधः। अपि स्तुयाद्विष्णुम्। संभावने लिङ्। अपि-र्लिङर्थ संभावनायां क्रियागतशक्यत्वस्य विषय-तया द्योतकः विष्णुकर्मिकैतत्कर्तृका शक्यत्वे-न संभाव्यमाना स्तुतिरिति बोधः विष्णुविष-यायाः शक्यत्वसंभावने चान्याविषया निश्चयेन शक्ये-ति फलति। एतेनापिवेदान्तपारगमित्यादावपियोगे स्वार्थे न तात्पर्यमिति धर्मशास्त्रग्रन्था व्याख्याताः। ईदृशेषु संभावनाविषयतया क्रियागतमौचित्यं द्योत्यं संभावितौचित्यस्यानुष्ठानमयुक्तमिति स्वार्थे तात्पर्याभावः।

मासमधीते। अत्यन्तसंयोगे व्याप्तिरूपे द्वितीया। मासपदेनावयवानतिरेकेण त्रिंशद्दिनसमूह उच्यते। व्यापकत्वं द्वितीयार्थः। तत्त्वं च त्रिंशत्त्ववन्निष्ठप्रति-योगिव्यधिकरणात्यन्ताभावप्रतियोगितानवच्छेदका-वच्छिन्नत्वं। प्रतियोगिव्यधिकरणेत्युक्तोर्दिनावान्तर-दण्डाद्यावच्छ्यनाभावेऽपि न दोषः। एकदिनाध्ययने

---

अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः।

इतियाज्ञवल्क्यव्याख्यायां मिताक्षरायां स्पष्टं तदेवाहेदृशेष्विति। क्रियेति हननादिक्रियेत्यर्थः। औचित्यं तदुत्कर्षरूपं।

यत्तु कालादीनामकर्मकाक्रियायोगे कर्मप्रत्ययार्थौ विभाषा कर्मत्वमनुशासनादिति केचित्। अन्ये तु क्रियांतरांतर्भा-वेणोपपत्तौ नापूर्वमनुशासनमिति तन्मते मासमास्ते मासम-धीते इत्यादौ कालाध्वनोरिति द्वितीययान्यथा तत्र निर्वाहस्त-थापि गुणादियोगे तत्सिद्ध्यर्थं कालाध्वनोरित्यावश्यकमिति नैया-

च न तथा प्रयोगः । तद्घटकदिनपदेन चावयवानति-रेकेण सूर्योदयावधिसूर्योदयान्तरपर्यन्तक्षणसमूह उ-च्यते । एतेनैकैकक्षणव्यक्तेरपि मासत्वाधिकरणतया तत्र प्रतियोगिव्यधिकरणाध्ययनाभावसत्त्वेन बाध इत्यपास्तम् ।

दिनं स्वपितीत्यादौ दिनपदमवयवानतिरेकेण त्रिं-शद्दण्डकूटपरमतो नैकदण्डस्वप्ने तथा प्रयोगः । अवयवानतिरेकेण भानेऽपि एकवचनान्तत्वमेव शा-ब्दशक्तिस्वभावेन तत्त्वेऽपि अवयवगतसंख्यायाः समूहेऽनारोपात् त्रिंशत्त्वादिकं च तात्पर्यवशात्त-त्त्रिंशत्त्वादिकमेव भासते । एतेनैकमासव्यापका-

---

यिकस्तत्र तत्र तस्याः कारकविभक्तित्वमस्या उपपदविभक्तित्वमि-तिभेदात् तदनुशासनस्य विकल्पस्य च निर्मूलत्वाच्च तदेव तत् ध्वनयन्नाह मासमधीते इत्यादिरूपे अभिव्याप्तिरूपे प्रतिपाद्ये द्विती-या भवति सूत्रेणेतिशेषः । अभिव्याप्तिश्च यावदवयवसम्बन्धः यत्स-मुदायो मासादिपदार्थस्तएवावयवास्तदाह मासेति त्रिंशद्दिनसम्बन्ध-श्च दिनपर्याप्तत्रिंशत्वव्यापकत्वं तत्र त्रिंशत्वादेर्मासादिपदादेव ला-भाद्व्यापकतामात्रं द्वितीयार्थस्तदाह व्यापेति । अत्र त्रिंशत्सु दिनेषु किञ्चित्कालावच्छेदेनाध्ययनसम्बन्धेऽपि तत्प्रयोगोपपत्तिः । व्यापक-त्वं च व्याप्यविशेषाघटितमखण्डं दुर्वचमत आह तत्वं चेति । व्याप-कत्वं चेत्यर्थः । दिनावांतरेति त्रिंशद्दिनेष्वेवाध्ययनेनेत्यादिः । मास-पदं चत्रिंशद्दिनसमूहपरमित्युक्तं । ननु तावत्कालस्थाप्यखण्डवस्त्वं तत्परमिति तद्भावः । तत्फलमाह केति । अन्यथा तादृशाखण्ड-काले प्रतियोगिव्यधिकरणाध्ययनाभावाभावेन मासमधीत इति प्र-योगापत्तिः स्पष्टैव विशेषमुक्तोपपत्तय आह तदिति मासघट-केत्यर्थः ।

प्रागुक्तसिद्धांतेनाह क्षणेति । ननु तद्व्यक्तिरूपस्तत्समूह इत्यर्थः ।

ध्ययनस्थलेऽपि मासान्तरेऽध्ययनाभावसत्त्वेन मास-
व्यापकताया अध्ययने बाध इत्यपास्तम् ।

एवं क्रोशं कुटिला नदीत्यादौ यत्किंचित्क्रोशत्व-
वन्निष्ठप्रतियोगिकव्यधिकरणात्यन्ताभावप्रतियोगितान-
वच्छेदकावच्छिन्नत्वं कुटिलादौ भासते क्रोशत्वा-
दिकं तत्तत्संख्याकदण्डादि परिच्छिन्नदेशत्वमेवेत्य-
न्यत्र विस्तरः ।

इति द्वितीया ।

---

एतेन तत्र तथा विवक्षणेन। अपिना समूहः। तत्र क्षणव्यक्तौ। बाध इति व्यापकत्वरूपद्वितीयार्थस्य बाध इत्यर्थः। तथा समूहतदवयवैर्भेदाभेदसत्वेन तिरोहितावयवभेदस्यैव समूहस्य दिनपदेन तत्र ग्रहणं मासपदेनातिरोहितावयवभेदस्य समूहस्येति नदोष इति तात्पर्यं। तद्घटकेत्युक्तेः फलमाह दिनमिति प्राग्वद्ग्राहावयवेति। नन्वेवमुभयत्रापि बहुवचनापत्तिरत आहावयवेति समूहस्येतिशेषः। वीर्जातरावादाह शब्देति। तत्वेऽपि अवयवानतिरिक्तत्वेऽपि। आरोपे सतीति न्यायात्। एतेन विशेषभानेन। बाध इति। तथाच मासमधीत इत्याद्यनुपपत्तिरेवेतिभावः। उक्तमर्थं देशेऽतिदिशति एवमिति। सामान्यत आह क्रोशत्वादिकमिति सच सम्बन्धो गुणक्रियाद्रव्यैस्तद्भावेन च तेन मासं भोजनाभाव इत्यादेः संग्रहः। एकादश्यां रात्रौ जागृयादित्यादावधिकरणत्व विवक्षणान्न द्वितीया। एतेन मासत्वादेर्मासादिभेदेन नानात्वेन मासमधीते चैत्र इत्यादावधिकरणतैव द्वितीयार्थः मासादिपदार्थतावच्छेदकदिनपर्याप्तत्रिंशत्वादेर्धर्मिविशेषणतापन्नस्य द्वितीयार्थाधिकरणतायां चैत्रकर्तृकाध्ययनाधारत्वव्याप्यधर्मावच्छिन्नत्वरूपसंबंधरूपमवच्छेदकत्वसंबंधतया भासत इत्यभ्युपगमेन सामंजस्यात्। मासादिपदप्रवृत्तिनिमित्तभूतानुगतधर्मे शक्त्यानंत्यप्रसंगभिया स्वीक्रियमाणे चैत्राध्ययनाधारताया व्याप्यत्वस्य शब्दादलाभेऽप्यर्थतस्तल्लाभात्द्वितीयाया अत्यन्तसंयोगार्थत्वमिति नानुशासनविरोध इति नैयायिकोक्तमपास्तं तदाहेत्यन्यत्रेति उद्योतादाविस्यर्थः।

इति द्वितीया।

तृतीयायाः कर्तृकरणे अर्थः। कर्तृकरणयोस्तृतीयेति सूत्रात्। कर्तृत्वं च कर्तृसंज्ञाबोधितकर्तृत्वशक्तिमत्त्वम्। सा शक्तिश्च कर्तृप्रत्ययसमभिव्याहारे व्यापारतावच्छेदकसंबन्धेन तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयतद्धात्वर्थाश्रये वर्तते। स्वतन्त्रः कर्तेति सूत्रस्वरसात्। उक्तधात्वर्थाश्रयत्वमेव स्वातन्त्र्यम्। स्थालीस्थे यत्ने पचिना कथ्यमाने स्थाली स्वतन्त्रेति कारक इति सूत्रे भाष्योक्तेः।

कालिकादिसम्बन्धेन व्यापाराश्रयेऽतिप्रसङ्गवारणाय सम्बन्धविशेषनिवेशः। एतेन सामग्रीसाध्यायां क्रियायां सर्वेषां स्वस्वव्यापारे स्वातन्त्र्यात्। सूत्रे स्वतन्त्र इत्यव्यावर्तकमित्यपास्तम्। प्रागुक्तस्वातन्त्र्यस्य युगपत्सर्वेष्वभावात्। रूपवन्तं गच्छति इत्यादौ उत्तरदेशसंयोगरूपे फले रूपादौ च न तादृशधात्वर्थत्वमिति तदाश्रये रूपवति नातिव्याप्तिः। कर्तृप्रत्ययसमभिव्याहारे इत्यनेन पक्वस्तण्डुलो देवद-

---

प्रागुक्तसिद्धांतेनाह कर्तृकरणे इति प्राग्वदाह कर्तृत्वं चेति सूत्रे इति भावः। ननु सूत्रे स्वतंत्र इत्युक्तेःकथं तल्लाभोऽत आहोक्तेति। कर्त्रित्यादिनाश्रयेत्यंतेत्यर्थः। यत्ने व्यापारतेत्यस्य फलमाह कालिकादीति एतेन तस्य तद्धात्वर्थाश्रये इत्यत्रान्वयः सूचितः। एतेनेत्यस्यार्थमाह प्रागुक्तेति तद्धात्वर्थेति घटितेत्यर्थः। अतएवाह युगपदिति विशेष्यदले दलद्वयनिवेशस्य क्रमेण फलं आह रूपेति। तादृशधात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयधात्वर्थत्वमित्यर्थः। तत्राद्ये विशेषणाभावप्रयुक्तविशिष्टाभावो द्वितीये विशेष्याभावप्रयुक्त इति भावः। तदाश्रये। संयोगरूपफलाश्रये विशेषमाह तत्रेति कर्तृप्रत्ययसमभिव्याहार इत्यर्थः। तद्धात्वर्थत्वमुभयविशेषणं

त्तेनेत्यादौ फलस्य विशेष्यत्वेऽपि देवदत्तस्य कर्तृत्वसिद्धिः। तत्र सति संभवे तद्धात्वर्थकृतिव्यापाराश्रयत्वसमानाधिकरणैव कर्तृताशक्तिरतो गुरुतरभारोत्तोलनादिविषयकयत्नसत्त्वेऽपि तत्क्रियाया अनिष्पत्तौ न तत्र कर्तृत्वव्यवहारः। तत्र यत्नसत्त्वे न मानमित्यन्ये।

धात्वर्थकृतिश्च साध्यत्वाख्यविषयतया कृतिविषयैव ग्राह्या. अतो मत्तो भुक्तन्नतु मया कृत मिति व्यवहारस्य नानुपपत्तिः नान्तरीयकृतिसाध्यपिष्टकमध्यस्थशर्कराभोक्तरि च न तत्कर्तृत्वव्यवहारः। एतेन कृतिर्नाम न काचिद्व्यापारातिरिक्तेत्यपास्तम्। आन्तरचेष्टाविशेष एव वा कृति रिति दिक्। तत्र व्यापारस्य धातुत एव लाभात्। कर्तृशक्तिमत्त्वेन कर्ता तृतीयार्थः। तत्र प्रकृत्यर्थस्याभेदान्वयः। सच धात्वर्थे आधेयतया अन्वेति तेन चैत्रेण सुप्यते इत्यत्र चैत्राभिन्नकर्तृवृत्तिः स्वापः इति बोधः इति प्राञ्चः। द्वितीयप्रकरणोक्तदिशा कर्तृचैत्रीयः स्वापः इति चैत्रकर्तृकः स्वाप इति वा बोध इत्युचितम्।

---

यत्नस्यातींद्रियत्वेन कार्यानुमेयत्वेन।

उक्तविवक्षाया अनुपयोगं सूचयन् सिद्धांतमाह तत्रेति। ननु मत्तो भूतं नतु मया कृत मिति व्यपदेशान्नांतरीयककृतिसाध्यपिष्टकमध्यसशर्कराभोक्तरि तत्कर्तृत्वव्यवहाराभावाच्च तत्रातिव्याप्तिः। कृतौ क्रियाविषयत्वस्यापि निवेशे तु यागादिकृतेरुद्देश्यतया स्वर्गादिकर्तृत्वापत्ति रतआह धात्वर्थेति। तत्वेन विवक्षितकृतिरित्यर्थः। चस्त्वर्थे। अग्रिमचो वाक्यालंकारे। इदं यत्त्वित्यग्रिममतेऽपि बोध्यं। एतेन उक्तविवक्षाया भेदघटिताया आवश्यकत्वेन तन्मतेऽप्युपपत्ति-

यस्तु तत्तत्क्रियानुकूलकृत्याश्रयः कर्ता कञः कृ-त्यर्थकत्वेन कृमकृतिकतृचा तथैव लाभात् तत्राश्र-यस्य प्रकृत्या लाभात् कृतिस्तृतीयार्थ इति तन्न। कृतेरपि धातुलभ्यतायः उक्तत्वात्। रथेन गम्यते इ-त्यादावचेतनेऽसंभवाच्च। विभक्तौ लक्षणानौचित्य-स्य प्राङ् निवेदितत्वात्। तत्राश्रये लक्षणेत्ययुक्तम्। कृञः कृतिमात्रवाचकत्वाभावाच्चेति दिक्।

यस्तु धात्वर्थश्चेतनमात्रवत्र्येव। तत्राचेतनस्य क-र्तृत्वं चेतनत्वारोपेण तन्निष्ठक्रियारोपेण वेति दासहा-यनान्ताच्चेति सूत्रे भाष्ये स्पष्टम्।

परे तु तद्धात्वर्थीयकारकचक्रप्रयोक्तृत्वं सूत्रे स्वा

---

माहांतरेति। दिगर्थस्तु कृतौक्रियेत्यादिनोक्त एव। तत्र तयोर्मध्ये। तत्र कर्त्तरि अभेदेति। अभेदेऽपि विशेषणविशेष्यभाव इत्यर्थः। तत्र तृतीया-र्थः कर्त्ता। चैत्रेण सुप्यत इति पाठः। प्राचां मतमाह तेनेति। प्राञ्चः दीक्षितभूषणकृदादयः सिद्धान्तेऽत्रारुचिं सूचयायाह द्वितीयेति।

दिशा रीत्या। नैयायिकमतं खंडयति यस्त्विति। कर्त्तैत्यत्र कृधा-तोः कृतिवाचकत्वेन तृचश्चाश्रयवाचित्वेन योगार्थबलात्तथैव लाभ इत्याह कञ इति। गुरुतरभारोत्तोलनादिविषयक यत्नसत्त्वेऽपि त क्रियाया अनिष्पत्तौ तत्कर्तृत्वाव्यवहारात्तद्विषयत्वमपहायानुकूलत्व-मुपात्तं साध्यत्वविषयतया क्रियाविषयैवकृतिर्ग्राह्येत्यप्यत्र प्रागुक्तं बोध्यं। तत्र तयोर्मध्ये उक्तेति आख्यातवादे। ननु तत्र लक्षणाऽस्त आह विभक्ताविति। तत्र दोषांतरमाहकृञ इति। निरूपितमि दमाख्यातवादे। एतेन तत्र गौणं कर्तृत्वमित्यपास्तं तदाह दिगिति।

तदेव ध्वनयन्नन्यत्र तथा आह यस्त्विति। ततो लाघवादाह त-न्निष्ठेति। दानेति तत्रहि उद्देश्याभावः। वेत्यत्रानतिप्रसंगाय संख्यादेरि-त्यावश्यकं। चङ्क्रमणादेश्चेतने प्रसिद्धत्वेऽप्यचेतनेऽपि चेतनवदुपचा-रान्न दोषः। (इतस्तान्यस्यावनानीतित्युक्तं) स्वातन्त्र्यांशो सिद्धान्त-माहपरेत्वित्यादिनाङ्कुरित्यन्तेन। अस्यप्यतप्रयोज्येऽसंभवान्नहेतुत्रि-

तन्त्र्यम् । तदुक्तं कारक इति सूत्रे भाष्ये प्रधानेन समवाये स्थाली परतन्त्रा, व्यवाये स्वतन्त्रा, किं पुनः प्रधानं, कर्ता, कथं ज्ञायते कर्ता प्रधानमिति, यत्सर्वेषु कारकेषु संनिहितेषु कर्ता प्रवर्तयिता भवतीति । एवं स्वेच्छाधीनप्रवृत्तिनिवृत्तिकत्वमपि स्वातन्त्र्यं, तच्च प्रयोजकसंनिधानेऽपि प्रयोज्यस्य, तत्संनिधानेऽपि स्वार्थसत्त्वे प्रवृत्तेस्तदभावेऽप्रवृत्तेश्च । एतच्च स्वतन्त्रः कर्तेति सूत्रे भाष्ये ।

तच्चारोपितमनारोपितं च संज्ञानिमित्तम् । आद्यं स्थाल्यादौ अन्त्यं पुरुषे । यस्य च स्वातन्त्र्यविवक्षा तद्व्यापार एव च धातुना प्राधान्येनोच्यते । शब्दशक्तिस्वभावात् । स्थाली स्वतन्त्रेति भाष्ये आरोपितस्वातन्त्र्यवतीत्यर्थः । तत्त्वं विना तद्व्यापारे धातोः प्राधान्येन वृत्त्यसम्भवात् । प्राधानधात्वर्थव्या-

---

ति तद्वदित्यर्थः । अपिना तस्यैव समुच्चयः । तच्च द्वितीयं च । अपिनाऽसंनिधानं अतएव पूर्वस्मैलक्षण्यं । तत्रैवान्वयव्यतिरेकावाह तत्संनीति । भाष्य इति तत्रहि कुर्वन्स्वतंत्रोऽकुर्वन्नेति साधीयो ज्ञापकं प्रेषिते च किलायं क्रियां चाक्रियां चष्टाऽध्यवस्यति कुर्वन्स्वतंत्रः अकुर्वन्नेति यदि च प्रेषितोऽसौ न करोति स्वतंत्रोऽसौ भवतीतीत्युक्तं सूत्रे तंत्रणोभयोरपि ग्रहणमितिभावः ।

अचेतने कथं कर्तृत्वं लक्षणातु नेतिचिंत्यमिदमिति भूषणायुक्तिखंडनायाह तच्चेति आद्यमित्यर्थः । यथासंभवमितिभावः । तदुपपादयति यस्यचेति । नन्वेवमुक्तभाष्यविरोधस्तत आरोपालाभाच्चत आह स्थालीति । तत्त्वं मारोपितस्वातंत्र्यं । ततस्थालीरूपं । दीक्षित भूषणायुक्तिखंडयति प्रधानेति । तत्त्वं स्वातंत्र्यं । अपरीति कोशव्याकरणयोरतएव दोषांतरमाहलोके इति तादृशकारकत्वप्रयोकारि स्वे-

पाराश्रयत्वमेव न तत्वं स्वतन्त्रपदस्य तत्रापरिभा- षणात्। लोके उक्तार्थयोरेव तत्प्रवृत्तेरिति। अत एव प्रयोज्यस्यास्वतन्त्रत्वात्कर्तृसंज्ञा न प्राप्नोतीति पूर्वपक्षे तस्यापि स्वेच्छाधीनप्रवृत्तिकत्वरूपस्वातन्त्र्यं साधितं कर्तृसंज्ञासूत्रे भाष्ये इति दिक्।

हरिरप्याह।

प्रागन्यतः शक्तिलाभान्न्यग्भावापादनादपि।
तदधीनप्रवृत्तित्वात्प्रवृत्तानां निवर्तनात्॥
अदृष्टत्वात्प्रतिनिधेः अविवेके च दर्शनात्।
आरादप्युपकारित्वे स्वातन्त्र्यं कर्तुरुच्यते॥

इति। करणादिव्यापारात्पूर्वमेव करणादिसंपादकतया शक्तिमत्त्वेन करणादीनामात्माधीनत्वसंपादनेन च तेषां तदायत्तव्यापारवत्त्वेनातिप्रवृत्तानां तेषां निवर्तनेन च कर्तुः फलप्राप्तौ स्वत एव निवृत्त्या कर्तुः प्रतिनिध्यभावेन च कारकान्तराभावेऽपि अ-

---

च्छाधीनप्रवृत्तिनिवृत्तिकेच स्वतंत्रपदप्रवृत्तेरित्यर्थः। इतिस्तत्खडन- ग्रंथसमाप्तौ। अतएव तत्र तस्याप्रवृत्तिरेव पूर्वेति। 'स्वतंत्रस्य कर्तृसं- ज्ञायां हेतुमत्युपसंख्यानमस्वतंत्रत्वा'दित्यनेन भाष्ये इति तच्चोक्त- मनुपपन्नमेव।

एतेन नाद्यं तत्वं अचेतनेऽव्याप्तेः। किञ्च तत्वं कारकांतरज- न्यन्यापारजनकत्वं एवञ्च कर्मजन्यफलजनके करणे कुठारादावति- व्याप्तिः। नच कारकांतराप्रयोज्यत्वे सतीति विशेषणान्नदोषः। ई- श्वरप्रयोज्यानां जीवानां कर्तृत्वानापत्तेः। अन्तर्भावितण्यर्थयोगे प्रयो- ज्यकर्त्तुः कर्तृत्वानापत्तेश्चेति परास्तं। माधवसम्मतमपीदन्तदाहे- ति दिगिति।

क्रमेण हेतूनामर्थानाह करणादीत्यादि। तेषामिति करणादीनां कर्त्रधीनेत्यर्थः। प्रवृत्तपदमतिशयितपरमन्यथा क्रियाविराम एव न-

इत्यादौ कर्तुर्दर्शनेन च दूराद्दुपकारित्वेऽपि कर्तुः स्वातन्त्र्यमिति तदर्थः। वस्तुस्थित्या एषां धर्माणां भावेऽपि शब्देन यस्यैते प्रत्याय्यन्ते स कर्ता। घटो भवतीत्यादौ बौद्धघटस्य कर्तृत्वम्।

यद्वा घटपटेनोपादानकारणं मृदेव कार्यात्मना भवतीत्यर्थः। कार्यकारणयोरभेदस्य स्वीकारात्।

यद्वा ब्रह्मणा एवाविद्यावशादुपचारितनानात्वभावाभावरूपत्वगत्तद्रूप(१)जन्मनाशव्यवहारोऽप्यविचारितरमणीयः सिद्ध इति बोध्यम्। पाचयति चैत्रेण मैत्र इत्यादौ प्रयोज्यस्य प्रयोजकव्यापाराधीनत्वेऽपि साधनान्तरविषये उक्तस्वातन्त्र्यस्यैव विवक्षणात् (कर्तृपरतन्त्रकरणात्) कर्तृत्वमव्याहतम्। प्रेरणापारतन्त्र्य उक्तस्वातन्त्र्यस्योपायत्वात् धातुवाच्यस्य क्रियाकृतस्वातन्त्र्यस्यैव विवक्षणात्। कर्तृपरतन्त्रकरणा-

---

स्यात्तदाहातीति। तेषां करणादीनां। व्रीह्यभावे निवारसत्त्वेपि अत्र तथा नेत्याह कर्तुरिति तद्भेदे क्रियान्तरमेवेतिभावः। आरात्पदार्थमाह दूरादिति। अपिर्व्युत्क्रमे इत्याह त्वेऽपीति। तत्तात्पर्यमुक्तमेवाह वस्त्विति। नन्वेवं घटो भवतीत्यादौ घटादेः कर्तृत्वानापत्तिः उत्पत्तेः पूर्वं तेषामभावेन धात्वर्थव्यापारानाश्रयत्वादत आह घट इति तदनङ्गीकारे आह यद्वेति। तदेवाह मृदेवेति। ननु तयोर्भेदात्कथमिदमत आह कार्येति।

परमसिद्धान्तमाह यद्वेति। तस्यैव तद्वशादुपचरितनानात्वकाले भावा अभावाश्च तद्रूपत्ववत् भावाभावरूपगतेत्याद्यर्थः। यद्यपि ण्यतस्थले प्रयोज्ये स्वातन्त्र्यं द्वितीयमुक्तमिति न दोषस्तथापि विशेषं वक्तुं आद्यमप्यस्तीत्याह पाचयतीति। तस्य तद्व्यापारस्य। उक्तेति

---

(१) तद्रूपव्येजन्मेतिपाठान्तरम्

देर्नैस्वव्यापारमादाय कर्तृत्वम् । किंच करणादीनां कर्त्रधीनत्ववन्न प्रयोज्यस्य प्रयोजकाधीनत्वम् । प्रयोज्यस्य स्वार्थसिद्ध्यर्थं प्रवृत्तेः । नहि करणादीनां तादृशी प्रवृत्तिः । तदुक्तम् ।

निमित्तेभ्यः प्रवर्तन्ते सर्वे एव स्वभूतये ।
अभिप्रायानुरोधोऽपि स्वार्थस्यैव प्रसिद्धये इति ॥

निमित्तं भृत्यादि तन्निमित्तापि स्वार्थसाधनफलिकैव सेति स्वाम्याशयानुवर्तनमात्रेण तु प्रयोज्यत्वमिति दिक् इत्याहुः ।

केचित्तु धात्वर्थव्यापाराश्रयत्वं साक्षात्परम्परया वा तत्राद्यमसिद्धम् । द्वितीयं पञ्चभिर्हलैः कर्षतीति । तत्र

---

तादृशकारकचक्रप्रयोक्तृत्वरूपेत्यर्थः । ननु स्वातन्त्र्यपारतन्त्र्यविरोधात्कथमिदमत आह प्रेरणेति तत्कृतपारतन्त्र्ये इत्यर्थः । अन्यथा प्रेरणा निष्फलैव स्यादत एव तदसमर्थं प्रति न सेतिभावः । नन्वेवं करणादावतिप्रसङ्गोऽतआह धातुवाच्येति ।

अत्र तत्वं अभ्युपेत्येदं । वस्तुतस्तयो वैषम्यमेव प्रागुक्तरीत्येत्याह किंश्चेति । तादृशी स्वार्थसिद्ध्यर्था । तदुक्तं हरिणा । भृतिर्वेतनं । आदिना दक्षिणादि । तेभ्यो ये प्रवर्त्तते सर्वे स्वभूतये एवेति पूर्वार्धेशाद्बोऽर्थः । तत्फलितमाह तादित्यादीति त्यन्तेन बहुव्रीहिः । प्रयोजकाशयानुसरणमपि न प्रवर्त्तकं । किन्तु स्वार्थसिद्ध्यर्थ मेवेत्युत्तरार्धशाब्दार्थः । तत्फलितमाह स्वाम्याशयेति । प्रतिपादितमिद 'मात्मनस्तुकामाय सर्वं' मित्यादिश्रुतिमूलकतया भाष्ये इति प्राक् स्पष्टीकृतं मूले एव तदाहेति दिगिति ।

प्राचां मतं खण्डयति केचित्त्वित्यादि । परम्परासम्बन्धमाह स्वाश्रयेति । स्वं कर्षकनिष्ठविलेखनम् । अन्यथा द्वितीयसम्बन्धानिवेशे । अतएवाह प्रयोज्येति । हलानां बहुत्वेनैककर्तृकत्वासम्भवादाह दाश्रयेति । तन्वन्तर्भावितपर्यवसितं निर्वाहोऽन्त आहान्तरिति । इष्टापत्तावाहेष्यन्ते चेति । अपिना सकर्मकाणां समुच्चयः । नन्वेवं त·

हि स्वाश्रयप्रयोजकत्वसम्बन्धेन कर्तुर्धात्वर्थव्यापाराश्रयत्वम्, अन्यथा प्रयोज्यव्यापारस्य धात्वर्थत्वे तदाश्रयाणां बहुत्वाद् बहुवचनापत्तिः। प्रयोजकव्यापारस्यापि धातुवाच्यत्वे तु णिजापत्तिः। अन्तर्भावितण्यर्थाः इति प्रवादस्याप्ययमेवार्थः इत्याहुः।

तन्न। अन्तर्भावितण्यर्थत्वेन सकर्मकत्वोच्छेदापत्तेः। इष्यते चान्तर्भावितण्यर्थत्वेन सकर्मकाणामपि द्विकर्मकता। तस्माद्धातूनामनेकार्थत्वात् ण्यर्थान्तर्भावेणापि धातोर्वृत्तिः। परन्तु यत्र णिचोऽभावेऽपि तदर्थद्योतकमस्ति तत्रैव, यथा प्रकृते पञ्चभिर्हलैरिति। क्वचित्तु एकान्ते तूष्णीमासीनत्वादिकं तद्द्योतकम्।

यदि तु द्वितीयकर्मरहितोऽपि तत्र प्रयोग इष्टस्त-

---

स्या उक्तप्रयोगसाधनस्य किं तात्पर्यमत आह तस्मादिति। अपिना तद्ग्राहित्यं। एवं सत्यनति प्रसङ्गायाह परन्त्विति। गमकान्तरमाह क्वचिदिति। द्वितीयेति भूमिमितीत्यर्थः। एतदेवाभिप्रेत्य चारेणाहं परसैन्यमनुप्रविश्य सङ्कुलपानीत्यादौ प्रयोज्यकर्तुश्चारादेः करणत्वमुक्तं भामत्यां मिश्रैर्द्वितीयाध्यायोपान्त्याधिकरणे। यदापि चारेणेत्यस्यानुप्रवेशनक्रियायामन्वयस्तदापि करणे एव तृतीया।

यत्तु क्त्वाप्रत्ययेन कर्तुरभिधानात्तत्र कर्तरि सा दुर्लभेति परिमले उक्तं, तन्न तस्य भावमात्रार्थकत्वस्य प्राङ्निरूपितत्वादिति दिक्। प्रागुक्तमपि विशेषं वक्तुं दार्ढ्यायाह कर्तृत्वं चेति। अचेतनत्वेन तदसम्भवादाह यत्न इति। अतएव

धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते॥

इति हरिः। तमेवाहैवमिति एकस्येति

धर्मैरभ्युद्यतैः शब्दे नियमो नतु वस्तुनि

कर्तृधर्मविवक्षायां शब्दात्कर्ता प्रतीयते

दा प्रयोजकव्यापारस्यैव धात्वर्थत्वमाश्रित्य समाधेयः। कर्तृत्वं च विवक्षानिबन्धनं तेन स्थाल्यादिव्यापारस्य धात्वर्थत्वे स्थाली पचतीत्याद्यपि। तदुक्तं कारके इति सूत्रे भाष्ये स्थालीस्थे यत्ने पचिना कथ्यमाने स्थाली स्वतन्त्रेति। यत्नो व्यापारः एवमेकस्यैवोपाधि भेदेन कर्तृत्वकरणत्वकर्मत्वानि भवन्ति। यथा त्मानमात्मना सृजतीति। तदुक्तं हरिणा।

एकस्य बुध्यवस्थाभिर्भेदेन परिकल्पने।
कर्मत्वं करणत्वंच कर्तृत्वं चोपजायते॥ इति।

योऽपि णेरणौ इत्यादौ भाष्ये शरीरात्मान्तरात्मेत्यादि भेद उक्तः सोऽपि व्यावहारिको बौद्ध एवेति बुध्यवस्थाभिरित्युक्तम्। बुद्धिकल्पितावस्था-

---

इत्यादिः। भाष्याविरोधमाह योऽपीति। इति त्याशयेन। सम्प्रदानापादानयोस्तु न कर्तृत्वविवक्षा शब्दशक्तिस्वाभाव्येन तद्व्यापारे धातोरवृत्तेरिति प्रागुक्तमेव।

एतेन ज्ञानस्वरूपस्यात्मनः स्वरूपज्ञानविषयत्वरूपस्वप्रकाशत्वे कर्तृकर्माविरोधः अभेदे आधाराधेयभावस्य विषयविषयिभावस्य वाभावादिति वाचस्पत्युक्तिः परास्ता शब्दविशेषोपाधिकस्य कर्तृत्वादेः प्रत्याक्षादावुक्तिसम्भवाभावात्। यदि तु कर्तृकर्मशब्दयोराश्रयविषयलक्षकत्वं यदि वा स्वप्रकाशत्वे इत्यस्य स्वप्रकाशपदव्यवहार्यत्वे इत्यर्थः। स्वं प्रकाशयतीति हि स्वप्रकाशपदव्युत्पत्तिस्तदा सम्यगेव। अधिकं भावप्रकाशतो ज्ञेयंतमेवार्थप्रकर्षमाह यद्व्यापारेति क्रियाफलं वास्तवत्वस्याभावादाह विवक्ष्यत इति।

एतेन सकृदनेकेषां तदभावेन द्वितीयादेरयकाशत्वेन सर्वेषां कारकाणां करणत्वे सर्वत्र तृतीया स्यादित्युक्तिः परास्ता। अतिप्रसङ्गमेवं सतीष्टापत्त्या परिहरति अभीति। यद्व्यापारादिति अनन्तरशब्दयोगे दूरान्तिकार्थैरिति सूत्रेण पञ्चमी। यत्र येषां कारणानां मध्ये। अत्रैव

भिरित्यर्थकम्। करणत्वं च करणताशक्तिमत्त्वं सा च शक्तिः यद्व्यापाराव्यवधानेन क्रियानिष्पत्तिर्विवक्ष्यते तन्निष्ठा। अधिकरणादिव्यापाराव्यवधानेनापि यदा क्रियानिष्पत्तिर्विवक्ष्यते तदा तेषामपि करणत्वमिष्टमेव। तदाह हरिः।

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्॥
वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः। इति॥

विवक्ष्यत इत्यनेन विवक्षैव व्याकरणेऽङ्गं न बाह्यवस्तु सत्तेत्युक्तम्। अतएव दात्राद्यनादरेण बलस्य तत्त्वविवक्षायां बलेन लुनातीत्यादि भवति तदाह वस्तुत इति। इदमेव वस्तु करणमिति न नियमः। निश्चिताधिकरणत्वापि स्थाली तनुतरकपालत्वात् शीघ्रतरपाकसाधनत्वेनानुभवति वैवक्षिकं करणत्वमित्यर्थः। प्रकर्षश्च कर्तृपराधीनस्यापि न करणान्तरा-

---

तथेऽति भ्रमवारणायाह व्याकेति। अङ्गं कार्योत्पत्तौ। त्वेति करणत्वेत्यर्थः वस्तुत इतीति वस्तुनेत्यर्थः। सार्वविभक्तिकस्तसिः। तत् कर्तृत्वादिकमनिर्देश्यमिदं वस्तु कर्त्रैवेत्यादिक्रमेण न निर्देश्यं हि यतो वस्तु न तत्तद्रूपेण व्यवस्थितमिति शब्दार्थस्तत्फलितमाहेदमेवेति। तामेवाव्यवस्थां दर्शितवान् स्थाल्येति। विशेषमाह प्रकर्षश्चेति प्रागुक्तरूप इत्यर्थः। अयमेवाक्षरार्थ इत्याह कारकेति एतत्फलमाहात एवेति।

यत्तु भूषणकृत् करणतृतीयाया आश्रयव्यापारौ वाच्यौ मूलमुपलक्षणं। तत्र व्यापारे प्रकृत्यर्थस्याधेयतयाऽन्वयः व्यापारस्य च स्वनिष्ठजनकतानिरूपिताव्यवहितोत्तरोत्पत्तिकत्वसम्बन्धेन धात्व-

पेक्षः किन्तु कारकान्तरापेक्ष एव । कारकसामान्य-वाचिनः साधकशब्दादुत्पद्यमानेन तमपा तत एव प्रकर्षबोधनात् । अत एवाश्वेन पथा दीपिकया व्रजतीति भवति ।

करणं तृतीयार्थः प्रकृत्यर्थस्य तत्राभेदेनान्वयस्तस्य च स्वनिष्ठव्यापाराव्यवहितोत्तरोत्पत्तिकत्वसम्बन्धेन धात्वर्थेऽन्वय इत्येके । करणबाणीयो वध इति बाणकरणक इति वार्थ इति तत्त्वम् ।

अत्र बहवः । करणस्य व्यापारे एवान्वयो न फलांशे । शब्दशक्तिस्वभावात् । अतएवोद्भिदा यजेतेत्यादौ मत्वर्थलक्षणाभिया नामधेयत्वं सिद्धान्तितम् । अन्यथा व्यापारं प्रति करणत्वेनान्विते धात्वर्थफलांशे करणत्वेनान्वयोपपत्तौ लक्षणाया अप्रसङ्ग एव । अतएव सोमेन यजतेत्यादौ छान्दसी मत्वर्थलक्षणेति मीमांसकाः । व्यापारे तदन्वये तु फलस्य कर-

---

र्थेऽन्वय इति तन्नेति ध्वनयन्नाह करणमिति । तत्र तृतीयार्थे । एवमग्रेपि परमतेनाहाभेदेनेति । अतएवाश्वयोऽवधिरिति मूलं सङ्गच्छते ।

एके इति सूचितारुचिं प्रकटयन् प्रागुक्तरीत्या सिद्धान्तमाह करणेति । तथाच कर्तृत्वशक्तिमान् कर्तृक्रियाभावः सम्बन्धश्च यथा कर्तृतृतीयाया अर्थस्तथाकरणतृतीयाया अपि करणत्वशक्तिमान् क्रियाकरणभावःसम्बन्धश्चार्थ इति बोध्यं । व्यापारे एवेति धात्वर्थव्यापारे एवेत्यर्थः । क्रियाकरणभावेनेति भावः । अतएव तत्रैवान्वयादेव । एवमग्रेऽपि अन्यथा फलेप्यन्वयसत्वे । व्यापारं प्रति भावनां प्रति । पत्तौ उपपदार्थस्य । लक्षणयाप्यसाधुत्वस्योक्तत्वादाह छान्दसीति । तदाशयमाह व्यापारे इति । तुरेवार्थे व्युक्रमे व्यापारे एव तदन्वये इत्यर्थः । ननु समानपदोपात्तःवस्य तत्र सत्वेऽनुपपत्तिशिष्टत्वमाविशिष्टमि

णत्वेनान्वयात् उत्पत्तिशिष्टकरणावरुद्धे करणान्तरस्यान्वयायोग्यतया सावश्यकीति वदन्ति ।

फलेऽप्यन्वये युगपत्फलांशस्य भावनानिरूपितं करणत्वं स्वकरणनिरूपितं साध्यत्वं चेति वैरूप्यं स्यादिति सावश्यकीत्यन्ये ।

प्रकृत्या चारुरित्यादौ प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया साच सर्वविभक्त्यपवाद इति भाष्ये स्पष्टम् । प्रकृतिर्यावदाश्रयवर्ती (१)धर्मविशेषस्तेन तत्सम्बन्धीचारुत्ववानिति बोधः । प्रायेण याज्ञिक इत्यत्र प्रायशब्दो बह्वर्थः बह्वाचारादि(२) । बह्वाचारज्ञाप्यया-

---

ति नैषा युक्तिस्तदावश्यकत्वसाधिका तस्मात्तस्यैव तत्र तेनान्वयेऽस्य फले तेनान्वयो वाच्यः सचान्यदोषेणायुक्त इति ।

सिद्धान्तमाह फलेऽप्येति । एवंच तत्रापि प्रसङ्ग एवेति तत्सिद्धांतितमत्रापि युक्तमेवेति तन्मतं युक्तमेवेति भावः । अथो पपदविभक्तिभूततृतीयासु बोधान्प्रदर्शयाञ्चादौ वार्तिकविषयमाह प्रायेणेत्यादि । योग्यताया आह बहुश्चेति । ज्ञाप्यज्ञापकभावसम्बन्धस्तृतीयार्थ इत्याह ज्ञाप्येति । एवं सति इत्थंभूतेत्येवसिद्धेराह यद्वेति । दृश्यते च तस्यां सः । प्रायेण निष्क्रामति च क्रयाणामिति । विषयविषयिभावसम्बन्धस्तृतीयार्थ इत्याह । विषयेति वंशादौ तत्र तु क्वचित्तथा पाठ एव प्रथमापवादोऽत्र तृतीया आद्यपक्षादरोऽत्र । गोत्रेण गार्ग्य इत्यत्र गोत्रसम्बन्धिगार्ग्यत्ववानित्यर्थः । सामान्यविशेषभावसम्बन्धस्तदर्थः

समेनैतीत्यादौ समदेशाद्यधिकरणकं यानमिति बोधः । आधाराधेयभावसंबन्धस्तदर्थः । अत्र सप्तम्यपवाद इयं समशब्दस्य मार्गार्थकत्वे द्वितीयापवादतात्र बोध्या । द्विद्रोणेन धान्यं क्रीणातीत्यत्र द्रोणद्वयपरिच्छिन्नधान्यकर्मकः क्रय इति बोधः । परिच्छेद्यपरिच्छेदक-

---

(१) आश्रयभावीति पाठान्तरम् ।

(२) बहुश्चाचारादिः इति पाठः ।

ज्ञिकत्ववानिति बोधः।

यद्वा प्रायशब्दः संभावनार्थः सम्भावनाविषय-याज्ञिकत्ववानिति बोधः। प्रायेणात्र याज्ञिका इत्यादौ बहुधो याज्ञिका इति बोधः। नाम्ना सुतीक्ष्ण इत्यत्र नामज्ञाप्यसुतीक्ष्णत्ववानिति बोधः। एवं चरितेन दान्त इत्यादौ। सुरथो नामराजेत्यादौ नामेति प्रसिद्धौ सुरथ इति प्रसिद्धो राजेत्यर्थः।

यद्वा नामभूतसुरथशब्दाभिन्नो राजेति बोधः। नाम्ना चन्द्रकलेत्यादौ नामभूतचन्द्रकलाशब्दाभिन्नेत्यर्थः। एवमवच्छेद्यत्वादीनां सम्बन्धत्वविवक्षायां पटत्वेन जन्यत्वं प्रकारकत्वमभाव इत्यादि प्रकृत्यादित्वात्साधु।

अत्र सर्वत्र कथंचित्करणत्वहेतुत्वान्यतरारोपेण तृ-

---

भाव सम्बन्धस्तदर्थः। सुखेन यातीत्यादौ सुखजनकं यानमित्यादिबोधः। जन्यजनकभावसम्बन्धस्तदर्थः। ज्ञाप्यज्ञापकभावसम्बन्धस्तदर्थं इत्याह नामज्ञाप्येति।

यत्तु प्राञ्चः सुरथो नामेत्यत्र सुरथ इत्यस्य तच्छब्दवाच्य इत्यर्थः नामेत्यव्ययं संज्ञार्थे नामशब्दार्थसंज्ञायाः सुरथशब्दैकदेशे शब्देऽन्वयः। तेन संज्ञाभूतसुरथशब्दवाच्य इति बोध इति तन्नेति ध्वनयन्नाह सुरथ इति। नात्र तृतीया अव्ययत्वात्। प्रागुक्तसिद्धान्तेनाह यद्वेति सुरथ इति शब्दपरं नामेति तत्र तात्पर्यग्राहकं तदाह नामेति। तृतीया तु सर्वथा नेति गूढाकूतं। उक्तरीत्यैवाह नामभूतेति प्रथमापवादोऽत्र तृतीया अनव्ययत्वात्

उपसंहरति एवमिति। पटत्वेनेत्यस्य सर्वत्रान्वयः। एतेनानेनाभेदे तृतीयेत्यपास्तं तत् ध्वनयन् सिद्धान्तमाहात्रेति। वार्त्तिकलक्ष्येषु सर्वेष्वित्यर्थः। कृतपदाध्यादारादिना प्रकृत्या कृतश्चारुरित्यादिरूपेणेत्यर्थः। असम्भवस्थलेऽपि तथैवेति सूचनाय कथञ्चिदिति।

तीयेति भाष्यसंमतम् । अह्ना क्रोशेन वानुवाकोऽधीत इत्यत्र तृतीयार्थः सम्बन्धः क्तप्रत्ययार्थातीतत्वध्वङ्ग्ये क्रियात्यागे फलप्राप्तिपूर्वकत्वंच तृतीयाद्योत्यम्। एवंचानुवाकविषयकमहः संबन्धयतीतमध्ययनमिति बोधः। तेन फलप्राप्तिपूर्वकस्तत्त्यागो व्यज्यते।

पुत्रेण सहागत इत्यादौ सहयुक्तेऽप्रधाने इति तृतीया सहार्थश्च समभिव्याहृतपदार्थसमकालिकत्व रूपं साहित्यं, तत्समनियताखण्डोपाधिरूपं वा तृतीयार्थश्च क्रियासमभिव्याहारे सहार्थबलात्प्रतीयमान तत्तत्क्रियाकर्तृत्वादिकमेव । द्रव्यगुणसमभिव्याहारे सहार्थबलात्प्रतीयमानस्तत्तत्पदार्थसम्बन्ध एव। एवं च पुत्रेण सह आगतः । पुत्रेणसह पितुर्गौः। पुत्रेण सह स्थूल इत्यादौ पुत्रकर्तृकागमनसमानका-

---

द्रव्यादिसङ्ग्रहाय हेतुत्वेति। इदं चान्यत्र स्पष्टं।

अपवर्गे तृतीयेत्यस्य विषयमाहान्हेति। सम्बन्ध इति निरन्तरोऽभिव्याप्तिरूप इत्यर्थः। कालाध्वनोरित्यनुवृत्तेः। च तृतीयेति तृतीयाद्योत्यं चेत्यर्थः। कर्मप्रत्ययसत्वादाह विषयकमिति। अहः सम्बन्धीति अवयवरूपदण्डसमूहव्यापकमित्यर्थः । कालस्य द्योत्यत्वादाहातीतमिति। फलप्राप्तौ सत्यां प्रयोजनाभावादेव न क्रियाप्रवृत्तिरिति सूत्रेऽपवर्गशब्देन फलप्राप्तिपूर्वकस्त्याग, उच्यते तदाह तेन फलेति। आदिग्राह्यमनुपदमेव स्फुटीभविष्यति ।समेति। सहादिसमभिव्याहृतपुत्रक्रियादिसमानकालिकतत्क्रियादिमत्वमित्यर्थः तथा ततो बोधानुभवादाह तत्समेति तदन्यूनानतिरिक्तवृत्तीत्यर्थः। जातित्वासम्भवादाहाखंडोपेति । परमतेनेदं । सिद्धान्ते तु जातिरूपमेव बोध्यं सर्वत्रैकरूप्याभावादाह क्रियेति। आदिना कर्मत्वादि वक्ष्यमाणस्थले। आदिसंग्राह्यविषयस्थले आह द्रव्येति पुत्रस्वामिकेति। अत्र षष्ठ्यर्थसम्बन्धे एव सहार्थान्वयस्तथैना-

लिकागमनवान् पुत्रस्वामिकत्वसमानकालिकपितृस्वामिकत्ववती गौः। पुत्रवृत्तिस्थौल्यसमानकालिकस्थौल्यवानित्यादिक्रमेण बोधः। तदुक्तं काव्यप्रकाशे।

सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्।

इति। शब्दशक्त्या एकार्थाभिधायकपदं यत्सहान्वयबलादनेकार्थाभिधायकं यथा कथञ्चिद्बोधकं सा सहोक्तिरिति तदर्थः। तत्रैकस्यार्थस्य वाचकमन्यस्याक्षेपकमिति बोध्यम्।

उदाहरणे आगत इत्येतदुभयवृत्त्यागमनबोधकमिति तद्व्याख्यातारः। पुत्रकर्तृकागमनसहितागमनवानिति बोधः। पुत्रादेः सहार्थयोगश्चागमनादिद्वारक एव बोध्यः। क्वचित्समानदेशत्वरूपं तत्सम्नियतं वा तदर्थः। यथा माषवापोत्तरं तत्रैव क्षेत्रे तिलवापे तिलैः सह माषान् वपन्ति स्मेति भवति स्पष्टं चेदं भाष्ये।

---

नुभवात्। बलादित्यस्यार्थमाह सहार्थेति। शक्तिरेव नाभिमतेत्याह यथेति सहोक्तिस्तन्नामालंकारः।

दिगंतमगमत्तस्य कीर्त्तिः प्रत्यर्थिभिः सह।

इत्युदाहरणं तदेव विशदयति तत्रेति तयोर्मध्ये इत्यर्थः। एकस्य प्रधानसम्बन्धिनः उदाहरणे दृष्टान्ते प्रागुक्ते। तादिति प्रकाशेत्यर्थः। प्रागुक्तपक्षान्तरे आह पुत्रेति। एवं संति साक्षात्तद्योगाभावादाह पुत्रादेरिति। पृथग्विनानानाभिरितिवत्सहेनेत्येव सिद्धे युक्तग्रहणं शब्दविशेषानादरेणार्थयोगे भवत्वित्यर्थमित्याशयेनाहआगेति। तस्य प्रायिकत्वादाह क्वचिदिति। प्राग्वदाह तत्समेति। तदर्थः सहार्थः। वापोत्तरमित्यनेन कालमेव(१)तः। भाष्ये अत्रैव सूत्रे। एवमग्रेपि। तेन ते-

(१) अत्र किंचित्पाठस्त्रुटितः।

यद्यपि सहागतः पुत्रेणेत्यादौ सहार्थसामर्थ्यात्प्रतीयमानक्रियाकर्तृत्वेन पुत्राचृतीया सिद्धा नच क्तेनाभिधानं इतरसमभिव्याहारं विनापि प्रतीयमानस्वप्रकृत्यर्थक्रियाकर्तुरेव तेनाभिधानात्। एवं पुत्रेण सहागमनं देवदत्तस्येत्यादावुक्तरीत्या प्रतीयमानकृत्प्रकृत्यर्थान्वयिनोः कर्तृकर्मणोरेव षष्ठी न तत्तत्प्रतीयमानतदन्वयिनोरिति न दोषः।

तथापि पुत्रेण सह स्थूल इत्याद्यर्थं सूत्रम्। स्वान्वयिगुणद्वारा सहयोगस्य पितापुत्रयोरविशेषेऽपि न पितुस्तृतीया। प्रधानत्वात्। अप्रधानग्रहणप्रत्याख्यानेऽपि पितुर्न सा। उपपदविभक्तेरिति न्यायादिति सर्वं भाष्ये स्पष्टम्। गुणद्रव्यक्रियाभिर्गुणप्रधानभावेन द्वयोः सम्बन्धे सहशब्दप्रयोगो भवति। तत्राप्राधान्यं नाम

---

नैव। पुत्रात्तच्छब्दात् (वल्ल इत्युत्तरति सयेत्यर्थः।) कर्तुरेव पितुरेवउक्तेति इतरेतीत्यर्थः। कर्तृकरणयोस्तृतीयेत्यत्र तु नैवं वक्तुं शक्यं कृत्पदादिरूपगमकाभावात्। आदिना प्रागुक्तद्वितीयं पितापुत्रौ सहागतावित्यादौ तु तदुपात्तक्रियागतं बुध्यत इति न तृतीया।

अप्रधानग्रहणफलमाह स्वान्वयीति। स्वं प्रधानं। सहेति तदर्थेत्यर्थः। सा तत्सूत्रविहिता तृतीया पूर्वं यद्यपीत्याद्युक्तं विशेषं वक्तुमुक्तमेव विशदयति गुणेति। तत्र सम्बन्धमध्ये। उक्तेषु लक्ष्येषु शाब्दसम्बन्धः पुत्रं (१)स्यतस्य तु एतद्राहित्येन. द्वे तत्त्वं विशदयति। इतरेति तत्र तयोर्मध्ये वक्ष्यमाणनिरासायाहोक्तेति स इति। तदभावादपि स इत्यर्थः। अतस्तद्योगेऽपि तत्र तृतीया तदाह सहैवेति। साहित्यान्तरमाह पुत्रेणेति विशेषमाहैवमिति। उक्तप्रकारेणेत्यर्थः। तृतीति सहार्थयुक्तेत्यादिः। आदिना द्वितीया।

---

(१) अत्र मातृकास्थः पाठोयथावदवस्थापितः।

शाब्दगुणाद्यन्यथयित्वाभावः । उक्तेष्वागमनादिभिः पितुः शाब्दः पुत्रस्य सहार्थबलात्प्रतीयमानैस्तैः सम्बन्धादार्थः । इतरसम्बन्धं विना प्रतीयमानत्वं चार्थस्य शाब्दत्वं तत्रोक्तसाहित्यवाचि सहशब्दप्रयोगे शाब्दत्वरूपविशेषणाभावकृतो विशिष्टाभावः । विद्यमानतावाचि सहशब्दयोगे तु विशेष्याभावात्सः । सहैव पुत्रैर्दशभिर्भारं वहतिगर्दभीत्यादौ दशसंख्याकपुत्राणां विद्यमानत्वेऽपीत्यर्थः । पुत्रेण सह यः स गत इत्यादौ वैशब्द्यादिरूपं साहित्यं सहार्थः पुत्रसाहित्यवान् यः स गत इति बोधः । एवं तृतीयान्तार्थस्य शाब्दाप्राधान्येऽपि प्रथमाद्यन्तार्थस्यान्याधीनत्वरूपमार्थमप्राधान्यं प्रतीयते । अतएव समकक्षयोर्मध्येऽन्यतरस्यापरेण सहागन्तव्यमित्युक्ते दुःखं दृश्यते

यत्तु प्रधानत्वं मुख्यत्वमत्र नगरेऽयं प्रधान मित्यादिवत् । तदभावरूपं चाप्रधानत्वं तृतीयार्थ इति ।

---

प्राचां मतं खंडयति यत्त्विति मुख्यत्वं सखंडं । अखण्डं सखडंवा यद्वशाद्व्यवहार इत्याहात्रेति अस्मिन्नगरेइत्यर्थः । प्रधानशब्दस्य नित्यक्लीबत्वादाह प्रधानमिति वाच्यमिति अतएवाप्रधानग्रहणं चरितार्थं । नच प्रधाने तृतीयाव्यावृत्त्यर्थं तत्प्रातिपदिकार्थमात्रेऽन्तरंगत्वात्प्रथमोत्पत्तेः । उपपदविभक्तीनां षष्ठ्यपवादतया षष्ठीवत्तद्विशेषणादेव प्राप्तेश्चेति भावः । उक्तेति सहयुक्ते अप्रधानवचनमनर्थकं कारकविभक्तेर्बलवत्वात्प्रथमा भविष्यतीति अप्रधानग्रहणप्रत्याख्यानभाष्येत्यर्थः ।

किञ्च अन्तरङ्गत्वं न युक्तं षष्ठ्यपवादत्वमिव प्रथमापवादत्वस्याप्युपपदविभक्तीनामापत्तेः । अनन्तरस्येतिन्यायेन प्रथमापवादत्वस्यैव आपत्तेरेतेन द्वितीयहेतुरपि निरस्तस्तदाहान्यत्रेति शब्दर-

तत्र राज्ञा सह सेना गच्छतीत्यादौ तृतीयाना-पत्तेरित्यन्यत्र विस्तरः।

पादेन खञ्ज इत्यादौ विकारप्रयुक्तत्वरूपसम्बन्धस्तृतीयार्थः। पादविकारप्रयुक्तसंस्थान वैधुर्यवचरणवानिति बोधः। कायेन दशवक्त्रो मुखेन त्रिलोचन इत्यादौ प्रकृत्यादित्वात्तृतीया। अक्ष्णा काण इत्यत्र चक्षुर्नाशवान् सचक्षुष्कः काणपदार्थः। अक्षिपदार्थो गोलकं। गोलकविकारप्रयुक्त चक्षुर्नाशवान् सचक्षुष्क-इति बोधः। अतिशायने तमबिति सूत्रे भाष्ये त्वन्धानां काणतम इति काणिरयं सौक्ष्म्ये वर्तते सर्वे इमे किंचित् पश्यन्ति अयमेषां काणतम इत्युक्तम्। अन्धानामपि वास्तवं काणत्वं वर्तते। तत्रादर्शनप्रकर्षाश्रयः प्रत्ययः। तथाच प्रसिद्धिरन्धानां काणो राजेति कैयटः।

जटाभिस्तापस इत्यादौ ज्ञाप्यत्वं तृतीयार्थः।

---

त्यादावित्यर्थः। येनांगेत्यस्य लक्ष्ये आह पादेनेत्यादि। विकारेति पादस्यैव। तल्लक्ष्यत्वासंभवादाह कायेनेति। तृतीयावाच्य एव सम्बन्धः षष्ठ्यपवादोनान्योऽतआह प्रकृत्येति। तृतीयार्थः सएवेत्याह गोलकविकारेति। षष्ठ्यपवादत्व माहान्धानामितिकाणिरयमिति एवं चेत्यादिः। वास्तवमिति ननु लोकप्रसिद्धमिति भावः। एवं स्वार्थेन सर्वथा दृष्टिहीनः काण इति लभ्यते इति पूर्वतो-विशेषः इत्थंभूतेत्यस्य लक्षणमाह जटाभिरिति। यद्यपि ताभिस्तापसो ज्ञात इत्यर्थे ज्ञानक्रियायाःकरणत्वात्सिद्धिस्तथापि तदविवक्षायां लक्ष्यलक्षणभावमात्रविवक्षायां तृतीयार्थंतादित्याह ज्ञाप्यत्व मिति इत्थंभूतस्य यत्र लक्षणवाचकात्पृथगुपास्थितिरेव तत्रैव तेन तृतीया तेन कमंडलुपाणिं च्छात्रमद्राक्षीदित्यादौ कमंडलुपदान्न तृतीया कैयटस्येत्यत्र प्रस्पष्टं।

जटाज्ञाप्यतापसत्वविशिष्ट इति बोधः। दण्डेन घट इत्यादौ हेतुस्तृतीयार्थः। हेतुत्वमखण्डोपाधिः। दण्डाभिन्नहेतुजन्यो घट इति बोधः। हेतुदण्डीयइत्यादि बोध इति तूचितम्। अध्ययनेन वसतीत्यादौ फलस्याप्यध्ययनस्य ज्ञानद्वारा हेतुत्वम्। उक्तंचहरिणा

अनाश्रिते तु व्यापारे करणं हेतुरिष्यते।

द्रव्यादिविषयो हेतुः करणं नियतक्रियम्॥ इति च।

व्यापारानावेशेऽपि योग्यतामात्रेण हेतुत्वम्। आदिना गुणक्रिये। क्रियाविषयं त्वनाश्रितव्यापारमेव। दास्या संयच्छते। संयच्छतेर्दानपूर्वो भोगोऽर्थः। दास्यै दत्वा तां भुङ्क्ते इत्यर्थः।

इति तृतीया।

---

हेताविति अस्य लक्ष्ये आह दंडेनेत्यादि हेतुरिति कारणं न शास्त्रीयस्तस्य कर्तृसंज्ञाया अपि सत्वेन कर्तृतृतीययैव सिद्धेः यत्तु अनन्यथासिद्धनियतपूर्ववर्त्तित्वरूपकारणत्वमेव हेतुत्वमिति तन्नान्यथासिद्धेरन्यत्रासिद्धेश्चात आह हेतुत्वमिति। प्रकृतिप्रत्ययार्थयोरभेदः संसर्गः प्रत्ययार्थस्य च जन्यतासंसर्गेणेतरत्रान्वयस्तदाह दंडाभिन्नेति। प्राग्वत्सिद्धांतमाह हेत्विति हेतुशब्दस्यासंज्ञात्वेनात्र बोध्यातरं नोक्तं॥

यत्तु हेतावित्यत्र फलमपि हेतुशब्देन गृह्यते अध्ययनफलको वास इति बोधस्तन्न क्वचित्फलमपि हेतुत्वेन विवक्ष्यते इति तदर्थात्। तथाचाहेत्वध्ययनीयोवासः इत्येव बोधस्ततध्वनयन्नाहाध्ययेति। तथाच करणत्वशक्तेर्भिन्नैव हेतुत्वशक्तिरत्र तृतीयार्थ इति तात्पर्यं। अत्र मानमाहोक्तंचेति पूर्वतात्पर्यमाह व्यापारेति। अविरोधायाह क्रियेति एतेन लौकिकहेतुरपि करणमित्यपास्तं अशिष्टेति वार्तिकलक्ष्यमाह दास्येति तत्र भाष्योक्तप्रकारमाह संयच्छतेरिति। प्रत्यासत्तिलभ्यमाह तामिति।

इति तृतीया॥

कारकचतुर्थ्याः संप्रदानत्वशक्तिमानर्थः। सा शक्तिश्च तत्तद्धात्वर्थकर्मनिष्ठफलनिरूपकत्वेनेच्छाविषयो यस्तन्निष्ठा। कर्मणा यमभिप्रैति स संप्रदानमिति सूत्रात्। कर्मनिष्ठेत्यनेन कर्मणश्चतुर्थीनिमित्तत्वप्रदर्शनात्। कर्मश्रुत्यपेक्षया चतुर्थीश्रुतेर्बलवत्त्वं बोध्यते। अतएव क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीत्यादौ दण्डदानं न प्रतिपत्तिः किन्तु द्वितीयापेक्षया बलीयस्या चतुर्थीश्रुत्या मैत्रावरुणसंस्कारकमिति मीमांसकाः।

यत्तु तद्धात्वर्थकर्मसम्बन्धजन्यफलं गोलाभकृतसुखादि तभ्दागित्वेन य इच्छाविषयः ... संप्रदान-

---

अनतिप्रसंगायाह कारकेति सिद्धांतमतेनाह संप्रेति अयमेवोद्देश्य इत्युच्यते जीर्णैः। प्राग्वदाह साशक्तिश्चेति कर्मणा संबन्धुं यमिच्छति स सम्प्रदानमिति सूत्रार्थः। कर्मसंबंधश्च कर्मनिष्ठफलनिरूपकत्वं तदाह तत्तद्धात्वर्थेति। यस्तदिति योयस्तन्निष्ठेत्यर्थः। निमित्तेति तथाच शेषत्वं तस्येति भावः। क्रीते इति प्रयोजकलक्षणे मैत्रावरुणाय दण्डप्रदानमित्यधिकरणे इत्यादि। उपयुक्तस्याकीर्णतानिवारकं कर्म प्रतिपत्तिकर्म। संस्कारकमिति इदमेवार्थे कर्मेत्युच्यते, अन्यथा श्रुतित्वाविशेषेण तथोक्त्यसंगतिः स्पष्टैव।

नैयायिकाद्युक्तिं खण्डयति यत्त्विति। इत्थं हि तदाकूतं कर्मत्वस्य क्रियानिरूपितत्वात्कारके इत्यधिकाराच्च तत्क्रियाकर्मणा करणभूतेन तत्क्रियाकर्मसम्बन्धजन्यफलभागित्वेन यमभिप्रैति स संप्रदानमिति सूत्रार्थः। कर्मसम्बन्यजन्यं फलं च गोलाभजन्यं विप्रसुखादि तच्च समभिव्याहारबलात्तात्पर्यतश्चविशेष रूपेण भासते। कर्मसबन्धजन्यफलभागित्वेनोद्देश्यश्चतुर्थ्यर्थः एवंच विप्राभिन्नो यो गोसंबधजन्यसुखाश्रयत्वेनोद्देश्यस्तन्निरूपितगोवृत्तिस्वत्वोत्पत्तिस्वस्वत्वनिवृत्त्यनुकूलो व्यापार इति बोधः। एवंच कर्मणेत्यस्य चारितार्थ्यं स्पष्टमेव।

मिति तन्न । सूत्राक्षरैर्वाच्यवृत्त्योक्तार्थालाभात् । तथा शाब्दबोधाभावाच्च ।

यदपीच्छाविषयत्वमेवोद्देश्यत्वमिति । तदपि न देवो रूपवानित्यादौ उद्देश्यविधेयभावेनान्वयाद्देवे उद्देश्यत्वप्रतीतावपि इच्छाविषयत्वाप्रतीतेः तस्मादुद्देश्यत्वमुद्देश्यादिपदशक्यतावच्छेदकतया सिद्धम् पदार्थान्तरमेव । क्वचिदिच्छाविषयत्वसमानाधिकरणमित्यन्यत् ।

विप्राय गां ददातीत्यादौ विप्राभिन्नसंप्रदाननिष्ठोद्देश्यतानिरूपकं दानमिति बोधः । स्ववृत्त्युद्देश्यतानिरूपकत्वं सम्बन्धः । संप्रदानविप्रीयमिति । विप्रसं-

---

एवं क्रियया य मित्येतत्संपाद्यचतुर्थ्याः क्रियाजन्यफलाश्रयतयोद्देश्योर्थः फलं च सुखलाभादीति यद्यपि अयमर्थो गत्यर्थकर्मणेतिसूत्रभाष्यविरुद्धः तत्रहि ग्रामाय गच्छतीत्यादौ क्रियाया अपि वक्ष्यमाणरीत्या कृत्रिमकर्मत्वमाश्रित्य कर्मेतिसूत्रेण संप्रदानत्वात्संप्रदानचतुर्थ्यैव सिद्धे चतुर्थीग्रहणं न कार्यमित्युक्तं तथापि तदुक्त्यनुरोधेन कर्मणा यमभीत्येव सूत्रे उक्तत्वादाहसूत्रेतिदोषानुभवोऽपि तथा नेत्याह तथेति

भूषणकाराद्युक्तिं खंडयति यदपीति कर्तुरिच्छाविषयश्चतुर्थ्यर्थः फलस्य धातुना निरूपितत्वस्य संसर्गमर्यादया लाभात् अयमेव वोद्देश्य इत्युच्यते एवंच विप्राय गांददातीत्यत्र स्वत्वतन्निवृत्त्युभयानुकूलव्यापाररूपस्य धात्वर्थैकदेशे स्वत्वे चतुर्थ्यर्थस्य निरूपिततयाऽन्वयः । एवंच विप्राभिन्नेच्छाविषयानिरूपितस्वत्वतन्निवृत्त्युभयानुकूलो व्यापार इति बोध इति भावः । हेतुमाह देव इत्याऽप्रतीतेरित्यंतेन । क्वचित्संप्रदानविषये तदेव स्पष्टयति विप्रायेति कर्मणा सम्बन्धमिच्छतीति सूत्रार्थघटकसम्बन्धमाहस्वेति संप्रदानेत्यर्थः । एवं प्राचां मतेन बोधाद्युक्त्वा सिद्धांतमाह संप्रेति । मतद्वये प्रोक्तदोषं

प्रदानकमिति वा बोधः। क्रिया कारकभावः सम्बन्ध इति द्वितीयोक्तादिशोचितम्।

पितृभ्यः श्राद्धं दद्यादित्यादौ स्वत्वे पितृनिरूपितत्वस्य बाधेऽपि स्वस्वत्वनिवृत्तिपूर्वकपरमात्रस्वत्वापत्त्यनुकूलत्यागरूपे दाधात्वर्थे पितॄणामुद्देश्यत्वसत्त्वान्न दोषः। परस्वत्वहेतुश्च त्याग एव। अत एव विदेशस्थपात्रमुद्दिश्य त्यक्तधने स्वीकारमन्तरेणैव पात्रस्य मरणेऽपि उद्देश्यपुत्रादिभिरेव पितृदायत्वेन तद्धनं विभज्य गृह्यते नान्यैरिति व्यवहारः।

प्रतिग्रहस्तु लब्धावष्टगुणं पुण्यमित्युक्तेः प्रतिगृहीतधनदाने फलातिशयजनकः। अदृष्टार्थदत्तस्वीकार एव प्रतिग्रह इति परितोषदत्ततिलतुरगादिस्वीकारे न दोषः।

---

प्रतिपादयन्स्वमते निर्वाहमाह पितृभ्य इति बाधेपीति प्रतिग्रहाभावात्॥

दाधात्वर्थं प्रागनुक्तमत्राह स्वत्वेति एवंच पित्राभिन्नसंप्रदाननिष्ठोद्देश्यतानिरूपकः स्वत्वनिवृत्त्याद्यनुकूलो व्यापार इति बोधः। ननु स्वस्वत्वानिवर्त्तकोपि त्यागो न परस्वत्वहेतुः प्रतिग्रहादेरेव तत्त्वादतआह परेति त्योपीत्यर्थः। विप्रोद्देशेन त्यक्तमात्रायां गवियंगौरियं विप्रस्य न ममेत्यादि सर्वजनप्रतीतेरितिभाव। एवेन प्रतिग्रहादिनिरासः। अतएव तस्यैव तद्धेतुत्वादेव। अन्यथा तैरिवोदासीनैरपि तद्धनस्यारण्यककुशादेरिवोपादाने प्रत्यवायो न स्यादितिभावः

नन्वेवं स्वीकारो व्यर्थोऽतआह प्रतीति। एवं सत्यसत्प्रतिग्रहे स्मृत्युक्तदोषातिप्रसंगं वारयति अदृष्टेति। मात्रपदकृत्यमाह संसृष्टीतिविभक्तं धनं पुनर्मिथीकृतं संसृष्टं। तदस्यास्तीति संसृष्टः सच न यः कश्चित्

संसृष्टिस्थले साधारणस्वत्वोत्पादेऽपि ददातीत्य-प्रयोगात्परमात्रस्वत्वोत्पत्त्यनुकूलेत्युपात्तम्। तत्रापि स्वत्ववति स्वत्वानुत्पत्त्या पूर्वस्वत्वनाशाङ्गीकारात्। उपेक्षा तु न नियमतः परस्वत्वोत्पादिकेति न तत्र ददातीति प्रयोगः। विक्रयोऽपि न तथा मूल्यदान-पूर्वकस्वीकाररूपक्रयस्यैव स्वत्वजनकत्वात्। स्वत्वं च दानादि नाश्यं प्रतिग्रहादिजन्यमतिरिक्तपदार्थरूपं तच्च बहिरिन्द्रियवेद्यं पश्यामीत्यादि व्यवहारात्।

---

विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः
पितृव्येणाथवा प्रीत्या स तत्संसृष्ट उच्यते

इति बृहस्पत्युक्तेः स्पष्टं चेदं संसृष्टिनस्तु संसृष्टीत्यत्र (याज्ञ० स्मृ० अ० २ श्लो० १३८) मिताक्षरायां। साधेति असाधारणस्वत्व-नाशोत्तरमित्यादिः। ननु तत्र न स्वत्वनाश इति स्वत्व निवृत्तिपूर्वे त्यनेनैवातिप्रसंगवारणे मात्रपदं व्यर्थमतआह तत्रापीति। इच्छाया उत्ते जकस्यांगीकारे तु गौरवमितिभावः। एतेन न तत्र स्वत्वनाशः किंतु परस्वत्वोत्पत्तिमात्रं स्वस्वत्ववतिस्वत्वोत्पत्तिस्तु स्वेच्छाया उत्ते-जकत्वादित्यपास्तं। नन्वेवमप्युपेक्षायां दोष एवात आहोपेक्षेति अ-तएव विक्रेयस्थलेऽपि नतथा प्रयोग इत्याह विक्रेति। तथा न निय मतः परस्वत्वापादकः तस्य परस्वत्याजनकत्वात् क्रयस्यैव तज्ज-नकत्वादितिभावः। तत्राप्यनतिप्रसंगाय विशेषमाह मूल्येति

ननु किमत्र स्वत्वमितिचेदत्र प्रांचः शास्त्रनिषिद्धयथेष्टविनियो-गोपायभूतक्रयप्रतिग्रहादिविषयत्वं। तच्च नबहिरिंद्रियवेद्यं प्रति ग्रहादेर्मानसज्ञानविषयस्य बहिरिंद्रियायोगत्वादिति तन्न प्रतिग्र-हादिनाशांनतरमपि स्वत्वव्यवहाराद्दानादितः स्वत्वं नश्यति प्रति-ग्रहादितश्चोत्पद्यत इत्यादिव्यवहाराच्च

तदेतदभिप्रेत्याह स्वत्वं चेति सर्वसंग्रहायाह बहिरिति अत एवाग्रे आदिः। अनतिप्रसंगायाह तदिति अतस्तदाग्रहे. तदीययथेष्टविनियो-ज्यत्वेतदीयत्वव्यभिचारित्वाग्रहे चन तद्ग्रह इतिभावः। एतेनानुमेय-

तत्साक्षात्कारे च तदीयस्वत्वव्याप्यतदीययथेष्टविनि-योज्यत्ववदिदमिति ज्ञानं हेतुः ।

संप्रदानमनेकधोक्तम्—

अनिराकरणात्कर्तुः त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां च लभते संप्रदानताम् इति ॥

आद्यं देवता । प्रेरणया याचकः । अनुमत्योपाध्यायः । खण्डिकोपाध्यायस्तस्मै चपेटां ददातीत्यत्र-संयोगविशेषानुकूलो व्यापारो ददात्यर्थः । चपेटा प्रसृतकरतलम् ।

न शूद्राय मतिं दद्यादित्यादौ बोधनार्थः सः । मतिशब्देन तज्जनकवेदादिरूपं शास्त्रमुच्यते ।

---

मेव स्वत्वं स्वं पश्यामीति तु सुरभिचंदनं पश्यामीति वत् विशेषणांशे लौकिकविषयत्वावगाहीति नव्यतरोक्तमपास्तं तस्य खण्डितत्वात् ॥

अस्य भेदानाह संप्रेति । त्रिधा हरिणोक्तमित्यर्थः । कर्त्तुरित्यादेर्मध्यमणिन्यायेनान्वयः । अनीत्यनेनैकमित्याहाद्यमिति । सूर्यायार्ध्यंददातीत्यादि । नात्र सूर्यः प्रार्थयते नानुमन्यते न निराकरोति । याचक इति । विप्राय गां ददातीत्यादि । आन्विति उपाध्यायाय गां-ददातीत्यादि

न च दानादीनां परम्परया तदर्थत्वातादर्थ्यचतुर्थ्यैव सिद्धे किमनया संज्ञयेति वाच्यं दाशगोघ्नौ संप्रदाने इत्यर्थत्वात् तत्संप्रदानकंदानमिति बोधार्थमावश्यकत्वाच्च अतएव तादर्थ्यचतुर्थ्या दानकर्मणो-गवादेः संप्रदानार्थत्वेपि दानक्रियायास्तदर्थत्वाभावेन चतुर्थ्यर्थतार्थस्य दानक्रियायामन्वयानापत्तिरिति हेलाराजस्तदेतत्सूचितं । कर्मणेप्सितमिति । ध्याय इत्यग्रे त्यागाङ्गमित्युपलक्षणमितिकश्चित्पाठः

नायं दाधात्वर्थः सर्वत्रेत्याह त्यादिना खंडीति लेखनोपाध्याय इत्यर्थः । गत्याद्यर्थनिरासायाह विशेषेति । मते बोधनासंभवादाह मे-

रजकाय वस्त्रं ददातीत्यादावाधीनीकरणं तदर्थः। शेषत्वविवक्षायां रजकस्य वस्त्रमित्यपि भवति। अजां ग्रामं नयतीत्यादौ परया कर्मसंज्ञया बाधान्न दोषः। पत्ये शेते इत्यादौ शयनादि क्रियाया अपि संदर्शनप्रार्थनव्यवसायजन्यारम्भक्रियानिरूपितं कर्मत्वम्। पिण्डीमित्यादौ गम्यमानक्रियापेक्षकारकत्वदर्शनात्। हरिरप्याह—

संदर्शनं प्रार्थनायां व्यवसाये त्वनन्तरा।
व्यवसायस्तथारम्भे साधनत्वाय कल्पते॥
पूर्वस्मिन् या क्रिया सैव परस्मिन् साधनं मता। इति॥

संदर्शनं फलविषयः संकल्पः तत्प्रार्थनायां फलोपायविषयेऽभिलाषे साधनत्वाय कल्पते। व्यवसायः क्रियाविशेषस्य फलसाधनत्वेन निश्चयः। त-

---

ति। अस्याभ्युपगमादाह वेदादीति। एतेन प्रागुक्तसिद्धान्तं वृत्तिमतत्वेन संलिख्य खंडिकोपा न शूद्रायेत्यादिप्रयोगात् भाष्यमते नैतावत्पर्यन्तमर्थ इति भूषण कृदाद्युक्तमपास्तं।

नन्वेवमजा ग्रामं नयतीत्यादौ नयतिक्रिया कर्मभिरजाभिः सम्बन्ध्यमानस्य ग्रामस्यकर्मत्वापत्तिरिति अतआहाजाइति। यद्यपि ग्रामस्याजाकर्मकनयनोद्देश्यत्वाभावात्तत्र नहि ग्रामोऽजासम्बद्धो भवत्वितीच्छा नेतुः। किन्तर्ह्यजा ग्रामसम्बद्धा भवत्वितीति भूषणकृदप्येवं। तथाप्यजातोऽतिप्रसङ्गवारणसमाधिसाधारणशङ्कायामाह परयेति वार्त्तिकादिखण्डकभाष्यसिद्धान्तमाह शयेति। दर्शनादयस्त्रयः। तदिति व्यवसायेत्यर्थः। कर्मत्वं कृत्रिमकर्मत्वं।

ननु तासां नश्रवण मतआह पिण्डीमिति। पररीत्याआह गम्येतिसिद्धान्तस्त्वन्यतो बोध्यः। अस्यार्थमाह संदर्शनमिति तदिति भिन्नं पदं। अनन्तरानिकटवर्त्तिनी तदाह प्रार्थनेति। तत्रहेतुमाहाभीति तादर्थ्येत्यादिः। तथार्थमाह चेति। अस्य तात्पर्यमाह तेन चे-

आनन्तरा प्रार्थना साधनं, अभिलाषे सति निश्चयकरणात्। व्यवसायश्चारम्भे मानस्यां प्रवृत्तौ साधनम्। तेन चाप्यमानत्वेन प्रकृतक्रिया कर्मत्वं लभते। पूर्वस्मिन् काले क्रिया सा परस्मिन्नुत्तरकालभाविनि साधनम्। स्वापेक्षया सिद्धस्यैव तत्साधनत्वात् संदर्शनं तु क्रियासाध्यफलाभिलाषयोग्यताविशिष्टचैतन्यस्यैव तत्साधनत्वात्। एवंच कर्मणा यमिति सूत्रेण संप्रदानत्वम्। पतिसंप्रदानकमारम्भकर्मभूतं पत्नीकर्तृकं शयनमिति बोध इति स्पष्टं भाष्ये। कटं करोतीत्यादौ तु नैवं रीत्या तत्। अनभिधानात्।

क्रियया यमभिप्रैति स संप्रदानमिति वार्तिकमते तु पतिसंप्रदानकं शयनमिति बोधः। तत्तत्संज्ञासूत्रैस्तत्तदर्थे तत्तत्कारकशक्तिमत्त्वबोधनात्।

पशुना रुद्रं यजते इत्यत्र फलाश्रयः करणत्वश-

---

ति साधनेन चेत्यर्थः। प्राकृतक्रियाशयनादिक्रिया कर्त्रीयं। वैपरीत्यनिरासपरं तृतीयार्द्धमित्याह पूर्वस्मिन्निति। कर्त्रादेरैक्यायोग्यतया आह काले इति। कालस्यासाध्यत्वादाहोत्तरेति व्यापारे इत्यर्थः।

तत्र बीजमाह स्वापेक्षेति प्रत्यासत्तिलभ्यमिदं अतएवाहसंदर्शनंत्विति। अतएव तस्य प्रागुक्तिः शुद्धस्य तत्त्वासम्भवादाह फलेति। तदा त स्याप्यभावादाह योग्यतेति त्वादि त्यस्येतीतिशेषः। एवंच तस्या अपि कृत्रिमकर्मत्वे च सूत्रेण तेनैव चरमोपष्टम्भेनाहारम्भेति। नन्वेवं कटं करोतीत्यादावप्येवं रीत्या कटादेः सम्प्रदानत्वापत्तिरत आह कटमिति तत् सम्प्रदानत्वं उक्तबोधतो वैलक्षण्यमाह क्रियेति। तच्च पूर्वसौत्रकर्मपदावृत्त्या द्वितीयस्य क्रियापरत्वे सिद्धम्।

ननु तत्र सम्प्रदानत्वबोधोपि कुतः। पत्युद्देश्यकं शयनमित्येव युक्तोऽत आह तत्तदिति। अतएवाह पशुनेति। तत्कर्मकयागत्वमा-

क्तिमान्। उद्देश्यः कर्मताशक्तिमान् कर्मणः करणसंज्ञा संप्रदानस्य कर्मसंज्ञेति वार्तिकात्। पशुकरणको रुद्रकर्मको याग इति बोधः। अग्नौ किल पशुः प्रक्षिप्यते तद्रुद्रायोपाह्रियते इति भाष्यम्। हरये रोचते भक्तिः। विषयतासंबन्धावच्छिन्नप्रीत्यनुकूलस्तत्समानाधिकरणो व्यापारो रुचेरर्थः। तत्फलभूतप्रीतेः समवायेनाश्रयो हरिः संप्रदानत्वशक्तिमान्। रुच्यर्थानां प्रीयमाण इत्यनुशासनात्। समवायसंबन्धावच्छिन्नप्रीत्यनुकूलो व्यापारः प्रीधातोरर्थः। अत एव हरिं प्रीणयतीत्यादिसिद्धिः। एतदभावे हि हरौ षष्ठी प्राप्नोति शेषषष्ठ्यपवादो ऽत्र चतुर्थी।

केचित्तु प्रीतिविषयतामापद्यमानं मोदकं लौल्याद्देवदत्तः प्रयुङ्क्ते तदानुगुण्यमाचरतीति हेतुत्वे प्राप्ते इदम्। एवं च हेतुसंज्ञाभावे णिचोभावाद्धेतुगतव्यापाराप्रतीतेर्मोदकः स्वक्रियायां कर्ता भवति नतु देवदत्तः। उपात्तक्रियायां तस्य स्वातन्त्र्याभावादित्याहुः।

---

ह्यग्नौ किलेति तथा प्रक्षेपो यज्यर्थः।

रुच्यर्थानामित्यस्य विषयमाह हरयेइति। तदिति प्रीतीत्यर्थः। तदिति व्यापारेत्यर्थः। फलतावच्छेदकसम्बन्धमाह समेति चतुर्थ्यर्थमाह सम्प्रेति। तदुपपादयति समेति। रुचेस्तादृशार्थकत्वादाहैतदिति। रुच्यर्थानामितीत्यर्थः। हरौ लौल्यासम्भवादाह मोदकमिति। प्रेरणात्र तृतीयेत्याह तदानुगुण्यमिति। एवञ्च तृतीयापवादत्वं नतु षष्ठ्याः अस्या हेतुसंज्ञाबाधकत्वेन संज्ञाभावे इत्यकारप्रश्लेषः। क्रियान्तरे तत्वेऽप्याहोपात्तेति केचिदित्यरुचिबीजं तु तत्र तथासम्भवेपि प्रकृतोदाहरणे न तथेति तदेव युक्तमिति तमेवोक्तरीत्या विशदयति हरिनिष्ठेति।

हरिसंप्रदानिका भक्तिकर्तृका रुचिरिति बोधः। हा", छा१ भक्तिविषया प्रीतिस्तदनुकूलो भक्तिनिष्ठो व्यापार इति यावत्।

ये तु प्रीतिसमानार्थो रुचिः कर्मसंज्ञापवादश्चेदं संप्रदानत्वमितीच्छन्ति। तेषां प्रीयमाण इति सूत्रे निर्देशात्प्रीधातुयोगेऽस्याप्रवृत्तिः कल्प्येति गौरवम्। अभिलषतेश्च विषयतासंबन्धावच्छिन्न प्रीत्यनुकूलः प्रीतिव्यधिकरणो व्यापारोऽर्थ इति न तस्य रुच्यर्थत्वमिति हरिर्भक्तिमभिलष्यतीत्यादौ न हरेः संप्रदानत्वम्।

गोपी स्मरात्कृष्णाय श्लाघते अत्र श्लाघते बोधविषया स्तुतिरित्यर्थः। बोधस्य फलतावच्छेदकः

---

नैयायिकादिमतं खण्डयति येत्विति। प्रीयेति अन्यथा कर्मणि शानच् न स्यात्। अतएव प्रागुक्तस्य हरिं प्रीणयतीत्यादेः सङ्गतिः नन्वेव मपि अभिलष्यतियोगे तत्वापत्तिस्तस्य रुच्यर्थत्वादत आहाभीति चस्त्वर्थे लष्यतेरितिपाठः। अतएवाग्रे तथो क्ति सङ्गतिः। ततो भेदकमाह प्रीतिव्यधीति।

श्लाघहुङ्स्थेत्यस्य विषयमाह गोपीत्यादि ज्ञापयतित्यर्थ इत्यंतेन। वृत्तिता नतु विषयता अतएवाह बोधाश्रयेति। तदुपपादयति ज्ञीप्स्येति तत्रज्ञापनवचनात् ज्ञपेः सन्नन्तात्कर्मणि शानजिति णिजंतवलादिति भावः। विशेषमाह सन्निति। तत्रेति तयोर्मध्ये। ण्यर्थकर्मणो ग्रहणे इत्यर्थः गस्यमिति। अतएव कृष्णायात्मानं श्लाघते इत्यपि भवति। अतएव उक्ताभिसन्धानादेव। अयं योगः। उभयवैलक्षण्यमाह कृष्णस्यैवेति कृष्णं श्लाघते इत्यादि तदा हि कृष्णवृत्तिबोधविषया कृष्णकर्मिका स्तुतिरिति बोधः श्लाघादेः स्तुत्यादिमात्रार्थत्वेऽप्येवमेव

अत्र सनोऽसंभवादुक्तरीत्या विनिर्गमनाविरहात्पक्षांतरमाह

सम्बन्धो वृत्तिता । स्तुतिश्च गुणवत्त्वप्रतिपादकशब्द-प्रयोगादिः । स्मरादिति हेतौ पञ्चमी । बोधाश्रयस्य श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमान इति सम्प्रदानत्वम् । ज्ञीप्स्यमानपदेन प्रधानभूतण्यर्थकर्मणो ग्रहणम् । सन्नुस्वारस्याद्यद्विषयकज्ञानानुकूलव्यापारानुकूलव्या-पारस्तस्य प्रकृत्यर्थकर्मणोऽपि तेन पदेन ग्रहणम् । अ-न्यथा ज्ञाप्यमान इत्येव वदेत् । तत्राद्ये गोपीकर्तृका स्मरहेतुका कृष्णसम्प्रदानिका अर्थात्कृष्णवृत्तिबो-धविषया स्तुतिरिति बोधः । स्तुतिश्चात्मनः परस्यवेति तु प्रकरणादिगम्यम् । अत एव कृष्णाय गोप्या-त्मानं परं वा श्लाघ्यं कथयतीत्यर्थ इति प्राञ्चः । कर्म-संज्ञापवादोऽयं कृष्णस्यैव स्तुत्यत्वे तु परत्वात्कर्म-त्वमेव ।

यद्वा गुणोत्कर्षेण श्लाघ्यमानः कृष्णो गुणवत्तया तत्समर्थाचरणेनाध्यारोपितप्रेरणत्वाद्धेतुरिति हेतु-त्वापवाद इयम् । ह्नुते इत्यत्र ह्नौते बोधविषयमि-तरादर्शन योग्यदेशस्थापनमर्थः । आत्मानमित्यादे-रध्याहारः । सपत्नीभिया चात्मादेस्तथा स्थापनं बोध्यम् । एवंच गोपीकर्तृका कृष्णसंप्रदानिका अर्था-त्कृष्णवृत्तिबोधविषयात्मकर्मकतथावस्थानानुकूला-क्रियेति बोधः । तिष्ठतेः स्वाभिप्रायबोधानुकूलस्थिति-

---

यद्वेति निवृत्तप्रेषणपक्षसंभवादाहाध्यारोपीति इयं संप्रदानसं-ज्ञा । प्राग्वदाहात्मानमिति । परमतेनेदं आत्मानमित्यस्याध्याहारे आ-हात्मकर्मकेति । मिति बोध इति एवंचात्रपक्षे श्लाघादिधात्वर्थः बोधरूपफलाश्रयनिष्ठा संप्रदानत्वशक्तिरिति भावः

रर्थः। शपेः स्वाभिप्रायबोधानुकूलशपथकरणमर्थः। कृष्णसंप्रदानकबोधानुकूला स्थितिः। तत्संप्रदानबोधानुकूलं शपथकरणमिति बोधः।

यद्वा श्लाघ्यादेः स्तुत्यादिपूर्विका बोधनार्थः। स्तुत्या कृष्णमात्मानुरागं बोधयति ह्नुत्या तं कृष्णं बोधयति स्थित्या शपथेन तं कृष्णं बोधयतीत्यर्थः। प्रकृत्यर्थकर्मणो ग्रहणे तु स्तुत्या ह्नुत्या स्थित्या शपथेन कृष्णः स्वसखीजनं ज्ञापयतीत्यर्थः।

भक्ताय धारयति मोक्षं हरिः। धृङ् अवस्थाने इति धातोर्णिं च्यवस्थानानुकूलो व्यापारो धारेरर्थः। तदर्थावस्थित्याश्रयसंबन्धी संप्रदानं धारेरुत्तमर्ण इति सूत्रात हरिकर्तृको भक्तसंप्रदानको मोक्षकर्मकावस्थित्यनुकूलो व्यापार इति बोधः। शेषषष्ठ्यपवादोऽयम्। अत्रोत्तमर्णो दानक्रियया धारणस्य निमित्तम्। यतोऽसौ तदृणं ददाति। ददातिश्च नश्रूयते

---

विनिगमनाविरहादाह यद्वेति बोधनेति ण्यंतस्य रूपं। अध्याहारमाहात्मेति स्तुतिश्चकृष्णस्यैव। तं आत्मानुरागं। एवमग्रेपि ह्नुतिः सपत्न्यादिभ्यः कृष्णस्यैव। स्थित्येत्यादेः प्रत्येकमन्वयः एवमग्रेपि।

नन्वेवं सति ज्ञायमान इत्येव सिद्धे सनुक्तिवैयर्थ्यं ण्यंतकर्त्तुश्च कर्मण इत्युक्त्या ज्ञायमानपदेन तस्यैव ग्रहण सिद्धेरतस्तेन तस्यापि ग्रहणं, तस्यापि ज्ञापनविषयेच्छाविषयत्वान्नशानजनुपपतिरित्युक्ते तत्पक्षावष्टंभेनाह प्रकृत्यर्थेति अत्रपक्षेऽव्यवहित एव तदर्थ इत्याह स्तुत्येत्यादि प्राग्वदाह स्वेति। स्तुत्यादिः कृष्णस्यैवात्रापि। तस्मादुभयोरपिग्रहणं एतेनान्यतरस्यैव ग्रहणमित्यपास्तम्

धारेरुत्तमर्ण इत्यस्य विषयमाह भक्तायेति अवस्थान मवस्थित्यनुकूलो व्यापारस्तदाह तदर्थेति धार्यर्थः। अयंयोगः। तत्वमुपपादयन् कार

इत्यश्रूयमाणक्रियात्वाच्छेषे षष्ठी प्राप्ता सर्वत्र। वि- शेषविवक्षाया अभावे क्रियानिमित्तत्वमात्राश्रयणेन शेषत्वं प्राप्तमितिबोध्यम्। तदुक्तम्।

हेतुत्वे कर्मसंज्ञायां शेषत्वे वापि कारकम्।
रुच्यर्थादिषु शास्त्रेण संप्रदानाख्यमुच्यते इति ॥

ननु, ऋणं नाम सजातीयद्रव्यान्तरदानमङ्गीकृत्य परदत्तपरकीयद्रव्यादानं तज्जन्योऽधमर्णनिष्ठः परि- शोधननाश्योऽदृष्टविशेषो वा, उभयथापि नेह प्रा- प्तिः। मोक्षस्योक्त रूपऋणत्वाभावेन भक्तस्योत्त- मर्णत्वाभावादिति चेन्न। आवश्यकदेयत्वेन तत्रापि ऋणव्यवहारात्।

पुष्पेभ्यः स्पृहयति। स्पृहयतिरिच्छामात्रवाची। इच्छानुकूल मनः संयोगादिव्यापारवाची च फला- वच्छिन्नेच्छावाची च। आद्ये स्पृहेरीप्सित इति संप्रदानत्वम्। तत्र हि ईप्सितत्वं धात्वर्थव्यापार-

---

कत्वमाह। अत्रात्तेति नैवं केवलमत्रैव किंतु शब्दः पुरुषः इत्यादावप्ये- वमित्याह सर्वत्रेति। तदुक्तं हरिणा रुच्यर्थादियोगे यत्त्रितयान्यत मत्वे सति कारकं तच्छास्त्रैः संप्रदानाख्यमुच्यत इत्यर्थः। चौर्यनिरा- सायाह परदत्तेति। तस्यापि चौर्यादिनिरासायाह परकीयेति

नन्वादानस्य ऋणत्वेन तदुत्तरं ऋणमस्तीत्यादिव्यवहारो नस्या- दतआह तज्जन्य इति आदानजन्य इत्यर्थः अनतिप्रसंगायाह परीति अदृष्टेति दुरदृष्टेत्यर्थः। इह भक्तायेत्यत्र। ऋणेति तत्वेत्यर्थः। क्रुस्यैर्ऋ- णे इतिवत्। स्पृहेरीप्सित इत्यस्य विषयमाह पुष्पेभ्य इति। गादीति तद्रूपव्यापारेत्यर्थः। द्वितीये पक्षांतरमाह फलेति आद्ये इच्छामात्रार्थ- कत्वे फलेति यत्नेत्यर्थः। तमपालभ्यमाह कर्मेति द्वितीयाप्रकरणे इति भावः। अंत्ये इति अंत्यान्यतरं इत्यर्थः। अतएव स्पृहणीयं पु- ष्पमिति संगच्छते। षष्ठ्येवेति अतएव

जन्यफलाश्रयत्वं नतु फलस्य धात्वर्थत्वाग्रहः। कर्मसंज्ञा तु धात्वर्थफलाश्रयस्येत्युक्तम् । शेषषष्ठ्यपवाद एतत्संप्रदानविभक्तिः । पुष्पसंप्रदानिकेच्छेति बोधः। अन्त्ये कर्मत्वं पुष्पाणि स्पृहयतीति। संप्रदानस्यापि तत्त्वेनाविवक्षायां षष्ठ्येव ।

हरये क्रुध्यति द्रुह्यतीर्ष्यत्यसूयति। तत्र वधाद्यनुकूलव्यापारजनकश्चित्तवृत्तिविशेषः क्रोधः क्रुधेरर्थः । दुःखजनकक्रियारूपापकारजनकश्चित्तवृत्तिविशेषो द्रुहेः । धात्वर्थोपसंगृहीतत्वादेतावकर्मकौ । विषयतयैतद्धात्वर्थमूलभूतकोपसंबन्धिनो हरेः 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप' इत्यनेन संप्रदानत्वम्। हरिसंप्रदानको द्रोहः क्रोध इति बोधः। अत्र शेषषष्ठ्यपवादत्वम् । उत्कर्षविरोधिधर्मारोपानुकूलव्यापारजनकश्चित्तवृत्तिविशेष ईर्ष्या। शौचाचारादिगुणविषये दम्भादिकृतत्वरूप दोषारोपानुकूलश्चित्तवृत्तिविशेषोऽसूया । एते चित्तवृत्तिविशेषरूपकोपमूलकाः । प्ररूढस्य वाक्चक्षुरादिविकारानुमेयस्य

---

कुमार्य इव कांतस्य त्रस्यंति स्पृहयंति च
इति संगच्छते।

क्रुधद्रुहेर्ष्येत्यस्य विषयमाह हरये इत्यादि। तत्र क्रुधादीनां मध्ये तत्वात् संगृहीत कर्मकत्यात् । एतदिति उभयेत्यर्थः। अतएवाहात्रेति उभयत्रेत्यर्थः । हरेः क्रोधद्रोहाभ्यामिच्छाविषयत्वाभावात्क्रियया यमित्यनेन न सिद्धिः। यं प्रति कोप इति साधारणविशेषलब्धमाह एते इति क्रोधादयः सर्वे इत्यर्थः । सामान्येनाह चित्तवृत्तीति अतएव कुपेस्तदर्थत्वाभावेन न तद्योगे इदं। एवंच कुप्यति कस्मैचिदित्याद्यसाध्वेवेति बोध्यम्।

कोपस्यैव क्रोधपदार्थत्वेन तस्यापि कोपमूलकत्वं कुप क्रोधे इति तु तद्वृत्तिकोपत्वसामान्यमादाय ।

कर्मसंज्ञापवादोऽत्र हरिसंप्रदानकोत्कर्षविरोधीत्यादिक्रमेण बोधः । तद्धात्वर्थमूलभूतकोपविषयत्वे सति तद्धात्वर्थफलाश्रयस्यात्र संप्रदानत्वम् । सत्यन्तेन भार्यामीर्ष्यति मैनामन्योऽद्राक्षीदित्यादि व्युदासः । मित्राय द्रुह्यति प्रतापोऽपीत्यादौ चेतनत्वारोपो बोध्यः । द्विषस्तु बलवद्दुःखसाधनताज्ञानजन्योऽप्रीतिजनकश्चित्तवृत्तिविशेषः । औषधं द्वेष्टीति यथा । एतदेवानभिनन्दनम् । तद्योगे तु नैतत्प्रवृत्तिः । क्रुधाद्यर्थत्वाभावात् ।

कृष्णाय राध्यति ईक्षते वा । अत्र प्रश्नविषयशु-

---

ननु कुप क्रोधे इत्यनुशासनेन तस्यापि क्रोधार्थत्वेनान्येषां तन्मूलत्वेपि क्रोधस्य कथं तन्मूलत्वमतो नह्यकुपितः क्रुध्यतीति भाष्यमूलकमाह प्ररूढेति । अतएवाह वागिति नन्वेवमनुशासनस्य का गतिरतआह कुपेति । अनयोः सकर्मकत्वादाह कर्मेति । अत्र ईर्ष्याद्युभयत्र । विशिष्टसूत्रलब्धमाह तद्धात्वर्थेति क्रुधाद्यन्यतमेत्यर्थः । अत्र उक्तलक्ष्येषु । भार्यामिति नात्रभार्यां प्रति कोपः किन्तुपरैर्दृश्यमानां तां न सहत इत्येव एवं चात्र न कोपजन्येर्ष्या किन्त्वन्यपुरुषदर्शनजन्येति भावः । एवं सति क्वचिदप्राप्तिं निराचष्टे मित्रायेति ।

यत्तु प्रांचः द्वेषो बलवद्दुःखसाधनताज्ञानप्रयोज्यः प्रीत्याख्येच्छाया अभाव एव नतु चित्तवृत्तिविशेषः औषधं द्वेष्टीति प्रयोगादतएव तद्योगे नेदं प्रवर्तते एत दभिप्रायेणैवानभि नंदनं द्विषर्थो द्विष अप्रीताविति धात्वनुसारादिति तन्न तत्साजात्यैनैतस्यापि तद्रूपत्वस्यौचित्यात् तत्राप्येतदतिप्रसंगाभावात्तदाह बलवदिति । एवोनोक्तव्यावृत्तिः । तत्ताद्विट् ।

राधीक्ष्योरित्यस्य विषयमाह कृष्णायेति अत्र उभयत्र कर्मणः

भाशुभपर्यालोचनं धातोरर्थः । तदर्थप्रश्नविषयसंबन्धिनः कृष्णस्य 'राधीक्ष्योर्यस्य विप्रश्न' इत्यनेन संप्रदानत्वम् । कृष्णसंप्रदानकमर्थात्कृष्णसंबन्धि प्रश्नविषयशुभाशुभपर्यालोचनमिति बोधः ।

विप्राय गां प्रतिशृणोत्याशृणोति वा । अत्र प्रवर्तनाजन्योऽभ्युपगमो धात्वर्थः । स्वार्थप्रवर्तनाश्रयस्य 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ते'त्यनेन संप्रदानत्वम्।

होत्रेऽनुगृणाति प्रतिगृणाति चेत्यत्र शंसनविषयहर्षानुकूलव्यापारलक्षणं प्रोत्साहनं धात्वर्थः । धात्वर्थशंसनाश्रयस्याऽत्रा 'नुप्रतिगृणश्चे' त्यनेन संप्रदानत्वम् ।

शतेन शताय वा परिक्रीत इत्यत्र करणस्य पक्षे संप्रदानत्वम् । शतव्यापारश्च दानम् । फलेभ्यो याति । अत्राहर्तुमिति तुमुनन्तार्थकर्म चतुर्थ्यर्थः । फल-

---

प्रश्नविषयस्य धात्वर्थेनोपसंग्रहादकर्मकावेतौ । अतएव श्यन् राध्नोऽकर्मकादेवेत्युक्तेः । तदेकदेशे प्रश्नविषये कृष्णस्यान्वयस्तदाह तदर्थेति उभयार्थैकदेशेत्यर्थः । प्रत्याङ्भ्यामित्यस्य विषयमाह विप्रायेति । व्याख्यानात्प्रत्येकंनिमितत्वमितिभावः । प्रकृत्यर्थस्य तत्र प्रवर्तनायामन्वयः । विप्रसंप्रदानको गोकर्मकोऽर्थात् विप्रनिष्ठप्रवर्तनाजन्यो देवदत्तनिष्ठाभ्युपगम इति बोधः । तत्र विप्रस्य कर्तृ(प्रेप्सा)जनकत्वेन हेतुत्वे प्राप्ते इदं । तदेतदभिप्रेत्याह स्वार्थेति ।

अनुप्रतीत्यस्य विषयमाह होत्र इति । अनु प्रतीतिभिन्नं पदं लुप्तपंचम्यंतं । गृण इति श्नांतानुकरणात् षष्ठी । शंसनेति शंसितुरित्यादिः । होतृसंप्रदानकोऽर्थाद्धोतृनिष्ठशंसनविषयहर्षानुकूलो व्यापार ओथामोदैवेत्यादि शब्दप्रयोगरूप इतिबोधः । कर्मत्वापवादत्वमस्य तदाह धात्वर्थेति ।

परिक्रयणं इत्यस्य विषयमाह शतेनेति अत्र करणस्यैव पक्षे संप्रदानत्वेन भानमित्याह करणेति नन्वेवं कस्तद्व्यापारोऽत आह

कर्मकाहरणफलकं यानमिति बोधः। एतद्बोधोपपत्तिराकाङ्क्षावादान्ते प्रदर्शिता।

यत्तु फलेभ्य इत्यत्राहरणक्रिया चतुर्थ्यर्थः। कर्मत्वप्रयोजकत्वे पूर्वपरयोः संसर्गाविति तन्न। क्रियार्थोपपदस्य च कर्मणि स्थानिन इति सूत्रसत्त्वेनेदृशेऽर्थे साधुत्वे मानाभावात्।

यागाय याति। अत्र प्रातिपदिकार्थे प्रथमापवादश्चतुर्थी घञयं तुमुना समानार्थः। यागफलकं यानमिति बोधः।

न त्वां तृणाय तृणं वा मन्ये। अत्र कर्म द्वितीयाचतुर्थ्योरर्थः तृणपदं तृणसदृशपरम्। त्वत्कर्मकतृण-

---

शतेति।

क्रियार्थोपेत्यस्य विषयमाह फलेभ्य इति कर्मेति फलाश्रयरूपमित्यर्थः। दर्शितेति यथा वाक्यार्थे वाक्यैकदेशप्रयोगस्थले प्रविश पिंडीमित्यादौ तस्यैव पदस्य संपूर्णवाक्यार्थशक्तता तथास्य समुदायस्याहरणघटितोक्तार्थे शक्तिरेतच्छास्त्रबलात। स्थानिन इत्युक्तेस्तत्प्रयोगे नेति बोध्यं।

नैयायिकाद्युक्तिं खंडयति यत्त्विति। यत्तु फलकर्मकाहरणे फलपदस्य लक्षणा चतुर्थ्याश्च फलंमर्थयुक्ति तन्न गौरवात् अतआहाहरणेति तन्मात्रमित्यर्थः। यथाक्रमान्वयेनाह कर्मत्वेति कर्मणीत्युक्तिविरुद्धमित्याह क्रियार्थोपेति।

तुमर्थादित्यस्य विषयमाह। यागायेति बोधोपपत्तये आह घञयमिति भावे ये प्रत्यया वक्ष्यन्ते ते क्रियायामुपपदे भविष्यति स्युरित्यर्थकेन भाववचनाश्चेतिसूत्रेण विहित इत्यर्थः।

मन्यकर्मणीत्यस्य विषयमाह नत्वामिति अनादरे इति मन्यकर्मविशेषणं तद्द्योतकं यत्कर्मेत्यर्थस्तेन युष्मच्छब्दाच्चतुर्थी न तद्ध्वनयन्नाह तृणेति अनादरश्च नादराभावमात्रं अपितु नञोऽधर्मा-

सदृशकर्मकमदूवृत्तिज्ञानाभाव इति बोधः। त्वद्वि-शेष्यकतृणसदृशप्रकारकेति यावत्। एवंचात्यन्तापकर्षः फलति तत्रैव चेयं चतुर्थी साधुरिति भाष्यंस्पष्टम्।

ग्रामं ग्रामाय वा याति। अत्र द्वितीयाचतुर्थ्यौ कर्मैवार्थ इति सूत्रमतम्।

भाष्ये तु यातेरेवारम्भपर्यन्तमर्थेन गम्यमानं प्रारम्भं प्रति यात्याद्यर्थस्य कृत्रिमकर्मतया तेनाभिप्रेयमाणत्वाद्ग्रामस्य संप्रदानत्वम्। फलाश्रयत्वेऽपि तत्वस्याविवक्षा। एवंच ग्रामसंप्रदानकोत्तरदेशसंयोगानुकूलव्यापारविषयक आरम्भ इति बोधः। अतिप्रसङ्गस्त्वनभिधानाद्वारणीयः। ग्रामं यातीत्यादौ तदर्थाभावः कर्मत्वविवक्षा च।

---

दाविव प्रतिपक्षवाचित्वात्तिरस्कारः सच व्याख्यानादपकृष्टनिरूपितोपमेयत्वस्याभावरूप उपमेयेऽत्र गृह्यते नत्वपकृष्टसादृश्यरूपः तत्प्रतीतिश्च मन्यतेर्तत्समभिव्याहारे एव तृणतुल्यमपि न मन्ये इत्यर्थः। तदाह त्वत्कर्मकेति ज्ञानाभाव इति तस्याप्यभाव इत्यर्थः। तृणायमत्वा रघुनंदनोपीत्यादौ नञोऽध्याहारादि बोध्यं विशेष्यताप्रकारतोभयावच्छिन्नज्ञानमत्र मनेरर्थ इत्याह त्वद्विशेष्यकेति उक्ताशयादेवाहैवंचेति।

गत्यर्थकर्मणीत्यस्य विषयमाह ग्राममिति सूत्रप्रत्याख्यानप्रकारसिद्धांतमाह भाष्ये त्विति सिद्धांतितमिति शेषः। अध्याहारस्याभावादाह यातेरेवेति। प्राग्वदाहारंभेति। नारंभं प्रतीति न गम्यमानमारम्भमिति पाठान्तरं। तेन तद्रूपकर्मणा। संप्रेति कर्मणायमित्यनेन। नन्वेवमपि फलाश्रयत्वेन परत्वात्कर्मत्वमेव स्यादत आह फलाश्रयत्वेपीति तत्वस्य कर्मत्वस्य एवंच स एवात्र चतुर्थ्यर्थइत्याह एवंचेति तस्य तदर्थकत्वेन तदुपपादनेचेत्यर्थः। नन्वेवं कटं करोतीत्यादावतिप्रसंगोऽतआहातीति नन्वेवं कथंपाक्षिकस्य ग्रामं याती-

विप्रायादनै इत्यादौ तादर्थ्ये चतुर्थी तादर्थ्यमुपकार्योपकारकभावः संबन्धः।विप्राय दधीत्यादौ विप्रकर्तृकभोजनोपकारके विप्रोपकारकत्वारोपाद्विप्रोपकार्योपकारकं दधीतिबोधः।मुक्तये हरिं भजति।मुक्तिरूपोपकार्योपकारकं हरिकर्मकं भजनमितिबोधः। एवमध्ययनाय वसती त्यादिष्वपि।तादर्थ्यस्यापि संबन्धत्वेन विवक्षायां षष्ठ्येव यथा गुरोरिदं गुर्वर्थमिति स्पष्टं भाष्ये। तादर्थ्यस्य हेतुत्वानुगतत्वेऽपि कारणवाचकान्न तृतीया। कुण्डलाय हिरण्यमित्यादौ कार्यवाचकादुत्पद्यमान चतुर्थ्यैव कारणगतसंबन्धस्य बोधनात्। तस्मै इदं तदर्थम्। तच्छब्द उपकार्यवाची इदमर्थ उपकारकं तत्रोत्तरपदार्थस्य कारणरूपस्य ज्ञापनीयत्वेन प्राधान्यात्तच्छब्दवाच्ये गुणे सम्बन्ध उद्भूत इत्याहुः। सुखाय पुण्यं नरकाय पापमित्यादिस्वध्वेव। तुमर्थघञन्ते पाकाय यातीत्यादौ घञा ताद-

---

त्यादेः सिद्धिरतआह ग्राममिति। इत्यादौ तत्र तु तदर्थेति आरम्भपर्यंतत्यर्थ.। किन्तु संयोगानुकूलव्यापारार्थकत्वमेव तदाह कर्मत्वेति इतीतिशेषः। अथोपपदविभक्तिचतुर्थीमध्ये तादर्थ्ये इत्यस्य विषयमुक्तरीत्या यस्य नसिद्धिस्तादृशमादावाह विप्रायेति अत्रोपकारारोपादित्यर्थः। एवं बोधः प्रागपि। विशेषमाह तादर्थ्येति करणत्वस्यक्रियामात्रविषयत्वादाह हेतुत्वेति वाचकात् यथासम्भवमोदनादेः स्पष्टार्थमाह कुंडलायेति ननु विनिगमनाविरहाद्वैपरीत्यमेव कुतो नात आह तस्मा इति तत्र समासे तथाचोद्भूतत्वमेव तत्र विनिगमकमितिभावः।

यत्तु तदर्थेत्यत्र बहुव्रीहिरवधारणगर्भस्तत्रार्थशब्दार्थप्रयोजनस्य जन्यतयेच्छाविषयरूपत्वे दुःखाय पापमित्यापत्तिस्तदर्थेतिसूत्रवैय-

र्थस्योक्तत्वादेतदप्राप्त्या तुमर्थाच्च भाववचनादित्या-
रब्धम् ।

भक्ति ज्ञानाय कल्पते । कृपेरुत्पत्तिरत्रार्थः । प्रथमा-
पवादोऽत्र । क्लृपि संपद्यमाने चेत्यनेन विकारवाचका-
च्चतुर्थी विकारेच प्रकृतिरूपारोपः भक्तिरूपज्ञानकर्तृ-
कोत्पत्तिरिति बोधः । भक्तिरत्र निदिध्यासनरूपा । प्रकृ-
तिविकृत्योर्भेदविवक्षायां तु प्रकृतिविकृतिभावाप्रती-
तेर्जनिकर्तुरित्यपादानत्वेन भक्तिपदात्पञ्चमी, भक्ते-
र्ज्ञानंकल्पते इति । ज्ञानस्य कर्तृत्वेन कारकविभक्तेर्बलव-
त्त्वेन च ततः प्रथमेति कैयटे स्पष्टम् । भक्तिर्ज्ञाना-
त्मना परिणमत इत्यादावात्मशब्दस्तद्वृत्तिधर्मपरः
ज्ञानत्वविशिष्टरूपान्तरप्राप्तिर्भक्तिकर्तृकेत्यर्थः अत्र-
प्रकृतिविकृतिभावाप्रतीतेर्न चतुर्थी किन्तु प्रकृत्यादि-
त्वात्तृतीया ।

---

र्थे चेति नैयायिकास्तन्नार्थेन नित्यसमास इति विशेषवचनस-
त्वात् तद्‌ध्वनयन्नाह सुखायेत्यादि । तुमर्थेति विशेष्यम् ।

क्लृपीत्यस्य विषयमाह भक्तिरिति अनुशासनाबाधायाहात्रेति
नतु सर्वत्रेतिभावः । यत्वत्रदीक्षितादयः सम्बधोत्र चतुर्थ्यर्थः भक्ति-
कर्तृका ज्ञानसम्बन्धिनी उत्पत्तिरितिबोधः । प्रकृतिविकृत्योर्भेदाविव-
क्षायां विकृतिवाचकाच्चतुर्थी अभेदविवक्षायां तु कर्तृत्वात्प्रथमैवेति
तदसदिति सूचयन्कैयटोक्तमाह प्रथमेति अत्रउक्तलक्ष्ये संपत्तिरुत्प-
त्तिः कृपीत्यर्थग्रहणं सप्तम्यन्तं क्लृप्यर्थकधातुयोगे उत्पद्यमाने र्थेवर्तमा-
नाच्चतुर्थी ति वार्तिकार्थमभिप्रेत्याह विकारेति अन्यभक्तेस्तत्वासंभ-
वादाह निदीति ।

ननु तदपि ततोऽनेन कुतो न चतुर्थी अत आह ज्ञानस्येति न-
न्वस्याः प्रथमापवादत्वमुक्तमेवातआह कारकेति । कैयटे इति तेन
हि क्लृप्तस्य लक्ष्यं विकृतेः प्रकृतिरूपारोपात्सामानाधिकरण्यं वदताऽ

वाताय कपिला विद्युत् । उत्पातेन ज्ञापितेच्येत्यनेन चतुर्थी । प्राणिनां शुभाशुभसूचको भूतविकार उत्पातः । ज्ञाप्यज्ञापकभावश्चतुर्थ्यर्थः । वातरूपज्ञाप्यज्ञापिका कपिला विद्युदिति बोधः

विप्राय हितम् । इष्टसाधनं हितपदार्थः संबन्धश्चतुर्थ्यर्थः । विप्रसबन्धि हितमिति बोधः । एवं सुखयोगेऽपि विप्राय सुखमित्यादौ ।

हरयेनमः । अत्र 'नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्चे' ति चतुर्थी । अपकृष्टत्वज्ञानबोधनानुकूलो व्यापारः स्वरादिपठितनमः पदार्थस्तत्रापकर्षः प्रयोक्तृपुरुषविशेषनिष्ठो नमस्कार्यावधिक एव प्रतीयते ।

---

भेदविवक्षायामेव चतुर्थ्युक्तरीत्याऽभ्युपगता एवंच भक्तिर्ज्ञानमित्यसाध्वेवेतिभावः । नन्वेवमतिप्रसङ्गोऽतआह भक्तिरितिइत्यादौ । धर्मपरः नतुस्वरूपपरः अतएवाहात्रेति करणत्वाद्यभावादाह प्रकृत्येति ।

उत्पातेनेत्यस्य विषयमाह वातायेति अनतिप्रसंगायाह भूतेति पृथिव्यादि पञ्चेत्यर्थः हितयोगेचेत्यस्य विषयमाह विप्रायेति अग्रेविप्रायेति पूर्वान्वयि ।

नमः स्वस्तीत्यस्य विषयमाह हरये इति । निपातस्थले विशेषस्य वक्ष्यमाणत्वादाह स्वरादीति इयमेव नतिः । तत्रविशिष्टधात्वर्थमध्ये । कप्रतीतिपाठः । सर्वत्रमानमाह शब्देति । अत्रैवमानमाहान्योघ्नारीति मात्रपदेनान्यसमभिव्याहारनिरासः । क्वचित्क्रमाहे दृशेति । अवधित्वमवधिमत्वं वा चतुर्थ्यर्थ इतिनैयायिकाद्युक्तेरसाङ्गत्यायाह चतुरिति उद्देश्यकः । नतुतदवधिकः उक्तेति स्वनिष्ठापकृष्टत्वज्ञानबोधनानुकूलः प्रयोक्तृनिष्ठस्तादृशव्यापार इत्यर्थः । ननूद्देश्यत्वं नेच्छा विषयत्वरूपं प्राग् दूषितत्वात् । किन्त्वतिरिक्तं तदपि संबद्धे एव नासंबद्धे इति कथमत्रत त्वमत आहोद्देश्यत्वमिति स्वं त्यागः । प्राग्वदाह शब्देत्यादि । अंत्ये व्यभिचार मुद्धरति ऋत्विग्भिरिति चा ह्यर्थे ।

व्यापारश्च प्रयोक्तृनिष्ठः प्रतीयते शब्दशक्तिस्वभावात् । अन्योच्चारितेन नमः पदमात्रेणान्यदीयनत्यबोधनात् । स च व्यापारः करशिरःसंयोगादिरीदृशशब्दप्रयोगश्च । चतुर्थ्यर्थ उद्देश्यत्वम् । एवं च हर्युद्देश्यक उक्तव्यापार इति बोधः ।

एषोऽर्घ्यः शिवाय नमः इत्यादौ त्यागो नमः शब्दार्थः । त्यागश्च स्वस्वत्वनिवृत्त्यनुकूलो व्यापारः, उद्देश्यत्वं चतुर्थ्यर्थः । शिवोद्देश्यकत्यागविषयोऽर्घ्य इति बोधः । उद्देश्यत्वं विषयताविशेषरूपम् । त्यागश्च वेदबोधितोद्देश्यकत्वस्वप्रयोगकर्तृकर्तृकत्वोपरक्त एव प्रतीयते । शब्दशक्तिस्वभावात् । अन्योच्चारितनमःशब्देनान्यदीयद्रव्यत्यागाप्रतीतेः । ऋत्विग्भिश्च यजमानीयत्वसद्द्रव्ये स्वीयत्वमारोप्यैव नमः शब्दः प्रयुज्यते । वेदबोधितेत्युक्तेर्न नीचोद्देश्यकं त्यागं नमः शब्दप्रयोगः । अहं ममेत्यभिमानरहितानां शिवादीनां द्रव्ये स्वत्वाभावेऽपि शिवस्वं न प्रतिगृह्णीयादित्यादेः शिवोद्देशेन त्यक्तमित्यर्थो बोध्यः । संप्रदानचतुर्थी

---

यत्तु शिवस्वत्वोत्पत्ति स्वस्वत्वनिवृत्त्युभयानुकूलव्यापारविशेषस्त्यागः शिवस्वं न प्रतिगृह्णीयादितिस्मृतिप्रामाण्येन द्रव्ये देवताया अपि स्वत्वस्वीकारादिति केचित् तदसदिति ध्वनयन्नाहाहमिति अत्र एषोऽर्घ्यः शिवायेत्यत्र । उभयत्र प्राग्वद्विशेषमाहोद्देश्यत्वेति षष्ठ्यपि षष्ठ्येव । न्यायादिति अयं वाचनिक एव न तु अन्तरंगप्रधानन्यायमूलकः भाष्यादिविरोधात् उत्कृष्टनिष्ठो यः स्वनिष्ठापकृष्टत्वबोधस्तदनुकूलव्यापाररूपनमस्कारफलस्य ताद्दशबोधस्याश्रयतया देवानां कर्मत्वं स्वशब्देन प्रयोक्ता नमः शब्दस्य साक्षात्प्रभृतिपूर्वादिषु वा पाठेन गतित्वात्सत्वं ।

४।

त्वत्र न, नमः शब्दार्थस्य क्रियात्वाभावात् । उद्देश्य-त्वसंबन्धेन विवक्षायां षष्ठ्यपि ।

नमस्करोति देवानित्यत्रोपपदविभक्तेः कारकविभक्ति र्बलीयसीति न्यायात् कर्मणिद्वितीयेति शब्देन्दुशेखरे स्पष्टम् । अत्रायं नमः शब्दो निपातो द्योतकः उक्तनमः पदार्थोऽत्र कृधातोरेवार्थः स्वविषयावधित्वसमानाधिकरणसमवायरूपेण फलताबच्छेदकसंबन्धेन स्वनिष्ठापकृष्टत्वज्ञानबोधरूपफलाश्रयत्वाद्देवानां कर्मत्वं नतु तटस्थस्य प्रेक्षितुरिति बोध्यम् । स्वविषयेत्यत्र स्वशब्देनापकृष्टत्व ज्ञानबोधरूपं फलं नमः शब्दद्योत्यार्थान्वयमात्रेण चात्र नमः स्वस्तीत्यस्यापि प्राप्तिः ।

यदा त्वत्रापि नमः शब्दस्य वाचकत्वं तदा चतुर्थ्येव । तेन नमस्कुर्मो नृसिंहायेति सिद्धम् । नमः स्वस्तीति सूत्रे चोभयोरपि नमः शब्दयोर्ग्रहणमि

---

एकस्या एवोपपदविभक्तित्वे कारकविभक्तित्वे चायं न्याय इति तु न युक्तं नमस्यति देवानित्यत्रैतत्परिभाषोपन्यासपर भाष्यविरोधात् सहयुक्ते इत्यादिसूत्रस्थभाष्यविरोधाच्च तदाह शब्देन्दिति । ननुहरये नम इत्याद्यनुरोधेन नमः, शब्दस्य वाचकत्वान्नमः शब्दार्थबोधाश्रयत्वेपि धात्वर्थफलाश्रयत्वाभावात्कथं कर्मत्वमत आहात्रेति नमस्करोतीत्यत्रेत्यर्थः । उक्तसूत्रद्वयान्यतरसूत्रेणाह निपात इति तत्र तु स्वरादिपठितो नैवमत्रात एव सत्वसिद्धिर्नमस्पुरसोरित्यनेन ।नन्वेवमपि देवानामुत्करीत्याकर्मत्वे प्रेक्षितुस्तटस्थादेरपि कर्मत्वापति रत आह स्वविषयेति ।

नन्वेवमपि नमः शब्दार्थान्वयाभावेनोपपदविभक्तेः कथंप्राप्तिरतआह नमः शब्देति । अत्रनमस्करोतीत्यत्र । एवमग्रेपि । विशेषं

ति दिक् ।

प्रजाभ्यः स्वस्तीत्यादौ स्वस्तिशब्दो मङ्गलार्थः । सम्बन्धश्चतुर्थ्यर्थः । प्रजासम्बन्धिमङ्गलमित्यर्थः । मङ्गलाशंसास्थले 'स्वस्त्यस्तु गोभ्य' इत्यादौ स्वस्तिशब्दार्थ एवान्वयेन चतुर्थ्येव । गोसंबन्धिमङ्गलकर्तृकमाशंसाविषयो भवनमिति बोधः ।

यत्त्वाशीः स्वस्त्यर्थः साच परहितेच्छान्वयी । सबन्धश्चतुर्थ्यर्थ इति तन्न । भूयादित्याशीर्लिङादेः प्रयोगानापत्तेः । प्रत्यभिवाद इति सूत्रस्थभाष्यात् शूद्रे आशिषोऽभावेन स्वस्ति वृषलायेत्यादौ चतुर्थ्यनापत्तेश्च । मङ्गलाऽर्थो हि तत्र स्वस्तिशब्दः मङ्गलाङ्गीकारार्थत्वस्यैव प्रामाणिकैरुक्तेश्चेतिदिक् ।

---

भाष्यसिद्धान्तेनाह यदात्विति उक्तरीत्या कर्मत्वाभावेन द्वितीयाया अप्राप्तेराह तदेति । ननुस्वरादि पठितस्यैव तत्र ग्रहणेन कृञ्जुतेः कथमिदमत आह नम इति विनिगमनाविरहात् तंत्रांगीकारात् । यदातु कर्मणः सम्बन्धत्वेन विवक्षा एवं हरये नम इत्यत्रापि सम्बन्धत्वेन विवक्षा, नोद्देश्यत्वेन तदोभयत्र षष्ठ्येव सूत्रे तदनुरोधेन तस्यैव ग्रहणं न निपातस्य तंत्रांगीकारे मानाभावात् ।

नृसिंहमनुकूलयितुमित्यर्थे फलेभ्यो यातीतिवत्तत्र चतुर्थी एवं चात्रवाचकत्वे न मानं एवं सति नमः स्वस्तीत्यनेन नसिद्धिरुपपदविभक्तेरिति न्यायेन द्वितीयापत्तेः । एतेनात्र कृञाव्यापार बाधः स्वापकर्षावधित्वप्रकारकबोधविषयतामात्रं निपातार्थः । अत्र स्वसमभिव्याहृतः कर्त्ता तथाच तादृशबोधविषयताप्रयोजकव्यापारानुकूलकृतिमात्रमिति समुदायाधीनो बोधः । तादृशविषयताश्रयतया कर्मत्वमितिनैयायिकाद्युक्तमपास्तं किञ्च वाचकत्वे धातोरानर्थक्यापत्तिस्तदाहेतिदिगिति । मंगलाशंसेतितथाचात्राकुशलार्थत्वाच्च चतुर्थीचाशिषीत्यस्य प्राप्तिरितिभावः ।

स्वाहास्वधावषड्शब्दास्त्यागार्थकनमः शब्देन व्याख्याताः । दैत्येभ्यो हरिरलम् प्रभुः समर्थः । अलमाद्यर्थः सामर्थ्यवान् मारणादिसम्बन्धित्वरूपः सम्बन्धश्चतुर्थ्यर्थः । दैत्यमारणादिसम्बन्धिसामर्थ्यवानिति बोधः ।

इति चतुर्थी ।

पञ्चम्या अपादानत्वशक्तिमानर्थः । अपादाने पञ्चमीति सूत्रात् । सा शक्तिश्च प्रकृतधात्वपात्तविभाग-

---

नैयायिकाद्युक्तिं खण्डयति यत्विति हितेच्छा तद्विषयेच्छा भवतीयहितविषयिणी मदीयेच्छेति बोधः । ननु नमस्कारस्यान्यत्र दृष्टत्वात् भवत्यादिनाऽपि स्यादत आह प्रत्यनीति । ननु तत्र नैव चतुर्थीत्यत आह सङ्केति । हि यतः । ननु चतुर्थी चाशिषीत्यस्य कुशलार्थेऽभावेऽपि सुखार्थे वार्तिकेन चतुर्थ्येत आहमङ्गेति । एतत्तु मयार्थस्यम्येवेत्यर्थः । एतेन कुशलार्थत्वमपितेनेति चः पुनर्विधानार्थ इत्यादिकौमुदीग्रन्थः सकलतद्व्याख्यातृग्रन्थश्च परास्तः । शब्देन्दुशेखरस्तु तद्व्याख्यानाय प्रवृत्तो इति न तद्विरोधः ।

सूत्रे स्वाहचर्याद्व्ययस्यैव स्वस्तिशब्दस्य ग्रहणं तस्मान्नव्ययमपि ।

प्रतिगृह्णामि ते धेनुं कुटुम्बार्थे द्विजोत्तमः ।
स्वस्तिर्भवतु मे नित्यं सुखं चानुत्तमं तथा ॥

इति महाभिष्योक्तप्रयोगात् अत एव तत्रषष्ठी तत्रांगीकारार्थः प्रतिग्रहे गृहीतः अतएव स्वस्तिदक्षिणायां तु बहुत्वं स्वस्त्यस्त्विति बौधायनः स्वस्ति भवन्तो ब्रुवन्त्वित्यस्योत्तरं तौ स्वस्तीत्यपि तत्रैव स्पष्टमित्यन्यत्र विस्तरः स्तदर्शितं दिगिति ।

अर्थद्वयस्योक्तत्वादाह स्यादिति व्याख्यानादलमित्यर्थग्रहणमित्याह प्रभुरिति तेन शक्त इत्यादेरपि ग्रहणं ॥

इति चतुर्थी ॥

सिद्धान्तमतेनाह पंचम्या इति अपायपदार्थमाह प्रकृतेत्यादिव्यापारान्तेन । अस्याश्च प्रकृतधात्वर्थविभागाश्रयत्वसामानाधिकरण्य-

जनकव्यापारानाश्रयत्वे सति प्रकृतधात्वर्थविभागाश्रयो यस्तद्वृत्तिः। ध्रुवमपायेऽपादानमिति सूत्रात्। कर्तृवारणाय सत्यन्तम्। अयमेवच सूत्रे ध्रुवपदार्थः। विभागश्च न वास्तवसम्बन्धपूर्वक एव किन्तु बुद्धिकल्पितसंबन्धपूर्वकोऽपि। अतएव जुगुप्सापूर्वकनिवृत्तिलक्षकतामाश्रित्य जुगुप्साविरामेत्यादिप्रत्याख्यानं भाष्योक्तं संगच्छते। सूत्रेऽधोदेशसंयोगानुकूलव्यापाररूपंपातमात्रंतु नापायः वृक्षमजहत्यपि पर्णे भूमिं स्पृशति सति वृक्षात्पर्णं पततीत्यप्रयोगात्।

गतिं विना त्ववधिना नापाय इति कथ्यते।

इति हर्युक्तेश्च। अवध्यन्वययोग्यविभागं विनेति तदर्थः। तत्र मानमुक्तं वृक्षस्य पर्णं पततीत्येवं भाष्ये निदर्शितमिति। तत्र हि वृक्षः पर्णविशेषणमिति अपायस्याविवक्षणात् षष्ठीभाष्ये उक्ता इति हेलाराजः। धावतोऽश्वात्पतति कुड्यात्पततोऽश्वात्पततीत्यादौ पततीत्युपात्तक्रियानाश्रयत्वेन तां प्रत्यश्वस्यापादानत्वमक्षतम्। तदुक्तं हरिणा।

---

मित्यपादानसमभिव्याहारे विभागोपि धात्वर्थ इति सूचयन्नाह प्रकृतधात्वर्थेति।

यत्तु सत्यन्तं परया कर्तृसंज्ञया तदाश्रयपर्णादावपादानसंज्ञाबाधमूलकं वस्तुत स्तन्निवेशे फलाभावस्त्येमेवेति भूषणकृदादयस्तन्नास्या स्तदपवादत्वापत्तेः। अपाये विभागानुकूलव्यापारविषये यत्कारकं तद्रूपक्रियाश्रयत्वेन तज्जनकं तदपादानमित्यर्थसंभवात् कर्तृसंज्ञा तु पत्यादियोगे चरितार्था। तदेतद्ध्वनयन्नाह कर्तृवेति पर्णादीत्यर्थः। ननु ध्रुवपदेनैव तद्वारणमिति तदर्थमेवात आहायमेवेति प्रकृतधातूपात्तविभागजनकव्यापारानाश्रय एवेत्यर्थः।

अपाये यदुदासीनं चलं वा यदि वा ऽचलम् ।
ध्रुवमेवातदावेशात् । इति ।

परेतु एवं सति धावतः पततीत्यादौ अपादानत्वं कथमित्याशङ्क्य ध्रौव्यस्याविवक्षितत्वात्सतोऽप्यविवक्षा भवतीति समाधानपरभाष्यासंगतिः । पतनार्थव्यापाराश्रयत्वरूपस्य त्वदुक्तध्रुवत्वस्यात्रासत्त्वेन सतो ध्रौव्यस्याविवक्षेत्यस्यासङ्गतेः । तस्मादवधिभावोपगमातिरिक्तावधित्वोपयोगिव्यापारानाश्रयत्वे सति इतिवक्तव्य मयमेव ध्रुवपदार्थः । अपाये गतिविशेषे सत्युक्तध्रुवत्ववदपादानमिति सूत्रार्थः । प्रासादेरवधित्वोपयोगित्वाभिमानेन शङ्का । वृक्षात्पर्णमित्यादौ तदभावान्न तस्य तदुपयोगिता प्रकृते विद्यमानस्यापि तस्य तत्त्वेनाविवक्षितत्वान्न तदुपयोगित्वं तस्येत्युत्तरमित्याहुः ।

---

परमतं खंडयति सूत्रे इति । स्पृशतिसति इतिवृक्षस्यपर्णं पततीत्येव हि तत्रोक्तार्थेन प्रयोग इति भावः । तत्र नियामकमाह गतिरिति यथा श्रुतासंगतेराहावध्यन्वयेति तत्र स्वार्थोक्तौ उक्तं तनैवोत्तरार्धेन तस्य तात्पर्यमाह तत्रहीति प्रकृत त्वनिवेशफलमाह धावत इति अत्रमानमाह तदुक्तामिति अपाये विश्लेषजनकक्रियायां उदासीनमनाश्रयः अतदावेशात् तक्रियानाश्रयत्वात् स्पष्टं चेदं कैयटादौ ।

परेतु भाष्यानुसारिणस्तु । कथमिति ध्रुवत्वाभावात् तत्वात् सिद्धं इतिशेषः । तत्र हेतुमाह सतोपीति यत इत्यादिः । अतिरिक्तत्वं व्यापारविशेषणं तदाश्रयतापेक्षासूचनाय । एवं सत्यानर्थक्यं परिहरति अयमेवेति । एवेनोक्तव्यवच्छेदः । एवंच ध्रुवमिति कारकांतराणामिवापादानस्यावधिभावोपगमातिरिक्तव्यापाराभावबोध-

नन्वाद्यपक्षे परस्परस्मान्मेषावपसरत इत्यत्र दोष इति वाच्यम् । तत्र मेषपदोपात्तयोरेव क्रियाश्रयत्वं परस्परपदोपात्तयोर्विभागाश्रयत्वमेवेत्यदोषात् । अत एव देवदत्तयज्ञदत्तावन्योन्यमाश्लिष्यतइत्यादौ तयोः कर्मत्वासिद्धिः । अन्यथा परत्वात्कर्तृत्वमेव स्यात् । आत्मानमात्मना हन्तीत्यादावन्तः करणाद्युपाधिभेदवत् प्रकृते शब्दरूपोपाधिभेदेन भेदः, शब्दालिङ्गितार्थस्यैव भानात् । स्पष्टाचेयं रीतिः कर्मवत्कर्मणेति सूत्रे भाष्ये । हरिणा तु ।

उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मजे ।
विभागे प्रविभक्ते तु क्रिये तत्र व्यवस्थिते ॥ इति ।

तत्तद्व्यक्तित्वेन विभागस्य बुध्या प्रविभागे तत्तद्विभागानुकूलक्रियावत्त्वस्यापरत्राभावादुभयोरपि ध्रुवत्वमित्यर्थः । तदेवोक्तम् ।

मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् ।
मेषयोः स्वक्रियापेक्षं कर्तृत्वंच पृथक् पृथक् ॥ इति ।

---

धनार्थमिति तात्पर्यं । अपाये इति तु कारके इत्यस्य क्रियाजनकत्वेन विवक्षित इत्यर्थे तात्पर्यग्राहकं बोध्यं भ्रवमपाये इति तु वृक्षस्य पर्णं पततीत्यादौ वस्तुतस्तस्यैव पर्णपातजनकत्वात्प्राप्तापादानत्ववारणाय । तदेतदभिप्रेत्याहापाये इति । उक्तध्रुवत्वेति । अवधिभावोपगमाश्रयत्वे सति तदतिरिक्तस्यावधित्वोपयोगिव्यापारस्यानाश्रयत्ववदित्यर्थः ।

नन्वत्र पक्षे कथं भाष्यसंगतिरतआह त्रासादेरिति सिद्धांताशयमाह प्रकृते इति त्रस्तादश्वादित्यादावित्यर्थः । अत्र पक्षे विवक्षयैव सिद्धेराहाद्यपक्षे इति । अत एव शब्दकृतभेदेन भेदादेव । अन्यथा भेदानंगीकारे । अत्र मानमाहात्मानमिति । अत्र तदसंभवादाहान्त-

अत्र वदन्ति । वस्तुतस्तन्निष्ठयोर्भेदेऽपि सुधातुना निवृत्तभेदस्यैवो पादानादुभयोरपि तत्क्रियाश्रयत्वेन परत्वात्कर्तृत्वापत्तेः । अतएवैकशेषसूत्र भाष्ये उक्तं नवै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति क्रियाया एकत्वादिति । अपसरणं विभागपूर्वकं पृष्ठतो गमनमित्यन्यत्र विस्तरः ।

धात्वर्थे प्रकृतत्वं च नशब्दोपात्तत्वं किन्तु विवक्षितत्वमात्रम् । अतएव धनुषा विध्यतीत्यत्रापादानसंज्ञां बाधित्वा करणसंज्ञेति भाष्यं संगच्छते । शरनिःसरणं प्रत्यवधिभावोपगमेनैव व्यधने करणताभ्युपगमेनोभयोरपि निमित्तभावेन स्थित्या युगपदुभयविवक्षायां विप्रतिषेधोपपत्तेः । एवमन्यत्रापिबोध्यम् । कांस्यपात्र्यामन्नं भुङ्क्ते इत्यस्य तत्रस्थितमन्नं तत उद्धृत्य भुङ्क्ते इत्यर्थ इति तत्राप्युभयविवक्षा । अपादानत्वश-

---

क्षणे मानाभाव इति भावः । स्पष्टेति तत्रह्युपाधिभेदादेव भेद उक्त इति प्राक् प्रतिपादितं । एवंच चैत्र आत्मानं हंतीत्यादौ शब्दभेदादेव कर्मतोपपत्तिरिति बोध्यम् ।

खंडयितुमनुवदति हरिणा त्विति उक्तमितिशेषः । अस्यार्थमाह तत्तदिति । निष्ठयो र्व्यापारयोः । स्यैव अपायस्य। सूत्रे सरूप इत्यत्र । इतिःखंडन समाप्तौ । उभयोपपत्तये आह एतेन तादृशे विषयेमेषः स्वस्मादपसरतीति स्यादित्यपास्तं स्वपदवाच्ये तदविवक्षणात् प्रयोगानुसारित्वाद्विवक्षायाः एतेनसिद्धान्ते स्वत्रापि दोष उद्धृतः । मेषपदोपात्ते तदविवक्षणादेतेन तथाभूषणादुक्तमपास्तं तदाहान्यत्रेति गुरुमंजूषादावित्यर्थः ।

विशेषमाह धात्वर्थे इति व्यधेर्निः सरणजन्यवेधार्थ त्वादाह शरेति उभयोः निः सरणव्यधनयोः । एवमिति करणस्थले इति भावः ।

क्रयाश्रय एवावधिरित्युच्यते ।

यत्तु विभागः पञ्चम्यर्थः । आश्रयत्वं प्रकृतिप्रत्ययार्थयोः संसर्गः । विभागस्य च जन्यजनकभावेन धात्वर्थेऽन्वयः । यद्वा विभाग आश्रयश्च पंचम्यर्थ इति तन्न । वृक्षापादानकेत्येवं बोधानुभवात् । वृक्षाद्विभजत इत्यादौ विभागस्य बोधावृत्त्यापत्तेश्च । तत्रापादानस्यैव पञ्चम्यर्थत्वे किमर्धजरतीयेन । आद्ये प्रकृत्यर्थविभक्त्यर्थयोस्तत्कल्पस्याभेदान्वयस्य त्यागापत्तिश्च ।

वृक्षात्पर्णं पतति।पतेर्विभागजन्यः संयोगोऽर्थः।तत्र विभागे पञ्चम्यर्थो विशेषणम् । प्रकृत्यर्थश्च प्रत्ययार्थे वृक्षरूपापादानकविभागेत्यादिरीत्या बोधः । वस्तुतोऽपादानवृक्षीयपर्णकर्तृकं पतनमिति बोधः । वृक्षाद्भूमिं पर्णं पतति । अत्र विभागजन्य संयोगानुकूलो व्यापारो धात्वर्थः । विभागश्च फलतावच्छेदकः

---

एवं करणस्थले उक्त्वाऽधिकरणस्थले आह कांस्येति नन्वेवमाश्रयोवधिरिति विरुद्धमतआहापेति ।

नैयायिकभूषणकारादिमतं खंडयति यत्त्विति । नचैवं प्रकृत्यर्थविभक्त्यर्थयोरभेदान्वयसिद्धांतहानिरतआह यद्वेति । तत्र विप्रतिपन्नं प्रत्याह वृक्षादिति । तदुक्तमत्राह तत्रेति । एवं सामान्येनोक्त्वोदाहरणान्यर्थभेदसत्वादाहवृक्षात्पर्णमित्यादि तत्रतयोर्मध्ये नित्यसाकांक्षत्वादाह विभागे इति ।

एवं प्राचां मतेनोक्त्वा सिद्धांतमाह वस्तुत इति पूर्वत्रसंयोगमात्रस्य सत्वादाहानुकूलेति तद्यथक रणेत्यर्थः व्यापारव्यधिकरणविभागस्यैव धात्वर्थत्वेन कर्मसंज्ञयाऽपादानत्वस्य बाधस्तदाह कर्मत्वमेवेति वृक्षात्फलमिति अत्र वाय्वादिः कर्त्ता अत्र फलतावच्छेदकसम्बन्धः प्रतियोगिता । नन्वेवं वृक्षात्स्पंदत इत्यपि स्यादतआह स्पंदेरिति ।

वृक्षं त्यजति इत्यादौ विभागानुकूलो व्यापारोऽर्थं इति कर्मत्वमेव। वृक्षात्फलं त्यजतीत्यादौ विभागजन्यसंयोगानुकूलव्यापारोऽर्थः स्पन्देर्नविभागोऽर्थ इति वृक्षेस्पन्दते इत्येव।

चलतेस्त्वासनाच्चलित इति प्रयोगादस्त्येव विभागार्थकत्वम्। वृक्षाद्विभजते इत्यादौ विभागजन्यपूर्वदेशसंयोगनाशोऽर्थः। बलाहकाद्विद्योतते विद्युदित्यत्र विद्योततेर्विभागजन्यसंयोगानुकूलक्रियारूपनिःसरणपूर्वकविद्योतने वृत्तिः। बलाहकापादानक विभागजन्यसंयोगानुकूलक्रियोत्तरकालिकं विद्युत्कर्तृकं विद्योतनमिति बोधः।

इदमुपात्तविषयमित्युच्यते। बलाहको नाम धूमज्योतिः सलिलमरुतां संघातः। ततोऽवयवभूतज्योतिषो भेदविवक्षया विभागविवक्षणात्सोऽवधिः। यदा तु तेजस आधारत्वेन स विवक्ष्यते तदा बलाहके विद्योतते इति सप्तमी। यदा त्वभेदेन विवक्षा। तेजोमयत्वात् प्रकाशनसामर्थ्यं उदकधूमादेस्तत्प्रकाशप्रतिबन्धकत्वाविवक्षणात् तदा बलाहको विद्योतते इति। यदातु प्रत्यक्षासिद्धमागमनं मनसि निधाय

---

निर्दिष्टविषयं किंचिदुपात्तविषयं तथा।

मेघदूताद्युक्तिमभि प्रेत्योक्तमुपपादयति बलेति ततः समुदायात् सः समुदायः। इदमपि भेदाविवक्षायामेवेति सूचयन्नाह यदात्विति संघसंघितेजसोरित्यर्थः। अतएवाह तेजेति। नन्वेवमपि तत्र तत्प्रतिबन्धकमप्यस्तीत्यत आहोदकेति अभ्यर्हितत्वात्पूर्वनिपातः। यदा तु यत्र तु। निधायेत्यस्य प्रश्नेऽन्वयः। अतएव तथैवोत्तरमाह पाटवीति

कुतो भवानिति प्रश्ने पाटलिपुत्रादिति उत्तरयति त-त्राकाङ्क्षावादोक्तरीत्या वाक्यैकदेशन्यायेन बोधः। एतदपेक्षितक्रियमित्युच्यते।

वृक्षात्पततीति तु निर्दिष्टविषयम्। घटाद्भिन्न इ-त्यादावप्यनेनैवापादानत्वं सूत्रेऽपायशब्देन भेदस्यापि ग्रहणं। पञ्चमी विभक्ते इत्यत्र विभक्तशब्देनैव तन्मूलकसम्बन्धविवक्षायां घटीयो भेद इत्यपि। भिदिर् विदारणे इत्यत्र भेदज्ञानविषयत्वमपि वि-दारणम्। एकत्वेन गृहीतस्य तथाबोधे बुद्धिविदार-णस्य तत्रापि सत्वादित्यन्यत्र विस्तरः।

अधर्माज्जुगुप्सति। तत्रानिष्टसाधनताज्ञानरूपा

---

रीतिमेवाह वाक्यैकेति। एतदपेक्षितेति स्पष्टोऽर्थः। एतेनात्रान्य-थाभूषणाद्युक्तमपास्तं एतदेवाभिप्रेत्याह्दुर्गम्यमानापि क्रिया कारकवि-भक्तौ प्रयोजिकेति।

निर्दिष्टेति यत्र साक्षाद्धातुना गतिर्निर्दिश्यते तन्निर्दिष्टविषयमि-त्यर्थः। अन्यारादित्यत्रार्थग्रहणस्य भाष्यादावुक्तत्वात्तत्रत्यसकलग्रं-थासांगत्यायाह घटादिति। अपिः पूर्वसमुच्चये। अनेनैव ध्रुवमपाये इत्य-नेनैव। अपि ना प्रोक्तगतिविशेषसमुच्चयः। अत्र व्याख्यानमेव बीजमि-ति सूचयन्दृष्टांत माह पंचमीति। विभक्तेति विभागार्थकेत्यादि। तन्मूलकेतिभेदमूलकेत्यर्थः। ननु तत्राविदारणात्कथं प्रयोगावत-आहभिदिरिति अपिना प्रसिद्धं। तस्य तत्वे युक्तिमाहैकत्वेनेति। अत-एव घटाद्भेद इति सिद्धं तद्योगेप्यपादानत्वात्। अन्यशब्दार्थस्याक्रि-यात्वात्तद्योगे नास्य प्रवृत्तिः। अतएव घटः पटो नेत्यादौ न पंचमी नञो भेदवदर्थकत्वेपि तस्याक्रियात्वात् घटादेक इत्यादित्वसाधु। अतएवेतरग्रहणं तत्र चरितार्थं तदाहेत्यन्यत्रेति शेखरादावित्यर्थः।

वार्त्तिकविषयमाहाधर्मादिति अधर्मविषयकानिष्टसाधनताज्ञान-

निन्दा जुगुप्सतेरर्थः। विषयता पञ्चम्यर्थः। जुगुप्साविरामप्रमादार्थानामुपसंख्यानमिति वार्तिकात्। अनिष्टसाधनताज्ञानपूर्वकं ततो निवर्तते इत्यर्थ इति भाष्यकृन्मतम्। तेन ध्रुवमपाये इत्येवापादानमिति वार्तिकप्रत्याख्यानात्। धर्माद्विरमति। प्रागभावसाधारणकृत्यभावानुकूलो व्यापारो विरमतेरर्थः। योगक्षेमसाधारणी चात्रानुकूलता स च व्यापारो धर्मविषयोऽपेक्षाविशेष एव। तदुक्तं भाष्ये य एष मनुष्यो नास्तिकबुद्धिर्भवति स पश्यति नेदं किञ्चिद्धर्मो नाम नैनं करिष्यामीति स बुद्ध्या संप्राप्य ततो निवर्तते इति तेन हि कदापि धर्मानाचरणेऽपि तथा प्रयोग इति लभ्यते।

एतेन जीवनकालावच्छिन्नः कृत्यसमानाधिकरणकृतिध्वंसो विरमतेरर्थः। कृतिश्च सर्वत्रैकविषयैव। जीवनमपि कर्तृसम्बन्ध्येव सामानाधिकरण्यं च समभिव्याहृतकर्तृपदबोध्यशरीरजातीयशरीरघटितं। चैत्रादिपदैः शरीरविशिष्टात्मबोधनात्। साजात्यं च चैत्रादिपदोपस्थापितचैत्रत्वजात्यैव तेन भाविदेहा-

---

मिति तन्मते बोध्यः। अतएव सिद्धांतमाहानिष्टेति तावतो धात्वर्थत्वात् तेन भाष्यकृतां प्रागभेति अत्रेत्यादि अतएवाह योगेति अवश्यं निवर्तनीयेत्यर्थः। वस्तुतस्तत्वाभावादाह बुद्धिरिति। तेनहि भाष्येण हि। अपिना तत्रापि तथापि पंचम्यंतघटितः।

नैयायिकादिमतं खंडयति एतेनेति उक्तभाष्यविरोधेनेत्यर्थः। यैवेति व्युत्पत्तिवशाद्भासत इत्यर्थः। तत एवाहजीवनमपीति विशिष्टेति तैर्विशिष्टात्मबोधनेन शरीरस्यापि बोधनादित्यर्थः। प्रत्यासत्तेराह पदेति। उभयत्रहेतुमाहतत्कर्तेति। एवंच तद्विशेषणं सफलं

न्तरावच्छेदेन धर्मकरणेऽपि वर्तमानशरीरावच्छिन्नचरमकृतिध्वंसमादाय विरमतीति प्रयोगसिद्धिः । युवशरीरावच्छेदेन धर्मं कुर्वत्यपि बालशरीरावच्छिन्नकृतिध्वंसमादाय न विरमतीति प्रयोगः । नापि पूर्वपरकालयोर्धर्मकरणे मध्ये मुहूर्तमात्रमकरणे विरमतीति प्रयोगस्तत्कृतिध्वंसस्य कृतिसमानाधिकरणत्वात् पञ्चम्यर्थो विषयतेति परास्तम् ।

धर्माद्विरमेऽपि पुनः प्रवृत्त इत्यादेरनापत्तिश्च । धर्मात्प्रमाद्यति । अनिष्टसाधने वस्तुनि समानदेशस्थसमानकालस्थोभयसम्बन्धेनाधिकारविशिष्टेष्टसाधनत्वाभावज्ञानमनिष्टसाधनत्वज्ञानं वा धात्वर्थः । पञ्चम्यर्थो विषयत्वं ज्ञानान्वयि जुगुप्सादीनां बहिष्कारकत्वेन विवक्षा तदुपादानं तत्पूर्वकनिवृत्तिपर्यन्तं सर्वत्र धात्वर्थ इति भाष्यमतम् ।

चोराद्बिभेति त्रायते वा । अनिष्टज्ञानं भयं, अनिष्टपरिहारस्त्राणं अनिष्टहेतुरत्रापादानं भीत्रार्थानां भयहेतुरिति सूत्रात् । चोरापादानकानिष्टज्ञानं तदपादानकानिष्टपरिहार इति बोधः । सूत्रे भयहेतुरित्य-

---

बोधश्चात्र मते स्वजीवनकालावच्छिन्नो धर्मविषयकृत्यसमानाधिकरणकृतिध्वंसश्चेत्प्रवृत्तिरिति दोषान्तरमाह धर्मादिति ॥ आदिना धर्माद्विरत इत्यस्य केवलस्य परिग्रहः । वस्तुनि धर्मादौ । लाघवादाहानिष्टेति । वार्त्तिकमतमाह जुगुप्सेति प्रत्याख्यानप्रकारमाह चोरादिति अक्रमेण बोधमाह चोरेति ननु भयमनिष्टज्ञानमेवं च सूत्रे भयहेतुरित्युक्त्या कथमनिष्टहेतोरपादानत्वमत आह सूत्रे इति ।

ननु यत्कंटकादिजन्य भयमेव न प्रसिद्धं ततः पंचमी न स्यादत आह यज्जन्यमिति । तत्र विषये । तस्याः पंचम्याः । प्रसंगादाहैवमेवेति

स्य अयैकदेशानिष्टहेतुरित्यर्थः। यज्जन्यं भयमेव न प्रसिद्धं तत्र पञ्चमी न भवत्येव। तस्या इष्टत्वे तु हेतुत्वारोपेण सा। एवमन्तरिक्षेण जुहोति परमाणुं न पश्यतीत्यादेरुपपत्तिः। आरोपितस्यैव निषेधाद्बोधाच्च।

भाष्यात्तु भयपूर्विका त्राणपूर्विका च निवृत्तिर्निवर्तना चानयोरर्थः। बुद्धिप्राप्तचोरापादानिका प्रत्यासत्त्या तद्भयपूर्विका निवृत्तिस्तदपादानिका अनिष्टपरिहारफलिका निवर्तनेति च बोध इति लभ्यते। चोरमध्यगतोऽपि तत्संपर्कफलवधादिनिवर्तनात्तेभ्यो निवर्तित इत्युच्यते। एतद्विषयेऽपि हेतुत्वापादानत्वाविवक्षायां षष्ठी भवत्येवेति बोध्यम्।

अध्ययनात्पराजयते। कृत्यसाध्यत्वधीसमानाधिकरणस्तद्विषयकोत्साहाभावो धात्वर्थः। विषयोऽपादानम्। पराजेरसोढ इति सूत्रात्। अध्ययनापादानको देवदत्तकर्तृक उत्साहाभाव इति बोधः। तत्पूर्विका निवृत्तिरिति वा। शत्रून्पराजयते इत्यत्र

---

एवमेवेत्यस्यार्थमाहारोपितस्यैवेति। एतत्प्रत्याख्यानप्रकारमाह भाष्यात्त्विति लभ्यत इत्यत्रान्वयः। यथासंख्यमन्वयः।

तदिति बुद्धिप्राप्तचोरेत्यर्थः। नन्वत्र पक्षे स्थलविशेष इष्टस्य चोरात्त्रायते इतिप्रयोगस्यानापत्तिरत आह चोरमध्येतिअपिना तदन्यसमुच्चयो दृष्टांतार्थः।

पराजेरित्यस्यविषयमाहाध्ययनेत्यर्थः। कर्मणित्यत्र प्रत्ययादाह विषयोऽत्रेति उत्साहेति अर्थादध्ययनविषयक इत्यर्थः। एवं सूत्रमतमुक्त्वा प्रत्याख्यानप्रकारमाह तत्पूर्विकेति असोढइन्यस्य प्रत्युदाहरणमाह शत्रूनिति अभिभवतीत्यर्थस्तदाह तिरस्कारेति।

तिरस्कारानुकूलो व्यापारो धात्वर्थः । आद्येऽनिष्टं धात्वर्थः अध्ययनजन्यमनिष्टमिति बोध इति न युक्तम् । तथाबोधाननुभवात् । असोढशब्देन तदर्थालाभाच्च । प्रेक्षापूर्वकारी मनुष्योऽध्ययनस्य दुःखत्वदुर्धरत्वादि पर्यालोच्य बुध्या प्राप्य ततो निवर्तते इति भाष्येण सर्वथाध्ययनाप्रवृत्तावप्यस्य प्रयोगस्येष्टतया तत्रानिष्टस्याध्ययनजन्यत्वासम्भवाच्च ।

यवेभ्यो गां वारयति अग्नेर्माणवकं वारयति कूपादन्धं वारयति । भक्षणसंयोगादिजनकव्यापाराभावानुकूलो व्यापारो धात्वर्थः । अभावप्रतियोगिव्यापारजन्यफलाश्रयोऽत्रापादानम् । वारणार्थानामीप्सित इति सूत्रात् वारणार्थधात्वर्थफलाश्रयत्वमत्रेप्सितत्वम् । तेन भक्षणसंयोगाद्याश्रयत्वाद्यवादीनामपादानत्वम् । अनुकूलता चात्र योग्यतारूपैव तेन प्रतिषिद्धे गवि भक्षयत्यपि अयं वारयति तथापि न निवर्तते

---

नैयायिकादिमतं खंडयति आद्ये इति अध्ययनात्पराजयते इत्यत्रेत्यर्थः । धात्वर्थ इति जन्यत्वं पंचम्यर्थः । सूत्रे चासोढो ग्लानिविषयः । एवं च पराजेरकर्मकत्वसूत्रोदाहरणतेति तथैवोदाहृतं ग्लायतीति तदर्थः । दोषांतरमाह प्रेक्षेति । इष्टतयेति इष्टत्वानुमानेनेत्यर्थः ।

वारणार्थानामित्यस्य विषयमाह यवेभ्य इति । भक्षणेत्याद्याभिप्रायम् । संयोगेत्यग्रिमाभिप्रायम् । तथाच भक्षणं च संयोगश्च तदादिरूपं यत्फलं तज्जनकेत्यर्थः । धात्वर्थः वारयत्यर्थः । फलेति भक्षणादिरूपेत्यर्थः । तदाश्रयश्च यवादिः एवमग्रेऽपि विशेषमाहानुकूलता चेति । अत्र मानमाह यदीमा इति । तन्मते भाष्यमते ।

इति प्रयोगसिद्धिः । अप्रवृत्तवारणेऽपि अयं प्रयोगः । यदीमा गावस्तत्र गच्छन्ति ध्रुवं सस्यनाशस्तन्नाशोऽधर्मो राजभयं च बुध्या प्राप्य निवर्तयतीति भाष्यात् । उक्तव्यापारानुकूलनिवर्तना च तन्मते धात्वर्थः । अन्धेऽभिमुखदेशगमनत्वेनान्धस्य कूपपतनमिच्छाविषयः । एवं नान्तरीयकविषभोजनप्रसक्तौ तद्वारणकर्तरि चैत्रे विषाद्वारयतीति प्रयोगो भवत्येव । विषस्य विषत्वेनेच्छाविषयत्वाभावेऽपि भक्ष्यत्वेनेच्छाविषयत्वात् ।

मातुर्निलीयते कृष्णः । स्वकर्मकदर्शनाभावप्रयोजकदेशविशेषस्थितिर्धातोरर्थः । धात्वर्थदर्शनकर्ताऽपादानं तत्पूर्वकनिवृत्तिर्धातोरर्थस्तत्र मातुरपादानत्वेनान्वय इति भाष्यमतम् । दर्शने मातृकर्तृकत्वं प्रत्यासत्तिगम्यम् ।

---

यत्तु नैयायिकाः यत्र नान्तरीयकतया चैत्रादेर्विषभोजनं प्रसक्तं न तु स्वेच्छया तत्र तद्भोजननिवर्तकव्यापारकर्तरि चैत्रे विषाद्वारयतीति प्रयोगवारणाय सूत्रे सम्प्रयोगः । अतएव तत्र सविषादन्नाद्वारयतीत्येव प्रयोगः । नच कूपादन्धं वारयतीति न स्यात् नहि कूपपतनमन्धस्येच्छाविषय इति वाच्यं कूपपतनस्येच्छाविषयत्वाभावेऽप्यभिमुखदेशगमनत्वेन तस्यापीच्छाविषयत्वादित्याहुस्तदसदिति ध्वनयन्नाहान्ये इत्यादि । अन्धं कूपादेव वारयतीत्यत्र । एवमित्यस्यार्थमाह विषस्येति ।

अन्तर्द्धाविन्यस्य विषयमाह मातुरिति देशविशेषेति व्यवहितदेशेत्यर्थः । अयमेव सूत्रेऽन्तर्द्धिपदार्थः । पंचम्यर्थो वृत्तिः धात्वर्थैकदेशे व्यापारे चेति । प्रत्याख्यानप्रकारमाह तत्पूर्वकेति तत्रैवाह दर्शन इति ।

आख्यातोपेत्यस्य विषयमाहोपाध्यायादिति । उपयोगशब्दस्य

उपाध्यायादधीते। उच्चारणोत्तरकालिको नियमपूर्वको ग्रन्थस्वीकारानुकूलो व्यापारो धात्वर्थः। उच्चारणाश्रयोऽत्रापादानमपादानत्वेनैव बोधः सर्वत्र उपाध्यायाद्भिः सरन्तं ग्रन्थमधीते इत्यर्थः। अतिप्रसङ्गस्यानभिधानाद्वारणीय इति भाष्यमतम्।

ब्रह्मणः प्रजाः प्रजायन्ते। उपादानकारणमत्रापादानम् जनिकर्तुः प्रकृतिरिति सूत्रात्। सूत्रे प्रकृतिरुपादानकारणम्। ब्रह्मापादानिका प्रजाकर्तृकोत्पत्तिरिति बोधः। ब्रह्मणो निःसरमाणा जायन्ते इत्यर्थः। निःसरणं लोकप्रसिध्याश्रयम्। यद्यस्माज्जायते तत्ततो निर्गच्छतीति लोकव्यवहारात्। सच व्यवहार उपादानकारणविषय एवेति भाष्यसंमतम्। पुत्रात्प्रमोदो जायते इत्यादावुपादानत्वारोपेणापादानत्वं बोध्यम्। हिमवतो गङ्गा प्रभवति। प्रथमप्रकाशोऽत्र धात्वर्थः। तदाधारो हिमवदादिरत्रापादानम्।

---

तत्रैव रूढेराह नियमेति ब्रह्मचर्यादीत्यर्थः। सूत्रमतमुक्त्वा प्रत्याख्यानमाहोपेति नन्वेवमतिप्रसंगो नटस्य शृणोतीत्यादावत आहातीति।

जनिकर्तुरित्यस्य विषयमाह ब्रह्मण इति दीक्षितादिसकलग्रन्थासांगत्यायाहोपेति। ननु सूत्रतो लाभः कथमत आह सूत्रे इति। ब्रह्म च मायाशबलं जगदुपादानकारणं तदाह ब्रह्मेति। एवं सूत्रमतमुक्त्वा प्रत्याख्यानमाह ब्रह्मण इति। निः सरणमिति। अनतिप्रसंगायाह सचेति। नन्वत्र मते क्वचिदिष्टासिद्धिर्न स्यात्पुत्रस्य तत्र निमित्तकारणत्वेनातत्त्वादत आह पुत्रादिति।

भुवः प्रभव इत्यस्य विषयमाह हिमेति। प्रग्रहणादाह प्रथम इति।

हिमवदपादानको गङ्गाकर्तृकः प्रथमः प्रकाश इति-बोधः। हिमवतो निःसरमाणा प्रकाशते इति वार्थः।

प्रासादात्प्रेक्षते इत्यादौ तु वाक्यैकदेशन्यायेन बोधः। पञ्चम्यर्थो ल्यबन्तक्रियाकर्म। आसनात्प्रेक्षत इत्यादावुपविश्येत्याद्यर्थः। अधिकरणं पञ्चम्यर्थः प्रासादादितो निःसरता चक्षुषा तद्वृत्त्या वा प्रेक्षते इत्यर्थः। प्रासादस्थपुरुषान्निष्क्रमणमेव प्रासादावधिकत्वेनोपचर्यत इति भाष्यसंमतम्।

वनाद्ग्रामो योजने योजनं वा। अत्राव्यवहितोत्तरत्वं पञ्चम्यर्थः। स्वाव्यवहितोत्तरवृत्तित्वं प्रथमासप्तम्योरर्थः। एवंच वनाव्यवहितोत्तरयोजनाव्यवहितोत्तरदेशवृत्तिर्ग्राम इति बोधः। कार्तिक्या आग्रहायणी मासे इत्यत्र स्वावयवकत्वं पञ्चम्यर्थः। स्वाव्यवहितोत्तरकालवृत्तित्वं सप्तम्यर्थः। कार्तिक्यवयवकत्रिं-

---

प्रभवो जलमूले स्याज्जन्महेतौ पराक्रमे।
ज्ञानस्य चादिमस्थाने इति विश्वः॥

प्रभवो जन्मकारणम्—

आद्योपलंभनस्थानेऽपां मूले सन्निभिद्ययोरिति हैमश्च। अत्र नान्यत्र। प्रभवत्यत्रेति प्रभव इति सूचयन्नाह तदाधार इति प्रत्याख्यानमाह हिमेति।

ल्यब्लोपे इति वार्त्तिकविषयमाह प्रासादादिति। प्राचां ग्रन्थासांगत्याय सिद्धांतमाह वाक्यैकेति। प्रत्याख्यानमाह प्रासादेति आदिनासनं। नैयायिकमतेनाहषेति वेदांतिमतेनाह तद्वृत्त्यावेति नन्विदं बाधितमेवात आह प्रासादस्थेति।

अथोपपदविभक्तिपञ्चम्यर्थनिरूपणं। तत्रादौ यतश्चाध्वेति वार्त्तिकविषयमाह वनादिति देशस्येदमुदाहरणं तदाहैवं चेति। कालस्यो

शात्तिंध्यात्मकमासाव्यवहितोत्तरकालवृत्तिराग्रहाय-णीत्यर्थः। वनाद्भिः सृत्य योजने गते ग्राम इत्यतः प्राप्यते इत्यध्याहारेण बोधः। निः सृत्येति पराचर-योगे चेति क्त्वा। वनावधिकविभागानुकूलव्यापार-संबद्धे योजने गते ग्रामः प्राप्य इति बोधः। योजन-मित्यस्य प्रथमान्तत्वे गतं चेदिति शेषः। कार्तिक्या-इत्यादेरपि ततः प्रभृति गते मासे आग्रहायणीत्यर्थ इति भाष्यमतम्।

अत्र सर्वत्र भाष्यसंमते एवार्थे साधुत्वं यथोत्तरं मुनीनां प्रामाण्यात्। सर्वत्र तत्तत्कारकत्वाविवक्षायां षष्ठ्याः साधुत्वमिष्टमेवानभिधानं वेति तत्त्वम्।

घटादन्य इत्यादौ स्वप्रतियोगिकभेदसम्बन्धः पंच-म्यर्थः। तेन प्रकृत्यर्थस्यान्यस्मिन्नन्वयः। एतेन घटादि-तरो व्याख्यातः। अन्याराादितरर्ते दिक्शब्दाञ्चूत्तरप-

---

दाहरणमाह कार्त्तिक्या इति स्वं कार्त्तिकी मासश्च। प्राचीनमतेना-ध्याहारेणेति सिद्धांतस्तु प्रागुक्त एव बोध्यः। अतएवाह परेति प्राग्वदाह गतं चेदिति। एवंच तत्तुल्यत्वेऽपि न तस्य विषयतात्रेति सूत्रेणैवात्रापादानत्वमेवं सति तत्रापि एवमेवोपपत्तौ वार्त्तिकंनाव-श्यकं तदेवम् ध्वनयन्द्वितीयेऽप्यन्यथासिद्धिमाह कार्त्तिक्या इति एवंच वनादित्यादिः प्रत्याख्यानप्रकार एतदन्तः। अत्र साधुत्वे विनिगमनाविरहं निराचष्टेऽत्र सर्वत्रेति सति प्रयोगे आहेष्टमेवेति तदभावे आहानभीति।

अन्यारादित्यस्य विषयमाह घटादिति तेन। संबंधेन। दीक्षिता-युक्तिं खंडयति अन्येत्यर्थेति। अन्यत्र शेखरगुरुमंजूषादौ। उक्ता आ-दावेव। संसर्गेति तादात्म्येतरसंसर्गावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः। प्रागुक्तमत्र तुल्यं तत्र तस्य प्रयोज्यत्वेनान्वयः। सएवात्र

द्राजाहियुक्ते इति पञ्चमी। अन्य इत्यर्थग्रहणमिति तु भाष्यानुक्तत्वादितरग्रहणाच्चायुक्तमित्यन्यत्र निरूपितम्। घटाद्भिन्न इत्यादौ गतिरुक्ता।

घनादारात्। आराद्दूरसमीपयोः। ऋते कृष्णान्नोत्पद्यते सुखम्। अत्र ऋतेशब्दार्थः संसर्गाभावः प्रतियोगित्वं पञ्चम्यर्थः। कृष्णशब्दस्तद्भक्तिलाक्षणिकः। कृष्णभक्तिप्रतियोगिकाभावप्रयोज्यः सुखकर्तृकोत्पत्त्यभाव इति बोधः।

कृष्णादृते दुःखम्। अत्र ऋते शब्दार्थस्य सामानाधिकरण्येनेतरत्रान्वयः। कृष्णभक्त्यभावसमानाधिकरणं दुःखमिति बोधः। कृष्णादृते नरः शोच्यः। अत्राभाववान् तदर्थः। कृष्णभक्त्यभाववान् नरः शोच्य इति बोधः। कृष्णादृते न धनुर्धर इत्यत्र भेदवान् तदर्थः। कृष्णभिन्नो न धनुर्धर इति बोधः। एतद्योगे द्वितीयापि यथा ऋते वातं वृक्षः पतति वाताभाववान् वृक्षः पतति इति बोधः। वृक्षपतने वातजन्यत्वाभावलाभस्त्वार्थः।

---

नेत्याहात्रेति। संसर्गाभावस्येत्यर्थः। इतरत्र दुःखे तदेवाह कृष्णेति तद्भक्तिप्रतियोगिकाभावेत्यर्थः। अत्रापि विशेष मात्रमाहात्राभावेति। तदर्थः ऋतेशब्दार्थः। अत्रापि तमाह भेदवानिति तदर्थः ऋते शब्दार्थः अत्र कृष्णश्चतुर्धा प्रतिपादितः।

कृषिर्भूवाचकः शब्दो नश्च निर्वृतिवाचकः
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते।

इत्युक्तेः। विशेषमाहैतदिति तृतीयप्रकारेण बोधमाह वाताभेति प्रसिद्धार्थसंग्रहमाह वृक्षपेति।

पूर्वो ग्रामात् । उदयाचलसंनिहितदेशः पूर्वप-दार्थः पञ्चम्यर्थोऽवधित्वम् । पूर्वत्वं च तदपेक्षोऽख-ण्डोपधिः । एवं परत्वाद्यपि । ग्रामावधिकपूर्वत्ववा-नित्यादिक्रमेणान्वयः । चैत्रात्पूर्वः फाल्गुनः प्रति-योगिध्वंसानधिकरणकालभवः पूर्वपदार्थः । तत्तदवधि-बोधकपदसमभिव्याहारवशाच्च तद्रूपप्रतियोगि तद्ध्वंसानधिकरणकालस्य तत्त्वेन भानम् । चैत्रावधि-कपूर्वकालभवः फाल्गुनः इति बोधः ।

प्रतियोगिध्वंसानधिकरणकालत्वस्य शक्यताव-च्छेदकत्वे गौरवम् । प्रत्येकं खण्डशः शक्तौ शक्त्यान-न्त्यम् । चैत्ररूपप्रतियोगिचैत्रध्वंसैतदुभया नधिक-रणचैत्रावधिककालभवःफाल्गुन इति बोधाङ्गीकारेए-कस्य चैत्रस्यानेकधाऽन्वयाङ्गीकारे गौरवमव्युत्पत्तिश्च-एवमन्यत्रापि बोध्यम् । कालस्य क्रियामात्रपरिच्छेदक-त्वात्तद्भवपर्यन्तं पूर्वादिशब्दानामीदृशेषुलक्षणा । लक्ष-णाभावेतु चैत्रात्पूर्वः फाल्गुन इत्येव प्रयोगः । अस्ती-त्यध्याहारः । पूर्वमिति अधिकरणशक्तिप्रधानम् ।

---

अस्य व्यवस्थाशब्दत्वादाह तदपेक्ष इति । एवमिति ग्रामापेक्षोऽ-खंडोपाधिरित्यर्थः । अस्ताचलसंनिहितदेशः पश्चिमः । सूर्योदयमभि-मुखावस्थितस्य सव्यहस्तसंनिहितदेशो दक्षिणः । तथावस्थितस्य-वामहस्तसंनिहितदेश उत्तरः । शरीरावयवगते सव्यत्ववामत्वे च जातिविशेषौ । प्रतीतिप्रायाच्च । चैत्रादिस्तत् ध्वंसश्च तयोरवधी-त्यर्थः । तदेवाह तत्तदवधीति । तत्वेन पूर्वत्वेन । इदमेवान्यथानिरा-सेनाह प्रतीति विशिष्टशक्तिपक्षे इदं अत एवाह प्रत्येकामिति । तत्वमेव विशदयति खंडश इति विशिष्ट शक्त्यानानंतस्यापि तत्वेनैव भान-मिति तत्प्रयुक्तगौरवेऽस्थिरत्याशयेनाह चैत्ररूपेति ! नन्वेवमपि तादृश काल इत्येव सिद्धे भव इत्यांधकमत आह कालस्येति । अभावे त्विति

चैत्रात्पूर्वं माघ इत्यादौ तात्पर्यवशात्तथाद्यर्थं-त्रिंशद्दिन व्यवहितस्योक्तकालस्य तत्त्वेन भानम्। चैत्रात्परः अत्र तत्तद् वधिसमभिव्याहारवशात्तद्ध्वं-साधिकरणकालः परत्वेन परशब्दार्थः। तत्रैव कृष्ण-स्यावधित्वम्। तथा व्यवहारात्।

प्रयागादुत्तरं काशीत्यादौ संयुक्तसंयोगवद्देशत्व-त्तरत्वेनोच्चारमित्यधिकरणशक्तिप्रधानाव्ययार्थस्तस्य च पूर्वदक्षिणपश्चिमादेस्तात्पर्यवशात्तत्वेन तत्तत्प्रयोगेषु भानम्।

गृहाद्गङ्गा मम परा काश्याः सैवा परा मम।

इत्यादौ विप्रकृष्टदेशस्थः संनिकृष्टदेशस्थश्च पर-त्वादिना परापरशब्दार्थः। अवधिः पंचम्यर्थः। गृहा-वधिकमत्संबन्धिपरत्ववती गङ्गेत्यादिक्रमेण बोधः। ममेत्यत्र तु न पञ्चमी प्रत्यासत्त्या यस्य यत्रोत्थिता-काङ्क्षा तद्वाचकादेव तत्पदनिमित्तविभक्तिस्वीका-रात्। परादिपदं चावधावेव नियताकाङ्क्षं न संबन्धि-नीति स्पष्टमेव। प्राक् प्रत्यक्वा ग्रामादिति पूर्वादिशब्दैर्व्याख्यातम्।

---

च्छेदः। ननु तत्रापि न क्रियातआहास्तीति तदन्वयमाह अव्ययमिति भावः। विशेषमाह चैत्रादिति। तत्वेन पूर्वत्वेन तथाच पूर्वपरादिश-ब्दानां नियमेनावधिसाकांक्षपूर्वत्वपरत्वाद्यखंडोपाधिरूपमेव शक्य-तावच्छेदकं तदाश्रयश्चात्र प्रतियोगि तत्ध्वंसानधिकरणत्वोपलक्षितः कालः। अन्यथोक्तदोषगणापत्तेरिति बोध्यं। परेति परत्वेनेत्यादिः तत्रैव काल एव। उत्तरमिति उत्तरमित्येवं यदधिकरणशक्तिप्रधानम-व्ययं तदर्थ इत्यर्थः। तस्य च देशस्य स्वरूपं। पूर्वेति तत्वेन पूर्वत्वेन।

भवात्प्रभृत्यारभ्य वा सेव्यो हरिः। अत्र प्रभृतीत्यारभ्येत्यर्थकमव्ययं तदर्थयोगे पञ्चमी। अपादाने पञ्चमीति सूत्रे यतश्चाध्वकालनिर्माणं ततः पञ्चमी। कार्तिक्या आग्रहायणी मासे इति वार्त्तिकप्रत्याख्यानाय भाष्ये उक्तमिदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते। कार्तिक्याः प्रभृत्याग्रहायणी मासे इति। तेन तदर्थयोगे पञ्चमीति वचनसत्त्वं सूचितम्। अतएव तदप्रयोगेऽपि पञ्चमीसिद्धिः। अवधिमादायेति तदर्थः।

आरभ्येत्यस्य चैतदर्थकतापि। तस्यावधित्वं च समभिव्याहृतपदार्थापेक्षम्। यथा प्रकृते मरणान्तकालस्य भवोऽवधिः मरणान्तकालावधिं भवकालमादाय तावत्कालं हरिः सेव्य इति बोधः। आरभ्येत्य-

---

दिना आदिना। काश्यचाधिकमत्संबंध्यपरत्ववतीत्यस्य ग्रहणं। नन्वेवमतिप्रसङ्गोऽत आह ममेत्यत्रेति उभयत्रेत्यर्थः। यत्र भाष्यप्रामाण्यात्पंचमी तंविषयमाह भवादिति। अथ भेदोत्र नेत्याह अत्रेति। प्रभृति योग इति। सकलग्रन्थासांगत्यायाह तदर्थेति प्रभृत्यर्थयोगे इत्यर्थः। सूत्राभावादाहापेति। तेन भाष्येण। ततएवाह तदर्थेति। अत एव तच्छब्दाभावेपि तदर्थसत्तामात्रेण पंचमीति भाष्यतात्पर्यादेव। अन्यथा प्रभृतिपदाभावे पंचम्यर्थवचनावश्यकत्वे तत्प्रत्याख्यानासंगतेरेव। तदर्थः प्रभृतीत्यस्यार्थः। वक्ष्यमाणार्थांतरसंग्रहायापिः। अवधौ पञ्चम्यन्तार्थस्या भेदेनान्वयः। तद्विशेषणत्वेपि न द्वितीया प्रभृत्यर्थयोग पंचमीति भाष्यकृद्बोधितवचनात् तदेतदभिप्रेत्याह तस्येति भवस्येत्यर्थः। अपेक्षं तन्निरूपितं। तमेवाह मरणांतेति तावत्कालं।

अपि संग्राह्यमेवाहारभ्येति स्येति मात्रपदेनोक्तव्यवच्छेदः। विषयवाक्यमाहाद्यक्षणमिति। अत एवावीचीमारभ्य मेरुपृष्ठपर्यंतं भूलोको मेरुपृष्ठादारभ्य ध्रुवपर्यंतं ग्रह नक्षत्रतारागणचित्रितोऽत-

स्यगृहीत्वेत्येतन्मात्रार्थकत्वे आद्यक्षणमारभ्येत्यादौ कर्मत्वाद्द्वितीया । प्रभृतिशब्दस्य त्वधातुत्वेन तदर्थस्याक्रियात्वान्न तद्विशेषणे द्वितीया । तदर्थकस्यारभ्येत्यस्यापि वाक्यैकदेशन्यायेन तदर्थकतेति न तद्विशेषणस्य तत्त्वम् ।

यद्वा भवावधिके मरणान्तकाले भवकालमादाय हरिः सेव्य इति बोधः । तत्र गम्यमानक्रियापेक्षं भवस्यावधित्वमित्यपादानत्वादेवात्र पञ्चमी । तच्चावधि मादायेत्याद्यर्थयोगेन तद्बाधकप्रभृत्यादियोगेन च गम्यते । अप्रयोगेऽपि वाक्यैकदेशन्यायेन तत्प्रतीतिः । पञ्चमीबलादेव तात्पर्यवशाच्च । एवं कार्तिक्या आग्रहायणी मासेइत्यतोऽपि कार्तिक्यवधिके आग्रहायणी घटिते मासे कार्तिकीमादाय गते सति आग्रहायणीति बोध इत्यलम् । यदा त्वारभ्येत्यस्य प्रथमक्रियारूपमारम्भं कृत्वेत्यर्थस्तदा तद्योगे सप्तम्यपि ।

आरभ्य तस्यां दशमीं तु यावत्प्रपूजयेत् इति

---

रिक्षलोक इति पातंजलभाष्ये उक्तं । नन्वेवं प्रभृत्ययोगे द्वितीयापत्तिरत आह प्रभृतीति प्रकारांतरेणाद्यार्थे द्वितीयां वारयति तदर्थकेति । अवधिमादाय तदर्थकस्येत्यर्थः । नतादिति नावधिविशेषणकर्मत्वमित्यर्थः । भाष्यप्रमाण्यान्नापादानत्वं किंतु सूत्रादेवेत्याह यद्वेति । भक्ते इति शेषः । अत एवाह भवकालेति । शेषादेवाह तत्र ताहशावधित्वं च । हेत्वंतरमाह तात्पर्येति भाष्यप्रयोगेऽप्ययमेवेत्याहैवमिति । कार्तिकीतो विभक्त इति

यथा—

ग्रामाद्बहिः। बहिःशब्देन समभिव्याहृतपदार्थतावच्छेदकानधिकरणतत्संनिहितदेशतत्तत्स्थवस्तु च बहिष्ट्वेनोच्यते। बहिर्योगे पञ्चमीसमासविधानसामर्थ्यात्तद्योगे पञ्चमी। बहिष्ट्वं च नियतमवध्याकाङ्क्षमिति स पञ्चम्यर्थः। अपहरेः संसार इत्यत्रापपरी कृते शब्दसमानार्थौ हरिशब्दश्च तद्भक्तिपरः

आमुक्तेः संसारः। अत्र मर्यादाऽऽङोऽर्थः। तत्र मर्यादा द्विविधा। कालरूपा देशरूपा च। कालगतमर्यादात्वं च स्वस्वोत्तरकालोभयप्रागभावाधिकरणकाल-

---

शेषः अतएवाह कार्तिकस्यैवेति। एतेन भाष्यप्रयोगात्पञ्चमीति सकलग्रंथकारोक्तमपास्तं तदाहेत्यलमिति।

विशेषमाह यदात्विति। सूत्र ज्ञापितपञ्चमीविषयमाह ग्रामादिति। समासेति अपपरिबहिरञ्चवः पंचम्येति पञ्चम्यन्तेन समासेत्यर्थः। अयं भावः परस्परसाहचर्यात्तत्रापपरीवर्जनार्थौ कर्मप्रवचनीयावेव तद्योगे पंचम्यपाङ्परिभिरिति वचनात् लक्षणप्रतिपदोक्तपरिभाषयाऽपपरिनिमित्तकसुबंतस्यैव ग्रहणाच्च पंचम्यैव सिद्धः समासस्तत्साहचर्यादुक्तपरिभाषया चाञ्चूत्तरपदेनापि तन्निमित्तपञ्चम्यैव सिद्धः समास इति व्यर्थेत द्बहिः शब्देन पंचम्यंतेन समासविधानद्वारा तद्योगे पंचम्या अपि ज्ञापनार्थमिति। इदमपपरिबहिरितिसूत्रे भाष्ये स्पष्टं। पंचमीति सापीत्यर्थः। तेन करस्य करभो बहिरिति सिद्धं। यः अवधिः ग्रामावधिको बहिर्देशस्तत्स्थं वस्तुएवेति बोधः। पंचम्य पाङ्परिभिरित्यस्य विषयमाहापहरेरिति ष्यन्तादिति वार्त्तिकादापपरी इति अतएवाह हरीति हरिप्रतियोगिकभक्त्यभावसमानाधिकरणः संसार इति बोधः। तत्र सूत्रे। स्वं मुक्तिः स्वकालः स्वोत्तरकालश्च समेति संसार इत्यर्थः।

कर्मप्रवचनीयत्वादाह मर्यादेति मर्यादार्थाङ्समभिव्याहारात्तस्य कर्मप्रवचनीयत्वेन संबंधपरिच्छेदकत्वात्सोऽत्र स्वप्रकृत्यर्थप्रागभावा-

भवो यः समभिव्याहृतपदार्थ स्तदनधिकरणत्वं मु-
क्तिपदं तत्कालपरं मर्यादा मर्यादाभावः संबन्ध आ-
ङ्द्योत्यः पञ्चम्यर्थः। आङ्मर्यादाभिविध्योरिति सूत्र
स्वरसात्। मुक्तिमर्यादाकः संसार इति बोधः। सं-
सारे मुक्तिकालप्रागभावाधिकरणनिरूपिततद्भिन्न का-
लावृत्तित्व विशिष्टव्यापकताबोधस्त्वार्थः।

एतदर्थद्योतकतयावच्छब्दयोगे तु ततोऽन्यत्रापि
दृश्यते इति द्वितीया। कार्तिक्या वैशाखीं यावच्छी-
तमिति यथा प्रभृत्यर्थयोगे पञ्चमी। कार्तिकीप्रभृति
वैशाखीमर्यादाकं शीतमित्यर्थः। शीते कार्तिक्यादि
वैशाखीपूर्वतिथ्यन्तकालनिरूपिततद्भिन्नकालावृत्तित्व-
समानाधिकरणव्यापकताबोधस्त्वार्थः। व्यापकत्वम-
न्यत्रोक्तदिशोह्यम्।

---

धिकरणकालनिरूपिता तद्भिन्नकालावृत्तित्वविशिष्टा या व्यापकता
तद्रूप इति केचित्तन्न गौरवात्तत् ध्वनयन्नाह संसारे इति निरूपि-
तत्वं विशिष्टत्वं च व्यापकताविशेषणं। बोध इति मुक्ति प्रागभावाधि-
करणकाल निरूपितस्वस्वभिन्नकालावृत्तित्वसमानाधिकरण व्याप-
कतावान्संसार इतीत्यर्थः। एवमग्रेऽपि

ननु तत्र पञ्चमी कथमत आह प्रभृत्यर्थेति। प्राग्वदाह शीतेति
तत्प्रभृतिश्च वैशाखी पूर्वतिथ्यन्तः। मर्यादार्थकयावत्पदसमभिव्या-
हारात् वैशाखीपदस्य तत्पूर्वतिथौ लक्षणा व्यापकता च समभि-
व्याहृतकालभिन्नकालावृत्तित्वविशिष्टा प्रत्याय्यते तत्समभिव्या-
हारादेव तदाह कार्तिक्यादीति निरूपितत्वसमानाधिकरणत्वं व्या-
पकताविशेषणं तद्वच्छीतमिति बोधाकारः। अन्यत्रेति मासमधीत
इत्यत्रेत्यर्थः। स्वदेशस्वोत्तरदेशयोरित्यर्थः। एवं काशी तदादीति
प्रयागादिमध्यवर्तीत्यर्थः। प्राग्वदाह वृत्ताविति प्रयागादिरूपो यः
काशीपश्चिमदेशस्तन्निरूपिता स्वाभिन्नदेशता वृत्तित्वसमानाधिकरणा

प्रयागात्प्रभृत्या काश्या वृष्टो देव इत्यादौ देशो मर्यादा देशावच्छिन्नमर्यादात्वं च स्वस्वोत्तरदेशयोः प्रयागाद्यन्तराल देशवृत्तिसमभिव्याहृतपदार्थवृष्टयाद्यनधिकरणत्वं। प्रयागादिकाशीमर्यादाकवृष्टिकर्ता देव इति बोधः। वृष्टौ प्रयागादिकाशीपश्चिमदेशनिरूपितस्वभिन्नावृत्तित्वसमानाधिकरणव्यापकताबोधस्त्वार्थः

आसकलाद्ब्रह्म। आङ्ख्योत्योऽभिविधिरूपः संबन्धः पञ्चम्यर्थः। सकलव्यापकं ब्रह्मेतिबोधः। सोऽपि द्विविधः। कालिको दैशिकश्च। आद्ये यथा कार्तिकयाश्चैत्रं यावच्छीतम्। कार्तिकीप्रभृतिचैत्रान्तकालव्यापकं शीतमिति बोधः। चैत्रपदं तदन्तकालपरम्। अन्त्ये यथा काशीतः पाटलिपुत्रं यावद्वृष्टो देवः काशी प्रभृतिपाटलिपुत्रान्तदेशव्यापकत्वं वृष्टौ प्रतीयते। अनयोस्तात्पर्यवशात्कदाचिद्व्यापकत्वं तद्भिन्नकालावृत्तित्वविशिष्टं तद्भिन्नदेशावृत्तित्वविशिष्टंच प्रतीयते इति बोध्यम्

प्रद्युम्नः कृष्णात्प्रति। सदृशः प्रत्यर्थः। कृष्णसदृश इति बोधः। तिलेभ्यः प्रति यच्छति माषान्। अत्रग्रहण पूर्वकं

---

च या व्यापकता तद्वती या वृष्टिस्तत्कर्तेत्यर्थः। प्राग्वदाह सोपीति अभिविधिरपीत्यर्थः। अभिविध्यर्थकयावच्छब्दसमभिव्याहारादाह चैत्रेति अंत्य इति पाठः। प्राग्वदाह काशिप्रभृतीति। अनयोरव्यवहितोदाहरणयोः। तात्पर्येति सर्वं वाक्यमिति न्यायेनेति भावः। शीते वृष्टौ च यथाक्रममाह तद्भिन्नेति।

प्रतिनिधिप्रतीत्यस्य विषयमाह प्रद्युम्न इति।

अकर्तर्यृणे इत्यस्य विषयमाह शतादिति। हेत्विति तेन करणत्वविवक्षायां तृतीयेवेति भावः।

प्रत्यर्पणं प्रतिसमभिव्याहृतयच्छतेरर्थः। तिलग्रहण-पूर्वकं माषप्रतिदानमिति बोधः। शताद्बद्धः। हेतुहेतुमद्भावः पञ्चम्यर्थः शतहेतुकबन्धनकर्मेति बोधः वं जाड्याद्बद्ध इति बोध्यम्। धूमादग्निमानित्यादौ ज्ञाननिष्ठजन्यजनकभावस्य विषये आरोपो बोध्यः।

पृथग्विनानाना रामं रामात् रामेण वा। पञ्चम्यादीनां प्रतियोगित्वमर्थः। पृथक्त्वं गुणविशेष इत्येके। भेद इत्यन्ये। अन्त्ये इमौ भ्रातरौ पृथक् जाताविति व्यवहारो गौणो बोध्यः। विनानाने ऋतशब्दसमानार्थे।

स्तोकेन स्तोकाद्वा मुक्तः। करण मत्र विभक्त्यर्थः। स्तोकशब्दः स्वप्रवृत्तिनिमित्तालपत्वधर्मपरः। शुक्लादिवदेते केवलधर्मपरा अपि। एवंचासत्त्ववचनता। सत्वत्वं च सर्वनामपरामर्शयोग्यत्वम् करणत्वं च त-

---

विभाषा गुण इत्यस्य विषयमाहैवं जाड्यादिति तत्र योगविभागस्य प्राचोक्तभाष्यानारूढत्वेऽपि बाहुलकं प्रकृतेस्तत्तुदृष्टेरिति वार्त्तिकप्रयोगाद्गुणेऽस्त्रियामित्यस्य प्रायिकत्वेन तद्विषयविशेषो विषययोः स्वतो जन्यजनकभावासंभवाल्लक्षणमाह धूमादिति।

पृथग्विनेत्यस्य विषयमाह पृथगिति प्रकरणादाह पंचम्यादीनामिति। अत्र द्वितीया ततोऽन्यत्रापीत्येवेति स्पष्ट मन्यत्र। एके नैयायिकाः। अन्ये मीमांसकाः। अन्त्ये भेदपक्षे भेदस्योत्पत्तिशिष्टत्वेऽपि द्रव्यगतभेदस्य तत्रारोपेणेति भावः।

करणे च स्तोकेत्यस्य विषयमाह स्तोकेनेति स्वं स्तोकशब्दः यद्धर्मावेशात् द्रव्ये स्तोकव्यवहारस्तद्धर्मपरः सच धर्मोऽल्पादिशब्दप्रवृत्तिनिमित्तमेवेति भावः। नन्वेवं कथं स्तोकेन विषेण इत्यत आह शुक्लादीति अपिना धर्मिसमुच्चयः। अत्र मानं सूचयन्नाहैवंचेति धर्मपरत्वेचेत्यर्थः। ननु लिङ्गसंख्याकारकान्वितत्वेन तस्यापि

स्य परम्परया। ईदृशार्थ एव साधुत्वम्। करणे च स्तोकाल्प कृच्छ्रकतिपयस्यासत्त्ववचनस्येति सूत्रबलात्तेन ह्यत्र तृतीयापञ्चम्यौ। एवं कृच्छ्रादियोगेऽपि। ग्रामस्य दूराद्दूरेण दूरं वागतम्।

अत्र पञ्चम्यादयः प्रातिपदिकार्थे। दूरदेशवृत्तिदूरशब्दार्थः। षष्ठ्यर्थः संबन्धः। ग्रामसंबन्धिदूरदेशवृत्ति गमनमिति बोधः। एतेन ग्रामस्यान्तिकादिति व्याख्यातम्। समीपदेशवृत्त्यन्तिकार्थः

इतिपञ्चमी

षष्ठ्यर्थः संबन्धत्वेन तत्तद्रूपेण च स्वस्वामिभावादिः संबन्धः सबन्धत्वेन क्रियाकारकभावश्च। अत एवानेकसंबन्धसत्त्वेऽपि स्वत्वादिसंबन्धविशेषतात्पर्येण चैत्रस्य नेदं वास इति प्रयुज्यते। अत एवैकशतं ष-

---

स्वत्वमेवातआह करणत्वं चेति नन्वन्यथैव कुतो नेति आहेदृशेति। तेन हीति करणे तृतीयायाः सिद्धत्वेऽपि पक्षेऽस्य पंचम्यर्थत्वादिति भावः। अल्पयोगे उक्तप्रायत्वादाहैवं कृच्छ्रादीति दूरांतिकार्थेभ्य इत्यस्य विषयमाह ग्रामस्येति दूरांतिकार्थैरिति षष्ठी प्राप्नोतीति भावः।

इतिपंचमी।

षष्ठ्यर्थ इत्यस्य सम्बन्ध इत्यत्र भावश्चेत्यत्र चान्वयः। तत्रादौ प्राचीननवीनसाधारणमाह सम्बन्धत्वेनेति। नव्यमतमाह तत्तदिति स्वत्वस्वामित्वसमूहादिरूपेण चेत्यर्थः। अयं भावः शेषे षष्ठीति हि विधिसूत्रं शेषश्चोक्तादन्यः सच तत्तद्रूपेण स्वत्वादिः सम्बन्धत्वेन रूपेणच। अनेनैव कर्मत्वादिश्चेति तदाह सम्बन्धत्वेनेति मध्यमे मानमाह अतएवेति। तद्रूपेण तस्य तत्त्वादेवेत्यर्थः। एवमग्रेपि एते-

ष्ठ्यर्थो इति. षष्ठीस्थानेयोगेति सूत्रस्थं भाष्यं सङ्गच्छ-ते। द्वितीयादितश्च क्रियाकारकभावस्य तत्तद्रूपेणैव बोधः। तथैवानुभवात्। मातुः स्मरतीत्यादौ च तत्त-द्रूपेण बोधे द्वितीयादीनां बाधिकानां सत्त्वात् संब-न्धत्वेनैव बोधः। मातृसंबन्धिस्मरणमितीति नव्याः।

प्राञ्चस्तु अत्रापि क्रियाकारकभावमूलकं विशेष-णत्वरूपं विषयत्वमेव निमित्तत्वमेव वा तत्त्वेन संबन्ध-त्वेन वा विवक्षितम्। अत एव हरिणा।

संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः।
श्रुतायामश्रुतायां वा क्रियायामभिधीयते इति॥

क्रियाकारकपूर्वकत्वमेव संबन्धस्योक्तम्। क्रिया-कारकसंबन्धः कारणं शेषसंबन्धस्तु फलभूतः। यथा राज्ञः पुरुष इत्यत्र राजपुरुषौ कर्तृसंप्रदानरूपौ अ-भूतां राजा पुरुषाय ददातीति तन्मूलकस्वस्वामिभा-

---

न षष्ठ्या सम्बन्धविशेषाणां तत्तद्रूपेणैव भानात्प्राचोक्तमयुक्तमित्यपा-स्तं ननु कारकविभक्तिभ्योऽपि क्रियाकारकभावस्य संसर्गविधया-भानस्योक्तत्वात्कथं स शेषोऽत आह द्वितीयेति चस्त्वर्थे। एवमग्रेपि अत एव सम्बन्धत्वेनेत्येवात्रोक्तं नतु प्राग्वत्। नन्वयुक्तमेतत्त मातु-रित्यादौ तत्तद्रूपेण बोधस्येष्टत्वादत आह मातुरिति। आदिना छात्रस्य हसितमित्यपि।

नव्या इति सूचितामरुचिं प्रकटयन् व्युत्क्रमेण सिद्धान्तमाह प्राञ्चस्त्वित्यादि प्राहुरित्यन्तेन। अत्रापि मातुरित्यादावपि अपिना राज्ञः पुरुष इत्यादिसमुच्चयः। तत्रैव षष्ठ्या इष्टत्वादाह विशेषणे-ति तस्य स्वतोऽसत्वादाह मिति तत्त्वमिति। तत्वेन क्रियाकारक-भावत्वेन तथा बाधानुभवादाह सम्बन्धत्वेन चेति अत्र मानमा-हातएवेति सर्वत्र सम्बन्धस्य तन्मूलकत्वादेव। तेन इति . इत्यन्तेन तस्य तत्वमेवोक्तमित्यर्थः। ननु सम्बन्धस्यैकत्वात्कथं पूर्वपरभा-

वप्रतीतौ कर्त्रादि विशेषरूपतानवगमः। कारकश-ब्देन च श्लोके करणत्वादिशक्तय उच्यन्ते। अत्राश्रूय-माणा दानादि क्रिया संबन्धलक्षणकार्यानुपपत्त्या-नुमीयमाना संनिहितेति तन्मुखेन समन्वयः। सि-द्धस्वभावानां द्रव्याणां तां विना परस्परं संबन्धाभा-वात्। क्रियाहि निःश्रयणीव संबन्धं करोति। एवंच सबन्धिनो रप्यनुमीयमानक्रियानिमित्तत्वरूपं कारक-त्वमस्ति।

मातुः स्मरतीतिश्रुतायां तत्र क्रियाकर्मत्वमूलक उक्तः सम्बन्धः सामीप्याद्यपि बुद्धिस्थैकदेशाधिक-रणकस्थितिक्रियाकर्तृत्वानिमित्तकामित्याद्यूह्यम्।

अतएव पर्वतस्य वृक्षा इति न। वृक्षपर्वतयोरा-

---

बोतऽआह क्रियेति द्रव्ययोरेकक्रियाकारकत्वनिमित्तकः क्रियाकार-कत्वनिमित्तकः कारकस्य तत्राद्यमाह यथेति। आद्येऽसंगतिं परिह-रति कारकेति। तमुपपादयति अत्रेति। राज्ञ इत्यादावित्यर्थः। सम्ब-न्धेति शेषसम्बन्धेत्यर्थः। विपक्षे तन्मते बाधकमाह सिद्धेति तां क्रियां। ननु तत्सत्वेऽपि कथं तयोः सम्बन्धोऽतआह क्रियाहीति। निःश्रयणी सोपानपरम्परा।

प्राचांग्रन्थासांगत्यायाहैवं चेति तां विना तयोरसम्बन्धे चेत्यर्थः। अस्तिना विवक्षितं क्रियेति मातुः स्मरणकर्मत्वे सति तन्मूलको मातृस्मरणयोर्विषयविषयिभावो निमित्तानिमित्ति भावो वास्तवत्वेने-त्यर्थः। एवं च तद्विवक्षायां न षष्ठी किन्तु तन्मूलकसम्बन्धस्यैव विवक्षायामिति बोध्यं। श्रुतायां मातुः स्मरतीति अत्र हीति पाठां-तरं। अन्यत्रापि तस्य तस्य तन्मूलकत्वमेवेत्याह सामीप्यादीति। वस्तुतः प्रदेशभेदादाह बुद्धिस्थस्यैकेति एवं दंडस्य घटः वृक्षस्य शाखेत्यादावपीत्याहेत्याद्यूह्यमिति।

अतएव तस्य तन्मूलकत्वादेवेति। तदेवाह वृक्षेति न तत्रावय-

धाराधेयभावमूलकसम्बन्धाभावात् । संयोगो हि नाधाराधेयभावमूलको विपरीतं तस्यैव तन्मूलकत्वात् । किंच संयोगो नसम्बन्धः । सम्बन्धस्य पदार्थयोजनामात्रहेतुत्वात् संयोगस्य स्वतः पदार्थत्वात् । सांसर्गिकविषयतया तस्याभानाच्च । सम्बन्धश्च षष्ठ्यादिभिरेवोच्यते । सम्बन्धपदेनापि सांसर्गिकविषयतावत्त्वेन नोच्यते इति सम्बन्धः सर्वथा पदागम्यः ।

संयोगस्तु न कदापि षष्ठ्यादिभिस्तया विषयतयोच्यते । इमौ संयुक्तावित्येव तत्र व्यवहारात् । तत्र सम्बन्धव्यवहारस्तु उभयाश्रितत्वरूपसम्बन्धधर्मवत्त्वाद्गौणः । अतएव मतुप्सूत्रे वृक्षवान् पर्वत इत्याद्यर्थं समम्युपादानं गोमान् देवदत्त इत्याद्यर्थं चषष्ठ्युपादानमिति भाष्ये उक्तम् । षष्ठ्यर्थश्च सांसर्गिकाविषयतयैव भासते अतएव षष्ठीशेषे इति सूत्रे भाष्ये राज्ञः पुरुष इत्यत्र राजा विशेषणं पुरुषो विशेष्यः इत्युक्तम् । अन्यथा सम्बन्धं विशेष्यतया विशेषणतया वा ब्रूयादिति प्राहुः ।

---

वाक्यविभावः वृक्षैः पर्वतानारम्भात् अनन्तरादिपदसमभिव्याहारं विना आनन्तर्यादीनां षष्ठ्यर्थत्वाभाव इति भावः । नन्वेवमपि वृक्षपर्वतयोः संयोगसम्बन्धोस्त्येवात आह संयोग इति । हियतः । नहि कथंचित्संयुक्तयोर्घटयोर्घटवान् घट इति भवति संयोगविशेष एव च भवति तत्र चाधाराधेयभाव एवेति भावः। इदं चतस्य तत्त्वमभ्युपेत्य ।

राज्ञः पुरुष इत्यत्र स्वस्वामिभावः षष्ठ्यर्थः सच स्वत्वस्वामित्वसमूहरूपः । यत्तु स्वामित्वं स्वत्वं वा षष्ठ्यर्थ इति तन्न तस्यैकमात्रवृत्तितया सम्बन्धत्वायोगात् । सम्बन्धो हि सम्बन्धिभ्यां भिन्न उभयसम्बन्धी । नच तदप्येकत्राश्रयतया परत्र निरूपकतयाऽस्त्येवेति वाच्यम् । निरूपकत्वस्य वृत्त्यनियामकत्वेनोभयत्र सम्बन्धत्वप्रतीत्यनापत्तेः । उक्तंच हरिणा ।

षष्ठोऽप्यसौ परार्थत्वाद्गुणेषु व्यतिरिच्यते ।
तत्राभिधीयमानश्च प्रधानेऽप्युपयुज्यते इति ॥

परार्थत्वाद्गुणानां परं प्रति विशेषणत्वेन विवक्षितत्वादित्यर्थः । अयंभावः भेदे सति विशेषणतया विवक्षितस्य सम्बन्धं विना विशेषणत्वासंभवेन तदाकाङ्क्षितत्वात्तत्र संबन्धो व्यतिरिच्यते उद्भूततया

---

वस्तुतस्तस्यतत्वमेव नेत्याह किंचेति ननु समवायस्य तत्वेऽपि तत्ववत्संयोगस्यापि तत्वं सुवचमत आह सांसर्गिकेति युक्त्यन्तरमप्याह संबंधश्चेति। चः किंचेत्यर्थे व्युत्क्रमे च। आदिना तदर्थकोपपदविभक्त्या। ननु व्यभिचारादेवासंगतिरत आह संबंधेति अपिना संसर्गपदं । तावत्वेनेति यततेति पाठांतरमतएवाग्रेतथोक्तिः। तया सांसर्गिकया। नन्वेवं सकलान्यतांत्रिकतथान्यवहारोच्छेदापत्तिरतआह तत्रेति संयोग संबन्ध इति व्यवहार इत्यर्थः। अत्र भाष्यसंमतिमप्याहातएवेति तस्यासत्वादेवेत्यर्थः । सूत्रे तदस्यास्त्यस्मिन्नित्यत्र अन्यथा तदसंगतिः स्पष्टैव ।

उक्तार्थं द्रढयन् विशेषमाह षष्ठ्यर्थश्चेति। अत एव तस्य तथैव भानादेव । अन्यथा तस्यान्यथापि भाने । विनिगमनाविरहादाह विशेषणेति एवं सामान्यतो निर्णीय तस्य विशेषोदाहरणान्याह राज्ञ इत्यादि तस्य च स्वविशेषणतानियामकत्वादिति नार्थ इत्याह गु-

प्रतीयते इति तत्रैव षष्ठी। विशेष्ये तु पदान्तरासमभिव्याहारे स्वार्थनिरूपितविशेष्यत्वेन भासमानस्वरूपस्थानिष्ठत्वादेव न विशेष्यतानियामकसम्बन्धाकाङ्क्षा। तत्र विशेषणे शब्देन षष्ठ्यादिनांशतः प्रतीयमानः प्रधानेऽप्युपयुज्यते तस्य द्विष्ठत्वस्वभावत्वाद्राजादिनिरूपितविशेष्यताया राजादिपदसंनिधाने प्रतीयमानाया उपकारको भवतीत्यर्थः।

राज्ञ इत्यादेस्तु पदान्तरसमभिव्याहारं विनाऽप्युद्ग्राह्यतत्सम्बन्धिसामान्यनिरूपितविशेषणत्वप्रतीतिरिति विशेषः। राज्ञ इति हि स्वामित्वमवगमयमानमन्यथानुपपत्त्यैव पुरुषे स्वत्वमवगमयति। अतः सम्बन्धस्य बहिरङ्गत्वात् पुरुषादन्तरङ्गा प्रथमैव। एवंच राजस्वामिकमिति ततो बोधः। अतएवाग्रे किं तदिति विशेषजिज्ञासा पुरुषादिपदैश्च तन्निवृत्तिः।

एवंच सर्वत्र संबन्धिद्वयवृत्तिधर्मसमूहः संबन्धिनोर्भेदे संबन्धः। स्पष्टं चेदं 'यस्मादधिकं यस्य चेश्वर-

---

णानामिति। नीलमुत्पलमित्यादि व्यावृत्त्यर्थमाह भेदे सतीति। तत्र विशेषणे। इतिः पूर्वार्धभावसमाप्तौ।

अथोत्तरार्धार्थं सशेषमाह तत्रेति अस्यैव व्याख्या विशेषेति। अभिधीयेति स्वरससिद्धमाह शब्देनेति तन्मात्रात्सर्वाप्रतीतेराहांशतइति। अस्यैवार्थमाह तस्येति तदसंनिधाने तदप्रतीतेराह राजादीति एतत्प्रयुक्तमेववैलक्षण्यमाह राज्ञ इति। नन्वेवं विशेष्यपदादपि कुतो न षष्ठीत्यत आह राज्ञ इति हीति फलितं तदेवाहैवंचेति। ततः राज्ञ इत्यस्मात्। अतएव सामान्यतो बोधादेव। अतएव नपुंसकोक्तिः तस्यास्तत्पूर्वकत्वनियमादिति भावः

उपसंहरति एवंचेति प्राग्वदाह सम्बन्धिनोरिति अत्र भाष्यसं-

वचन'मिति सूत्रे भाष्ये । तत्र हि अधिब्रह्मदत्ते पञ्चालाः इत्यत्रानेन ब्रह्मदत्ते सप्तम्यां पञ्चालादुद्वितीया प्राप्नोति । अधेर्द्योत्यस्य ब्रह्मदत्तनिष्ठस्य संबन्धस्य सप्तम्योक्तत्वेऽपि तदुद्योत्यस्य पञ्चालनिष्ठसंबन्धस्य तथाऽलम्प्रत्ययादित्युक्तम् । उपपदविभक्तेः कारकविभक्तिर्बलीयसीति समाहितमित्यन्यदेतत् ।

विशेष्यपदात्षष्ठीकारकयुक्त्यापि तद्वारणं बोध्यम् । अतएव स्वस्वामिभावोऽवयवावयविभावआधाराधेयभावः प्रतियोग्यनुयोगिभावो विशेष्यविशेषणभावः संबन्ध इत्यादि व्यवहारः । तत्राभावप्रतियोगिनोः प्रतियोग्यनुयोगित्वसमूहः संबन्धः । घटाभावभूतलयोस्त्वाश्रयाश्रयिभावः । एवं कालादिभिरपि ।

एवंच षष्ठ्याः संबन्धो विशेषणत्वं चार्थ इति

---

तिमप्याह स्पष्टंचेदमिति । तत्र हीत्यस्योक्तमित्यत्रान्वयः । अनेन यस्मादधिकमित्यनेन तस्यतत्त्वेन विवक्षया आह ब्रह्मेति । अधिशब्दयोगे तत्रधृता इति बुद्धिसत्त्वेन बौद्धाधारत्वसम्भवेन तदाश्रयणं वेति भावः । द्वितीया कर्मप्रेति विहिता । तदेवाहाधेरिति तत्‌द्योत्यस्य तथा सप्तम्या अन्यतरस्यैव सम्बन्धत्वे तु भाष्यासंगतिः स्पष्टैवेति भावः । तामेव द्रढयति उपपदेति । भाष्यांतराविरोधमाह विशेष्येति । तद्वेति द्वितीयेत्यर्थः । शिष्टवृद्धसंमतमपीदमित्याहातएवेति । ननु तुरीयः कयोः सम्बन्धोऽत्त आह तत्रेति तेषां मध्ये इत्यर्थः तृतीयोदाहरणमाह घटाभावेति उपसंहरति एवं चेति समूहस्य संबंधत्वे प्रधानात्प्रथमोत्पत्तौ चेत्यर्थः

अत्र द्वितीये भाष्यसंमतिं भाष्यान्तराविरोधेनाहात एवेति तस्य तदर्थत्वादेवेत्यर्थः । भानत्वमाधिक्ये हेतुस्तत्र च स्वार्थे ष्यञ् । अपिना तत्समुच्चयः । सप्तम्यन्तमात्रार्थस्यैव व्याख्या राज्ञ इति । मके-

विशेषणादेव षष्ठी अत एव राज्ञः पुरुष इत्यत्र राजपदसंनिधाने प्रतीयमानं पुरुषे विशेष्यत्वरूपमाधिक्यं वाक्यार्थः। राज्ञि प्रतीयमानं तत्प्रतिद्वन्द्विविशेषणत्वं तु पदान्तरासमभिव्याहारेऽपि राज्ञ इत्येतावन्मात्रेण प्रतीतेः षष्ठ्यर्थ इत्युक्तं षष्ठी शेषे इति सूत्रे भाष्ये। किञ्च राज्ञ इत्युक्ते तत्संबन्ध्याकाङ्क्षोत्थितया तदुत्थापकस्वामित्वादिशक्तिरपि षष्ठ्यर्थ इत्यपि भाष्ये स्पष्टम्। यदा तु पुरुषस्य विशेषणत्वविवक्षा तदा पुरुषस्य राजेत्यन्यत्र विस्तरः।

ननु मम भ्रातेत्यादौ कः षष्ठ्यर्थः एकस्माज्जन्मेति चेत् एकत्र स्थाने उषितानां पान्थानामपि सम्बन्धापत्तेरिति चेत्सत्यम्।

एकोदरशायित्वमात्रेण व्यवहारनियामकः काल्पनिकोऽवयवावयविभावः यथानयोरर्धं तृतीयमित्यादावेकप्रदेशावस्थाननिमित्तकः काल्पनिकोऽवयवावयव-

---

प्तलं तावन्मात्रमेव स इत्याह किंचेति। अपिः पूर्वसमुच्चये। भाष्ये तत्रैव। विवक्षायानिवेशस्य फलमाह यदात्विति एतेन तथा प्रयोगो न स्यादिति परास्तं तदाहान्यत्रेति उद्योतादावित्यर्थः। स्वस्वामिभावादेरसंभवादाह क इति। चेत्रोतिपाठः। संबंधापत्तेरिति एकता गमनरूपेत्यर्थः। एतद्दोषवारणायैवाहैकोदरेति। मात्रपदेन परस्परोपकारनिरासः अस्याद्यत्वनिरासायाह यथेति। इत्यदोष इतिपाठः।

अत्रसंमतिमाहेदमिति। तत्र हि अर्धतृतीया इत्यत्र। कोयं समास इति प्रक्रम्यार्धं तृतीयमेषामित्यत्र समासार्थानुपपत्तिमुक्त्वा स्वीकृते अर्धं तृतीयमनयोरित्यत्रषष्ठ्यर्थानुपपत्तिर्देवदत्तस्य भ्रातेति दृष्टांतेन परिहृता भाष्ये सर्वत्र संबंधस्य क्रियाकारकभावपूर्वकत्वमित्युभयत्रापि काल्पनिकोऽवयवावयविभावो व्यवहारनियामक इति कैयटः।

विभाव इत्यदोषात् । इदं 'अनेकमन्यपदार्थे' इति सूत्रे भाष्यकैयटयोः स्पष्टम् । एतेन सामानाधिकरण्यं न संबन्ध इति सूचितम् ।

अन्नस्य हेतोर्वसति हेतुहेतुमद्भावः षष्ठ्यर्थः हेतुशब्दोऽत्रैव तात्पर्यग्राहकः । अन्नहेतुको वास इति-बोधः । कृष्णस्य कृतिरित्यत्र कर्ता, जगतः कर्तेत्यत्र कर्म षष्ठ्यर्थः । कर्तृकर्मणोः कृतीति सूत्रात् ।

यत्त्वनयोरर्थयोर्लक्षणा बोधकं सूत्रमिति तन्न । शक्तिग्राहकत्वस्यैवौचित्यात् । लाक्षणिकार्थानुशासनस्य क्वाप्यभावात् । गङ्गायां घोष इत्यादावारोपिताधारत्वादिमतोऽप्यधिकरणादिसंज्ञेति । तत्र सप्तम्याः शक्तिरेव आधारोऽधिकरणमित्यादावारोपि-

---

संबंधत्वेन संबंधोऽसन्नपि विकल्पात्मकज्ञानविषयः पुरुषस्य चैतन्यमितिवत् षष्ठीप्रयोगनिमित्तमिति तु तत्वम् ।

परादिमतं खंडयति एतनेति उक्तरीत्या तत्र निर्वाहस्य प्रतिपादकभाष्यादिनेत्यर्थः । समेति एकाधिकरणवृत्तित्वं इत्यर्थः ।

षष्ठी हेतुप्रयोगे इत्यस्य विषयमाहान्नस्येति । वैयर्थ्यं परिहरति हेतु शब्द इति । कर्तृकर्मणोरित्यत्रस्य विषयमाह कृष्णस्येत्यादि कृष्णकर्तृका कृतिरिति जगत्कर्मकोत्पत्त्यनुकूल व्यापाराश्रयः कृष्ण इति च यथा क्रमं बोधः ।

परमतं खंडयति यत्त्विति औचित्ये हेतुमाह लाक्षणिकेति अन्यथा षष्ठी शेषे इत्यादेरपि तत्त्वानापत्तेः विनिगमनाविरहाच्च । व्यत्ययानुशासनवैयर्थ्यापत्त्या सुब्विभक्तेर्न लक्षणेति वृद्धप्रवादाच्च ननु गंगायां घोष इत्यादौ तत् दृष्टमत आह गंगायामिति । तत्र आरोपिताधारत्वादिति । ननु गौणमुख्यन्यायादिदमयुक्तमत आहाधार इति कारकप्रकरणे तन्न्यायस्याप्रवृत्तेर्ज्ञापितत्वात्

ताधारादेरपि ग्रहणमन्यत्रोक्तम्। कृत्प्रकृत्यर्थे कस्येत्येव कर्माकाङ्क्षाप्रदर्शनमनुशासनेन तत्र तस्या एव साधुत्वात्। अत एव पचन्नित्यादौ शत्रादिप्रकृत्यर्थे किमित्येवाकाङ्क्षाप्रदर्शनं षष्ठीनिषेधात्।

एतेन विजातीयाकाङ्क्षाप्रदर्शनात्तिङ्प्रकृत्यर्थकर्मत्वात्कृत्प्रकृत्यर्थकर्मत्वं विजातीयमित्यपास्तम्। कृतपूर्वी कटमित्यादौ तु कर्तृकर्मणोरिति षष्ठी। तत्र कृतीत्येतत्सामर्थ्येन कृदन्तशक्तिज्ञानसहकारेणोपस्थितकृत्प्रकृत्यर्थक्रियायाः कर्तृकर्मणोः षष्ठीति तदर्थात्। अन्यथा तिङ्योगे निषेधेन कृद्योगे एव षष्ठीसिद्धौ वैयर्थ्यं स्पष्टमेवेत्यन्यत्र निरूपितम्। प्रकृते च कृत इत्यत्र न कर्मणि क्तः। द्वितीयानापत्तेः किन्तु

---

एवंच यत्रार्थे या विभक्तिरुच्यते तत्रारोपितेऽपि साध्वीत्येवंरूपा लक्षणाऽस्त्येवेति गूढाकूतं परमतं खंडयितुं विशेषमाह कृत्प्रकृत्यर्थ इति। त्यर्थस्येति पाठान्तरं। तस्या एव षष्ठ्या एव अतएवेत्यस्यार्थमाह षष्ठीति। नलोकेत्यनेनेति भावः। यत्तु कृत्प्रकृत्यर्थस्य कर्माकाङ्क्षा कस्येत्येव तिङ्प्रकृत्यर्थस्य किमित्येवेति वैलक्षण्यनिर्वाहाय विजातीयं विजातीयंकर्मत्वं द्वितीयायाः षष्ठ्याश्चार्थः कर्मत्वत्वैक्याच्चानुगतकर्मत्वव्यवहारः इतिकेचित्

तन्मतं खंडयति एतेनेति। अनुशासनेन तत्र तत्र तथा प्रयोगस्यैव साधुत्वं नेत्यर्थः। अन्यथा षष्ठ्यां द्वितीयापदादत्वव्यवहारासंगत्यापत्तिरिति भावः। कृतीत्यस्य प्रत्युदाहरणमाह कृतेति ननु तत्रापि कृतेति कृद्योगोऽस्त्येवेत्यत आह तत्रेति कर्तृकर्मणोरिति सूत्रे यत्कृतीत्येतत्सामर्थ्येन इत्यर्थः। सामर्थ्यमाहान्यथेति उक्तार्थानंगीकार इत्यर्थः। तिङिति लादेशत्वात्। वैयर्थ्यमित्यस्य तदित्यादि। एवाचेत्तथा पाठ एव। कर्तृकर्मभ्यां क्रिया संनिधाप्यते तद्वाची च धातुरेव कारकान्वययोग्यतावच्छेदकरूपेण चसाध्यत्वेन धातु-

फलांशे आहार्यभावारोपमात्रेणास्याकर्मकत्वं स्वीकृत्य भावे कार्यः।

यद्वा कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाविवक्षयाऽकर्मकत्वाद्भावे क्तः। सच कृतपूर्वी अधीतीत्यादि वृत्तिविषय एव।

तदुक्तं भाष्ये। यदावाक्यं न तदा प्रत्ययो यदा-प्रत्ययः सामान्येन तदावृत्तिरिति, न तदा प्रत्ययः न तदा भावे प्रत्ययः सकर्मकत्वात् यदा प्रत्ययः भावे इति शेषः तदा वृत्तिरेव साच न कदापि कर्मक्तान्तेनेत्याह सामान्येनेति उक्तरीत्या कर्महीनार्थकधातुप्रकृतिकक्तान्तेनेत्यर्थः। अनेन तादृशक्तान्तस्य वाक्ये न प्रयोग इति स्पष्टमेवोक्तम्। किञ्च योऽसौ कृतकटयोरभिसम्बन्धः सामानाधिकरण्यरूपः स उत्पन्ने तद्धितप्रत्यये निवर्तते इति च भाष्ये उक्तम्। तेन-

---

भिरेव तदुपस्थितेराधिकं शेखरे द्रष्टव्यं तदाहान्यत्रेति। तत्र तद्भावं प्रतिपादयतिप्रकृतेचेति प्रत्युदाहरणे इत्यर्थः। अस्य कृतः अन्यप्रक्लृप्तत्वादिना

लाघवादाह। यद्वेति सामन्यस्य नांतरीयकतयैव विवक्षितत्वेनादोषादाह कर्मविशेषेति। अनति प्रसंगायाह सचेति भावक्तश्चेत्यर्थः। आदिग्राह्यं भावप्रकाशे। एवेन वाक्यव्यवच्छेदः। अत्र भाष्यसंमतिमाह तदुक्तमिति भाष्यार्थमाह नतदेत्यादि। सकर्मेत्यस्य धातोरित्यादिः। क्वचित्तथा पाठ एव। सर्ववाक्यमिति न्यायेनाहवृतिरेवेति। सामान्येनेति हेत्वन्तरमित्याह साचेति किंच स वृतिरित्यर्थः। उक्तेति कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाविवक्षाविशिष्टो योर्थ(१)कधात्वित्यर्थः। इयमेव कर्मण्यविवक्षा नाम। यदर्थं भाष्यमुक्तं तदाहानेनेति भाष्येणेत्यर्थः। प्रयोगानुरोधिनीहिविवक्षेति तद्भावः। न-

---

(१) कर्महीनार्थकधात्वित्यर्थः।

तद्धितेऽकृते कृतः कटः इत्येवेति ध्वनितम्। अत एव कटं क्रियते इति न ततः पूर्वं कृतमनेनेत्यर्थे पूर्वादिनिरिति तद्धिते कृते पश्चात्फलस्याश्रयाकाङ्क्षायां कटमित्यादेर्विशेषकर्मणोऽन्वयः।

एतेनासामर्थ्यात्तद्धितो न स्यादित्यपास्तम्। तदुत्पत्तिकालेऽसामर्थ्याभावात्कारकान्वयो गुणीभूतक्रियायामपि इति स्पष्टमेव। तदुक्तं हरिणा।

विशेषकर्मसबन्धे निर्मुक्तेऽपि कृतादिभिः।
विशेषानिरपेक्षोऽन्यः कृत शब्दः प्रवर्तते।
अकर्मकत्वे सत्येवं क्तान्ते भावाभिधायिनि॥
ततः क्रियावता कर्त्रा योगो भवति कर्मणाम्।
अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः॥

---

चाविवक्षितकर्मतया भावे क्तसाधनयत्नो व्यर्थः। नपुंसके भावे इत्यनेन सकर्मकेभ्योपि सिद्धेरिति वाच्यं तस्याप्यकर्मकेभ्य एवेष्टेः। अत्र चेदमेव भाष्यं मानं

कर्तृकर्मणोरित्यत्रत्य भाष्यान्तरमप्यत्र मानमित्याह किंचेति सामेति एकार्थ बोधकस्वरूप इत्यर्थः। इति भाष्ये उक्तमितिपाठः। तेन भाष्येण तद्धिते अकृते इति तद्धितवृत्तिंविनेति पाठान्तरं ध्वनितंच अतएव तद्धितं विनातदभावादेव। तेन भावक्तकरणानंतरं वृत्तिवाक्ययोः समानार्थत्वायाह पूर्वं कृतमिति कर्मणा इति विशेषरूपेणेति भावः। तत्रोक्तरीत्या वक्ष्यमाणरीत्या च षष्ठ्यभावेन द्वितीया एवं रीत्या साधुत्वेऽत्रत्यभाष्यमेव मानमिति तात्पर्यं सापेक्षत्वादाहसेति। एतेनेत्यस्यार्थमाह तदुत्पेति तद्धितोत्पत्तीत्यर्थः। वृत्तेः पूर्वंकर्मान्वयाभावादिति भावः

नन्वेवमपि क्रियाया गुणत्वेन कथं तत्र तदन्वयोऽतआह कारकेति ओदनस्य पाचक इत्यादाविति भावः। एवं भाष्यसंमते हरिसंमतिमप्याह तदुक्तं हरिणापीति अर्थमाह प्राप्ते इति। शेषमाह

संबध्यते क्रिया तद्वत्कृत्वपूर्व्यादिषु स्थितिः॥ इति। निर्मुक्ते प्राप्ते। वाक्ये इति शेषः। विशेषकर्मनिरपेक्षोऽन्यः आक्रान्तः प्रवर्तते वृत्तिघटको भवति सामान्यकर्म तु नान्तरीयकत्वादविवक्षितम्। तदाह कर्मत्वे इत्यादि। ततः वृत्तेरनन्तरं क्रियाद्वारकसंबन्धेन तद्धितार्थकर्त्रा कटमित्यादेः संबन्धः।

प्रकारान्तरमाह। अविग्रहेति। कर्तुः पृथक् ग्रहणरहितेत्यर्थः। एवंच प्रधानार्थकर्त्रा संसृष्टयापि क्रियया कारकाणामन्वय इति तदर्थः। प्रकृते कृधातुक्तप्रत्ययपूर्वशब्देनिप्रत्ययशक्तिज्ञानसहकृततद्धितान्तशक्त्यैव पूर्वकालक्रियाकर्तृणां परस्परविशिष्टानां बोधो नतु कृदन्तशक्तिज्ञानमपि तत्र सहकारि।

---

वाक्ये इति। उत्तरार्धार्थमाहविशेषेति स्पष्टत्वादाद्ये प्रतीकानुल्लेखः। नन्वेवमपि सामान्य कर्मणा सकर्मकत्वमेवात आह सामान्येति इत्यादीति एवमकर्मत्वे क्तिं भावाभिधायिनि सतीत्यर्थः। क्रियावतेत्यस्य कर्तृसमानाधिकरणत्वे वैयर्थ्यापत्तेर्वैयधिकरण्येनाह क्रियाद्वारेति तस्यैव संभवादाह तद्धितार्थेति सहेति शेषः। कर्मणामित्यस्यार्थः कटमिति। योग पदार्थः सबध्न इति अन्वय इत्यर्थः। एवंच कटादेः कर्त्रैवान्वयो न क्रियायामिति न पदार्थः पदार्थेनेति न्यायविरोध इति भावः।

एवं सत्याग्रमकारिकाया असंबद्धत्वापत्ते राह प्रकारांतरमिति। तस्यान्वयांशे एवेत्यर्थः। न विविच्य ग्रहो ग्रहणं यस्या इति शाब्दोर्थस्तत्फलितमाह कर्तुरिति। अतएव कर्त्राख्यातनिरासाय गतादिस्थेति। तत्रविशेष्य तादृशीतत्प्रतिपाद्या क्रिया यथातैः संबध्यते तद्वत्तत्रास्थितिर्मर्यादेति शाब्दः सर्वार्थस्तत्फलितमाह एवंचेति। तत्र तथांगीकारे चेत्यर्थः। एवं च तस्य क्रियायामेवान्वयो नकर्त्तरीति तस्य बाध एवेति भावः। नन्वेवमपि कृदंतशक्तिज्ञानस्यापि सहका-

अन्यत्र कृञः क्तस्य भावार्थकत्वाभावेन तदन्तमात्रस्य पृथक् पृथक् शक्तिग्रहे मानाभावात् । चतुर्णामे-कार्थीभावे द्वयोरपि सोऽस्त्येवेति नात्र कृतोऽसा-धुत्वम् ।

तण्डुलानां पाचकतर इत्यादौ तु न दोषः । तत्र पाचकादिशक्तिज्ञानसहकारेणैव समुदायादुपस्थितेः।

एतेन निष्ठान्तत्वादत्र कृद्ग्रहणाभावेऽपि षष्ठी-निषेधेन तदप्राप्तिरित्यपास्तम् । निष्ठान्तपदशक्तिज्ञा-नसहकारेणोपस्थितक्रियान्वयिनोरेव तेन निषेधात् ।

इतिषष्ठी ।

अधिकरणसप्तम्या अधिकरणत्वशक्तिमानर्थः। अ-धिकरणे सप्तमीति सूत्रात् । सा च शक्तिः कर्तृकर्म-द्वारा क्रियाश्रयनिष्ठा आधारोऽधिकरणमितिसूत्रबला-दित्यन्यत्र निरूपितम् ।

---

रित्वमस्त्येवेति दोष एवात आह प्रकृते चेति उक्तोऽर्थः । शक्त्यैव तत्ज्ञानेनैव । एवव्यवच्छेद्य मेवाह नत्विति अन्यत्र उक्तोदाहरणे

नन्वेवमेकार्थीभावाभावेन तस्यासाधुत्वापत्तिरत आह चतुर्णा-मिति निष्कृष्यैकार्थी भाव एव निमित्तमित्यस्यान्यत्र दूषितत्वादिति भावः । एवं सत्यन्यत्राव्याप्तिभ्रमं निराचष्टे तण्डुलानामिति तत्रेति पाचकादेः पृथक्प्रयोगेण तच्छक्तिग्रहस्यापि सत्वादितिभावः । अत्रेति सूत्रेति सूत्रे कृतीत्यस्याभावेऽपि कृत पूर्वीकटामित्यत्र नलो-केति निष्ठान्तत्वान्निषेधे षष्ठ्यप्राप्तिरित्यर्थः । एतेनेत्यस्यार्थमाह निष्ठांतेति । नोरेव कर्तृकर्मणोः । तेन न लोकेत्यनेन ।

* इति षष्ठी *

उपपदादिसप्तमीस्थले वक्ष्यमाणत्वादाहार्थाति प्रागुक्तसिद्धांत-मतेनाह शक्तिमानिति आधार इति कारके इत्यधिकारात् क्रिया-

तदुक्तं हरिणा।

कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम्।

उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥

इति। लोके द्रव्यगुणक्रियाविषयमधिकरण मत्र शास्त्रे कारकाधिकारात् क्रियाविषयमेव तत्। साक्षात्क्रियाश्रययोः कर्तृकर्मणोः ते संज्ञे बाधिके। अतस्तद्व्यवहितामिति।

यद्यपि कालः साक्षात्क्रियाधारस्तथापि कारकाधिकारे तरतमयोगो नास्तीति परम्परया क्रियाधारस्यापि ग्रहणम् किञ्च तस्य तत्त्वविवक्षायां कालः पचति भूतानीतिवत्कर्तृत्ववत्त्वात्। व्यवहिता मित्युक्तेऽपि असाक्षादित्युक्तिर्लोकानुसारेणान्वयोऽपि

---

जनके तत्प्रवृत्त्योपस्थितत्वादाधारः क्रियाया एव। तत्र यदाभ्यां साक्षात्क्रिया धारयोः कर्मकर्तृसंज्ञाभ्यां बाधात्परंपरा च यद्यपि प्रकरणात् क्रियया सर्वकारकाणामुपस्थित्या तत् द्वारिका प्राप्ता तथापि योग्यताबलेन व्याख्यानेनानुभवबलेन च कर्तृकर्मद्वारिकै वेति भाव स्तदाहान्यत्रेति शेखरादावित्यर्थः। अस्यार्थमाह लोके इत्यादि हलाराज इत्यंतेन। तत्र तावत् शास्त्रे इत्युक्तेः फलमाह लोके इति। निषेध हेतुमाह कारकेति। यतस्तत्रेत्यादिः नरहितपाठ शास्त्रे इत्यग्रिमान्वयि क्रियाविशेषणफलमाह साक्षादिति क्रिया धात्वर्थः। क्रियाधार इति साक्षात् क्रियापरिच्छेदकत्वेन साक्षात्तदाधार इत्यर्थः

साधकतममिति तमपा ज्ञापितमाह कारकेति असाक्षादित्यस्य पौनरुक्त्यं परिहरति व्यवेति शास्त्रे तन्मात्रविषयत्वं लोके त्रिनयविषयत्वमिति वैलक्षण्येनाह लोकेति। अपिना कारकत्वं तथाच शेषपूरणेन भिन्न विशेषणमिदमिति गूढाकूतं। ननु उक्तरीत्या क्रियासिद्धौ तयोरुपकारकत्वेऽपि नाधिकरणस्येति तृतीयपादासंगति-

परम्परयैवेति सूचनाय। कटे आस्ते स्थाल्यां पचती त्यादावधृते कर्तृकर्मणी क्रियां न संपादयत इत्यधिकरणं क्रियाधारमुपकुर्वत्तत्स्थां क्रियामुपक रोतीत्यर्थ इति हेलाराजः।

यद्यपि तण्डुलं पचतीत्यादौ धात्वर्थफलरूपकर्मद्वारा क्रियाश्रयत्वं तण्डुलादेरस्ति तथापि व्यापारजन्य फलाश्रयत्वस्य सत्त्वेन परया कर्मसंज्ञया बाधान्न दोषः। फलस्य स्वभिन्नक्रियाश्रयत्वाभावेन तण्डुलस्य सुतरां तदाश्रयत्वाभावाच्च। नच मोक्षे इच्छाऽस्तीतिवन्मोक्षे इच्छति भवति इत्यस्यापत्तिः। अन्तरङ्गत्वेन परत्वेन च कर्मत्वस्यैव प्रवृत्तेः। मोक्षे इच्छेत्यादौ प्रत्ययोपात्तेच्छाद्वारास्तिक्रियायामन्वयस्य विवक्षितत्वेनाधिकरणत्वम्। प्रकृत्यर्थसाध्येच्छाद्वारातत्रान्वये तु कर्मत्वात्षष्ठ्येव बोध्या।

---

रत आह कटे इति फलस्यापि कर्मतायाः प्राक् व्युत्पादनादाह फलरूपकर्मेति। त्वस्य तस्यापि। ननु फलस्य फलाश्रयत्वेन कर्मत्वेपि तदन्यव्यापाराश्रयत्वेन कर्तृत्वात्तद्द्वारा क्रियाश्रयत्वात्तत्वमेमेवात आह फलस्येति क्रिया च धात्वर्थभूतेति भावः। अतएव तामादाय तंडुलादेः क्रियाश्रयत्वं कर्तृद्वाराऽसंभवाद्दुर्वचमेव। आधारपदसामर्थ्येन साक्षाद्वृति नियामकसंबंधेनैव कर्तृद्वारकत्वस्य विवक्षणात् कालिकादिसंबंधस्य कालव्यवहारातिरिक्तस्थले ऽधिकरणतानियामकत्वास्वीकाराच्चेति बोध्यं

मोक्षे इति मोक्ष इच्छास्तीति वदित्यादिः। प्रागुक्तकल्पप्रकारमेवाह परत्वेन चेति नन्वेवं दृष्टांते कथं सप्तमीत्यत आह मोक्षइच्छेत्यादाविति। प्राधान्यादाह प्रत्ययोपेति। वक्ष्यमाणोपपत्तय आह विवेति नहि मामादाय कर्मत्वप्रवृत्तिस्तस्या अक्रियत्वात। तदेवाह

अधिकरणं त्रिधा । औपश्लेषिकं वैषयिकमभिव्यापकं चेति तदुक्तं हरिणा ।

उपश्लेषस्य चाभेदस्तिलाकाशकटादिषु ।
उपकारात्तु भिद्यन्ते संयोगिसमवायिनाम् ॥
अविनाशो गुरुत्वस्य प्रतिबन्धे स्वतन्त्रता ।
दिग्विशेषादवच्छेद इत्याद्या भेदहेतवः ॥

इत्यौपश्लेषिकाभिव्यापकवैषयिकेषु त्रिष्वपि उपश्लेषोऽस्त्येव उपकारः संबन्धस्तद्भेदात्तु त्रित्वेन व्यवहारः । कटे आस्ते इत्यादौ संयोगिन्याधारे कतिपयावयवव्याप्त्यैव संबन्धः । तिलेषु तैलमित्यादौ समवायिनि समस्तावयवव्याप्त्या रेव शकुनय इत्यत्राकाशस्य तात्त्विकावयवाभावात् कल्पितदेशत्वाद्वैषयिकत्वं कल्पितदेशापेक्षया चात्राप्युक्तान्यतर उपश्लेषः ।

गुरौ वसतीत्यत्र शिष्यस्य गुर्वधीनायां वृत्तौ वैषयिकाधिकरणं गुरुः उपश्लेषोऽत्र बौद्धः । युद्धे संनह्यतीत्यत्र युद्धोद्देशेन कवचादिसंनहनप्रवृत्तेर्युद्धं विषयः । गङ्गायां घोष इत्यत्र गङ्गाशब्दः सामीप्यात् देशवृत्तिरित्यौपश्लेषिकमेव तत् । अत्र गङ्गायां सामीप्याद्देशवृत्त्यधिकरणत्वारोपो बोध्यः । शत्रोरभावे सुखमित्यादौ बौद्धमेव तत ।

---

प्रकृत्यर्थेति । अन्वये तु तद्विवक्षार्थंतु । तस्याः क्रियात्वात् । एतद्भेदेनाहाधिकरणमिति हेलाराजमाहौपेत्यादिना । तत्राद्ये संयोग्युदाहरणमाह कटे इति । तत्रैव समवाय्युदाहरणमाह तिलेष्विति । अमूर्त्तत्वादाह बौद्ध इति किंचिद्भेदेनैतत्तुल्यमेवाह युद्ध इति । तत एवाह गंगायामिति । एवेनान्यव्यवच्छेदः । एवं सति ह्रस्वत्वापत्ति

उपकारादाह । अविनाश इत्यादि । अविनाशास्तिलकृत उपकारस्तैलस्य, तिलविनाशे हि तैलं विकीर्णं नश्येत् । पर्यङ्के शेते इत्यादौ शयितृगुरुत्वस्य प्रतिबन्धे पर्यङ्कस्य स्वतन्त्रेणोपकारः । खे शकुनय इत्यादौ दिग्विशेषसंबन्धात् स्वापरिवर्तनमुपकारः गुरूणा शिष्यस्य संस्कार इत्येवमादय उपकारा ऊह्या इति हेलाराजः

केचित्तु औपश्लेषिकमित्यस्योप समीपे श्लेषः संबन्धः तत्कृतमित्यर्थः । तत्र च दीयते कार्यमिति सूत्रे भाष्ये यन्मासेऽतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधिकरणमित्युक्तेः । तदस्मिन्नधिकमिति सूत्रे संहितायामिति सूत्रेच भाष्ये स्पष्टमेतत् । तत्रोपश्लेषपदाध्याहारेण सप्तमीत्यपि तत्रैव भाष्येस्पष्टम् । यत्किंचि-

---

सिद्धांतविरोधश्चात आहात्रेति । तत एवाह शत्रोरिति । गुरुत्वेत्यादिर्द्वितीय इत्याह पर्यंक इति । संबंधात् स्वापरिवर्त्तनप्रीति पाठः । लक्ष्यार्थद्वयमिदं । आद्यसंग्राह्यमाह गुरुणेति उपसंहरति एव मादय इति

एवं सति प्रसक्तभाष्यविरोधपरिहाराय सिद्धांतमाह केचिदित्यादिना तदास्मिन्निति तत्रह्येकादशाधिकरणेऽस्मिन् शते इत्यत्र शतस्याधिकरणत्वाभावात्कथं सप्तमीत्याशंक्य यद्यपि व्यापकत्ववैषयिकत्वयोरसंभवस्तथाप्यौपश्लेषिकमिदमधिकरणमेकादशकार्षापणा उपाश्लिष्टा अस्मिन् प्रांते इति शतसमीपे हि ते भवंति नतु तदन्तर्भूतास्तदंतर्भावे हि वृक्षे शाखेति वत्स्यादधिकरणत्वमित्युक्तम् । संहितेति तत्र हि इकोयणचीत्यादावौपश्लेषिके अधिकरणे सप्तमी अभ्युपश्लिष्टस्येक इतीत्युक्तं तत्राजादिसामीप्यमेवेगादीनां नन्वेवं कथमुभयत्रोपाश्लिष्टपदोक्तिरतआहतत्रेति तद्विषये सर्वत्रेत्यर्थः । तत्रैव संहितायामिति सूत्रे भाष्ये एव

दवयवावच्छेदेनाधारस्याधेयेन व्याप्तिरप्युपश्लेषः। यथा कटे आस्ते इति। एवमेव गङ्गैकदेशे तरन्तीषु गोषु कूपैकदेशे स्थिते गर्गकुले गङ्गायां गावः कूपे गर्गकुलमित्यादौ बोद्ध्यम्।

वैषयिकं तु अप्राप्तिपूर्वकप्राप्तिरूपसंयोग समवायेतभिन्नसंबन्धेन यदधिकरणं तत्। यथा खे शकुनय इत्यादि।

अन्त्यं तु यत्र सर्वावयवावच्छेदेन व्याप्तिस्तत्। यथा तिलेषु तैलं दाध्नि सर्पिरिति।

अन्त्यमेव मुख्यमधिकरणं, आचार्यः किमधिकरणं न्याय्यं मन्यते यत्र कृत्स्न आधारात्मा व्याप्त इति स्वरितेनाधिकारः, साधकतमं करणमिति सूत्रभाष्योक्तेः। अस्य न्याय्यत्वं च प्रकृत्यर्थतावच्छेदकविशिष्टे तद्भानात् नचैकदेशस्तद्विशिष्टः।

आद्ययोश्च गौणमाधारत्वं तत्रैव भाष्ये उक्तम्। अव्यवहितसामीप्यमेवाधारत्वनियामकं नतु व्यव-

---

नन्वेवं कटे आस्ते इत्यस्यौपश्लेषिकोदाहरणत्वं हर्युक्तमसंगतं स्यादत आह यत्किंचिदिति। एकदेशावच्छेदेन श्लेषेऽपि श्लषस्य समीपमुपश्लेषं तत्कृतमित्यपि व्युत्पत्तेः पूर्वापि ( समुच्चयमिदमेतदपि समुच्चेय तत् )। यत्तु गंगायां गाव इत्यादौ सामीप्याद्गौणमाधारत्वमिति कैयटादय स्तन्न वक्ष्यमाणरीत्या तत्त्वेऽपि भवदुक्तरीत्या अतत्वात्। भाष्यस्वारस्येनान्यार्थस्यैव प्रतीतेस्तदेतत् ध्वनयन्नाह एवमेवेति एतत् उभयं। यथेति अतएवोक्तहर्यादिसंगतिः। उक्तहर्यसांगत्यायाहान्त्यत्त्विति। अभिव्यापकामित्यर्थविशेषमाहात्म्यमेवेति विभक्त्यर्थान्वयस्यौचित्यात्। नच नहि। आद्ययोरौपश्लेषिकवैषयिकयोः। तत्रैव उक्तोभयसूत्रे एव

हितमिति संहितायामिति सूत्रे भाष्ये ध्वनितम् । अथ-वहितसामीप्यं गङ्गायां घोष इत्यादौ गङ्गाशब्दस्य तीरे लक्षणा तदापि गौणमेवाधारत्वं सर्वावयवावच्छेदेन तीरस्य घोषसबन्धाभावात् । कारकाधिकारे गौणाधारादीनामपि स्वरितगुणपाठेनाधिकरणसंज्ञादिबोधनात्सर्वत्र तत्र विभक्तेः शक्तिरेवेति बोध्यम् । वर्णानां सांख्यादिमते द्रव्यत्वात् संयोगवत् पूर्वपरयोर्बौद्धाधारस्याप्युपश्लेषनिरूपितस्य स्वीकारेणकोथणची त्यादावौपश्लेषिकेऽधिकरणे सप्तमीति संहितायामिति सूत्रस्थभाष्यसंगतिः । कटे शेते इत्यादौ कटाधिकरणकं शयनमित्यादिक्रमेण बोध इत्याहुः ।

परंतु अधिकरणस्य कर्त्राद्यन्वये एव कटाधिकरण-

---

नन्वेवमुकरीत्यौपश्लेषिकसप्तम्यैवोपपत्तौ गंगायां घोष इत्यादौ लक्षणोच्छेदापत्तिरत आहाव्ययेति । तेनतत्रैव तथाप्रतिपादनात् । हितं तदपि । अतएवाह व्ययेति तत्रापित्यर्थः । तत्प्रकारः प्रागुक्त एव बोध्यः । गौणत्वं तु मतद्वयेपि तुल्यमित्याह तदापीति । नन्वेवं गौणमुख्यन्यायेन तस्याशक्यत्वं स्यादत स्तमप्यग्रहणखंडनप्रकारमाह स्वरितेति । एवंच सप्तम्या गौणार्थकत्वावश्यकत्वेन प्रकृतेर्लक्षणानुचितेत्याशयेन मासातिक्रमे तत्समीपकाले वस्त्वाधिकरणत्वं मासस्यैवोक्तं भाष्ये गौणमुख्यसाधारण्येन च त्रेधा विभागो भाष्ये इति बोध्यम् ।

नन्वेवमप्यलादेस्तदाधारत्वासंभवेन तद्भाष्यासंगतिरेवात आह वर्णानामिति । शयनमिति स्ववृत्तिकर्तृकत्वसंबन्धेन मोक्षवृत्तिरिच्छाकर्तृका सत्ता । सर्वमेवं सिद्धांतत्वेपि दीक्षितभूषणादिसंमतम् ।

अत्रांशे केचिदिति सूचितामरुचिं प्रकटयन् तदंशेपि सिद्धांतह परेत्विति आदिना कर्म । एवेन क्रियाव्यवच्छेदः नन्वेवं कारकाधिकारपाठासंगतिरत आह तद्द्वारेति । सिद्धान्ताभंगमप्याह का-

कचैत्रकर्तृकं शयनमित्यादिरीत्या बोधः । तद्द्वारकमे-वास्य क्रियान्वयित्वं कारकाणां भावनान्वयव्युत्पत्तिर-प्येतच्छास्त्रबलादिदृशपरम्परान्वयविषयापि । अत एवाक्षशौण्ड इत्यादौ समासः । अतएव भाष्ये तत्रासामर्थ्यशङ्का न कृता । एवंचावान्तर्भूतक्रियाद्वारा सामर्थ्यमिति कैयटादयश्चिन्त्या एव। अक्षशौण्डो अक्षप्रवीण इत्यादौ दध्योदनादाविव क्रियान्तर्भावेण बोधस्याननुभवात् । अक्षविषयप्रावीण्यवानित्येव प्रतीतेः। ध्वनितं चेदं हरिणान्येऽपीत्युक्तमित्याहुः ।

मूले वृक्षः कपिसंयोग्यस्तीत्यादावव्याप्यवृत्तिधर्मवत्कर्तृकक्रियासमभिव्याहारे मूलाधिकरणककपिसंयोगविशिष्टवृक्षकर्तृका सत्ता इति बोधेऽन्यत्रावयवे तद्विशिष्टवृक्षाभावप्रतीतेः । कपिसंयोगे तदवच्छेद्यत्वं फलतीति बोध्यम् ।

शिरसि वेदनेत्यादावव्च्छेदकतासंबन्धस्याप्याधारतानियामकत्वान्न दोषः। ग्रामं प्रविशतीत्यादौ कर्म-

---

रेति । अनतिप्रसंगायाह एतदिति । अत्राभीष्टसिद्धिमाहातएवेति । तस्य कर्त्रादावन्वयादेव । तत्राक्षशौण्ड इत्यादौ । ध्वनितं असाक्षादित्यनेन उक्तं हेलाराजेन ।

यत्तु नैयायिकाः मूल इत्यादौ अवच्छेद्यताविशेषोप्याधारसप्तम्यर्थः चकारेण सप्तमी वेति। तन्नेति ध्वनयन्नाह मूले इति सत्तायाः स्वकर्तृकापिसंयोगिवृक्षद्वारा मूलवृत्तित्वादाधारत्वमित्याह मूलाधीति । तदिति कपिसंयोगेत्यर्थः । अश्रूयमाणत्वे क्रियाया अध्याहारादिकं प्रागुक्तमेव बोध्यम् ।

नन्वेवमपि शिरसि वेदनेत्यादौसंयोगसमवायादिरूपसंबंधस्याधारतानियामकस्याभावात्कथं सप्तमीत्यत आह शिरसीतिमादिना

णो ग्रामस्य न कदाप्यधिकरणत्वम्। परया कर्मसंज्ञया बाधात्। कर्मद्वारा क्रियाश्रयत्वविवक्षायाः संयोगरूपफलाश्रयत्वं विनाऽसंभवात्। एवं ग्रामं गच्छतीत्यादावपि। इदं चाकडारसूत्रे हृद्युभ्यांचेत्यत्र च भाष्ये स्पष्टम्।

अधीती व्याकरणे अत्र कर्म सप्तम्यर्थः क्तस्येन्विषयस्य कर्मण्युपसंख्यानमिति वार्तिकात्। अत्रापि कृतपूर्वीवत् भावक्तान्तात् अधीतशब्दादिष्टादिभ्यश्चेति इनिः। व्याकरणकर्मकाध्ययनकर्तेति बोधः।

चर्मणि द्वीपिनमित्यादौ फलं सप्तम्यर्थः। चर्मणः

---

वीणायां शब्दः कर्णे शब्द इत्यादि। अतिप्रसंगं निराचष्टेग्राममिति। ननु तत्र तत्त्वमेव विवक्षितं न तत्त्वमिति कथं बाधोत आह कर्मद्वारेति। इदंचेति तत्रत्याद्ये अधिकरणसंज्ञां कर्मसंज्ञा बाधते गेहं प्रविशतीत्युक्तं। द्वितीये हृदिस्पृगित्यादौहृद्युभ्यांचेति ज्ञापकात्सप्तमी साधिता। यदा तु संयोगसमानाधिकरणो व्यापारो गम्यर्थस्तदा कर्मत्वाप्राप्त्या भवत्येव सप्तमी ग्रामे गच्छतीति। एतदभिप्रायेणैव क्व गतः क्व गच्छतीत्यादयः प्रयोगाः। हृदिस्पृगिति तु हृदयवृत्तिसंयोगोद्देश्यकस्पर्शकर्त्रे तीक्ष्णमिति दिक्।

कस्येन्निति इनो विषयस्येन्प्रकृतेः क्तांतस्येत्यर्थः तेन कृतपूर्वी कटमित्यत्र नाप्राप्त न। कर्मणि क्तः अनभिहितत्वेन सप्तम्यनापत्तेः किंतु भाव तदुपपत्तिमाहाधीतीति। इनिः कर्त्तरि श्राद्धमित्यतोऽनेनेत्यस्यानुवृत्तेः। अधीतवान् व्याकरणमित्यादाविव गुणभूतक्रियायामपि कारकान्वयः अत्र कर्मशब्देन कालादिभिन्नमेव व्याख्यानात्तु तेन मासमधीती व्याकरणे इत्यत्र नेतिकैयटः।

निमित्तवाचकात्सप्तमी भवति तस्य निमित्तस्य प्रत्यासत्त्यास्वान्वयिक्रिया कर्मणा योगे इत्यर्थकस्य निमित्तात्कर्मयोगेइत्यस्य विषयमाह चर्मणीति। निमित्तं च अत्र क्रियाफलमित्याह फलमिति

फलत्वं च हननक्रियायास्तद्धाभादिविषयकेच्छाधीन-त्वादिति बोध्यम् ।

ब्राह्मणेष्वधीयानेषु गतः, गोषु दुह्यमानासु गतः इत्यत्र यस्य च भावेन भावलक्षणमिति सूत्रेण सप्तमी । यस्य भावेन क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमीति तदर्थः । गोपददुह्यमानादिपदयोरुभयोरपि तद्वाचकत्वादुभाभ्यामपि सप्तमी । निर्ज्ञातदेशकालक्रियया अनिर्ज्ञातदेशकालक्रियायाः संबन्धिदेशकालपरिच्छेदकत्वेन लक्षणमितिबोध्यम् ।

एतेन भूयोदर्शनाश्रयत्वात् ज्ञाप्यज्ञापकभावस्योदिते आदित्ये तमो नष्टमित्यादावेव स्यात् । नत्वत्र कदाचिद्धि गोषु दुह्यमानास्वसौ गत इत्यपास्तम् । तत्र काचित्क्रिया स्वाधारकालेनान्यां परिच्छिनत्ति यथा गोषु दुह्यमानास्वित्यादौ काचित्तु स्वाधारकालाव्यव-

---

ननु हननफलत्वं प्राणवियोगेन चर्मादावत आह चर्मणीति कर्मसम्बन्धश्च स्वरूपसन्नेव निमित्तं न सप्तम्यर्थ इति बोध्यम् ।

कर्त्तर्याह ब्राह्मणेष्विति । कर्मण्याह गोष्विति । भावः क्रियेत्याह-क्रिययेति । अर्थादाह क्रियान्तरमिति। ततः ज्ञापकक्रियाश्रयवाचकात् तत्फलमाह गोपदेति। तदाश्रयः कर्त्ता कर्मचेति भावः। एतेन नीलं घटमित्यादिवद्विशेषणानां विशेष्यसमानतन्त्रत्वादुदुह्यमानादिपदेभ्योऽपि विभक्तिरिति नैयायिकोक्तमपास्तं ।

ननु ज्ञापकभावो भूयो दर्शनाश्रयो दृष्टो यथाग्निधूमयोर्नैवं प्रकृतेऽति कथमिदमुदाहरणमत आह निर्ज्ञातेति । तथाच देशादिपरिच्छिन्नत्वेन ज्ञापकत्वमेवात्र लक्षणत्वमितिभावः । एतेन तथा लक्षणत्वस्याश्रयणेन । निषेधे हेतुमाह कदेति । हि यतः । विशेषमाह तत्रेति ज्ञापकक्रियाणां मध्ये इत्यर्थः । ननु प्रसिद्धज्ञापकत्वत्यागः कुतोऽतआ

हितपूर्वकालेन यथा गोषु धोक्ष्यमाणास्वित्यादौ । काचित्स्वाधारकालानन्तरकालेन यथा गोषु दुग्धास्वित्यादौ ।

ज्ञापकत्वंच तस्यच्छब्दबोध्यत्वेन विवक्षितमेवैतच्छास्त्रप्रवृत्तौ निमित्तं नतु तस्य मानान्तरेण नियमतो ग्रहणापेक्षेति नेदं भूयोदर्शनाश्रयं । देशोदाहरणं सति गुणे द्रव्यत्वमस्ति इत्यादि । ज्ञाप्यज्ञापकभावः सप्तम्यर्थः । अस्यच्च क्रियायामेवान्वयं साधुत्वम्, उक्तसूत्रात्

अत्राधीयानानां ब्राह्मणानां दुह्यमानानां च गवां शब्दतः प्रतीयमाने लक्षकत्वं विशेषणी भूताध्ययनादिक्रियाकालद्वारकं विश्राम्यति । अधीयानब्राह्मणज्ञापक(१) गमनाश्रयो दुह्यमानगोज्ञापकगमनाश्रय इति क्रमेण बोधः । गोषु धोक्ष्यमाणास्वित्यादौ भवि-

---

ह ज्ञापकत्वंचेति । कारकविभक्तीनां विवक्षामूलकत्वादिति भावः । मानांतरेणेति भूयोदर्शनादिरूपेणेत्यर्थः

तत्सत्वेपीष्टापत्तेराह नियमत इति । अनेन तदुदाहरणस्यापि संग्रहः तत एवाह नेदमिति प्रकृतसूत्रीय ज्ञापकत्वमित्यर्थः । ज्ञाप्येति तत्र प्रकृत्यर्थस्य स्ववृत्तिसमभिव्याहृतपदस्यक्रियाद्वारकसबन्धेनान्वयः । अत एवास्य क्रियायामेवान्वयः । भावलक्षणमित्युक्तितः क्रियाद्वारकसंबंधेन यन्निष्ठलक्षकतानिरूपितं लक्ष्यत्वं क्रियांतरनिष्ठं ततः सप्तमीति लब्धसूत्रार्थानुरोधात् इति भाव स्तदभिप्रेत्याहास्यचेत्यादि ज्ञापकत्वस्येत्यर्थः । अत एवं सति । एतेन यद्विशेषणकृदंतार्थविशेषणभूतक्रियया क्रियांतरस्य लक्षणं व्यावर्तनं तद्वाचकपदात्सप्तमीतिसूत्रार्थः समानकालीनत्वादिकमात्रं सप्तम्यर्थः । तत्र दुह्याद्युपस्थितदोहनादेर्निरूपकत्वेनान्वयाद्दोहनसमानकालीनत्वादिकं गमनादौ लक्ष्यत इति न युक्तं दुह्याद्युपस्थितक्रियायाः कृदर्थविशेषणतयोपस्थितायाः

---

(१) अधीयाना ब्राह्मणा ज्ञापका यस्य गमनस्य तदाश्रय इत्याद्यर्थः ।

ष्यद्दोहनादेरपि बुद्ध्युपारूढस्य स्वपूर्वकालादिद्वारकं ज्ञापकत्वं बोध्यम् ।

इदं सूत्रं यत्र मानान्तरासिद्धस्यार्थस्य कालविशेषसंबन्धादिप्रतिपादनाय प्रयोगः तत्रैव प्रवर्तते तथैव सूत्रभाष्यस्वरसात् ।

विवाहे नान्दीमुखं कुर्यादित्यत्र विवाहपदेन तत्प्राक्कालो लक्ष्यते । अधिकरणे सप्तमी । राहूपरागे स्नायादित्यादौ राहूपरागपदेन तदाश्रयः काल उच्यते । गवां दोहे आगत इत्यत्राप्येवमेव । अवच्छेदकावच्छेदेनान्वयस्यौत्सर्गिकत्वाद्राहूपरागकालावच्छेदेन स्नानविधाने तस्य निमित्तत्वं फलति । एवमेवाङ्गादिदेशगमनस्य पुनः संस्कारनिमित्तता ।

---

समानत्वादिविशेष्यत्वासंभवात् प्रकृत्यर्थगवादिनाऽनन्विताथस्य सप्तम्या बोधनासंभवाच्च किंतु समभिव्याहृततदोहनादिक्रियैव सप्तम्यर्थः । तस्याश्च समानकालीनत्वादिकं क्रियांतरसंबंध इति नैयायिकोक्तमपास्तं तथा बोधानुभवात् सूत्रस्वरसविरोधाच्च ।

ननु भविष्यद्दोहनादेरसत्त्वात्कथं ज्ञापकत्वमत आह बुद्धीति । अत एव जले पीते तृषा शाम्यतीत्यादावतीतार्थकक्तसमभिव्याहारे कार्यकारणभावबोधो मानसः । एतेन तत्र सोऽपि संबन्धतया भासत इति तदुक्तमपास्तं ।

परमतं खण्डयितुं विशेषमाहेदं सूत्रमिति सिद्धस्य ज्ञातस्वरूपस्य । नन्वेवं क्वचित्सप्तमी न स्यादत आह विवाहे इति । एतेन करिष्यमाणे इत्यध्याहार इत्यपास्तं बहुव्रीहिणा शक्तिसंभवादाहोस्यते इति सप्तमी सैव । एवमेव लक्षणयाधिकरणसप्तम्येव । एतेन नचैवं गवां दोह इत्यादौ दोहशब्दात्सप्तम्यनापत्तिर्गोशब्दाच्च तदापत्तिरिति वाच्यं सतीत्यध्याहारेण दोहकर्तृकसत्ताया लक्षणत्वेनाक्षतेरित्यपास्तं महार्घं मध्यमे तस्य तत्र सप्तम्यभावेन तदनुपपत्तिः स्पष्टैव । तथाचोक्तं

सिंधुसौवीरसौराष्ट्रांस्तथा प्रत्यंतवासिनः
अंगवंगकलिंगाद्यान् गत्वा संस्कारमर्हति । इति ।

यत्तु राहूपरागपदं तत्काल क्षकं सतीत्यध्याहाराभावेनेति सप्तमी । राहूपरागादेर्निमित्तत्वं तु सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपदिश्यत इति न्यायेन फलतीति ।

तन्न प्रवर्तनारूपविधिविषयत्वं क्रियाया एव न द्रव्यादेरिति दध्ना जुहोतीत्यादौ दध्नः कथं विधेयत्वमित्याशङ्कानेन न्यायेन विधेयत्वमुक्तं न्यायविद्भिः । सिद्धं साध्यायोपदिश्यते इत्यस्याज्ञातं ज्ञाप्यते इत्यर्थश्च व्याख्यातः । एवच तेन न्यायेन द्रव्यस्याज्ञातज्ञाप्यत्वरूपं विधेयत्वं स्वक्रियोपरागेण च प्रवर्तनाविषयत्वमुक्तमिति प्रकृते तन्न्यायविषयाभावात् । स्नानस्य मानान्तरप्राप्तेरेतत्सूत्राप्राप्तेश्च । राहूपरागस्य निर्ज्ञातकालत्वाभावाच्च ।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।

इत्यत्र परं हिरण्यगर्भादि अवरं यस्य तत्र ब्रह्मणि दृष्टे तद्विषये दर्शने दर्शनोत्तरकाले कर्मादिक्षय-

---

परमतं खण्डयति यत्त्विति निषेधे हेतुमाह प्रवर्तनेत्यादिना विषयाभावादित्यंतेन । इदमंत्यदूषणं परीत्यवेत्याहन्यायेति जैमिन्यादिभिरित्यर्थः । शंकितं तु न साक्षादित्याह स्वेति । विषयेति विषयत्वेत्यर्थः । ननु तैस्तथोक्तत्वेऽपि संभवादयमपिन्यायार्थोऽस्त आह स्नानस्येति । आद्ये दोषोऽयमेकः । स्वरीत्यादोषांतर माह राहूपेति

एवमन्यत्रापि सतीत्यध्याहारेण सप्तमीति सूचयन्नाह भिद्यते इति । परावरे इति विषयसप्तमी दृष्टे इत्यत्र भावे निष्ठा । लक्षणोक्तकाले सप्तमी प्राग्वदित्याह तद्विषये इत्यादि । अवांतरभेदेनोपादानेपि सर्वत्र क्षयस्यैव विवक्षितत्वात् व्युत्क्रमेणाह कर्मादिक्षय इति । कर्मण्यसंभ-

इत्यर्थः । क्षीयन्ते इत्यादौ कर्मकर्तरि रूपं कर्मस्थ क्रियारूपस्य शरीरादिगतावयवापचयरूपक्षयादेः कर्मस्थारोपात् हृदयग्रन्थिशब्देनाविद्यारागभयद्वेषशोकवासनाः ।

यद्वा दर्शने(१)इति चर्मणि द्वीपिनमितिवत्सप्तमी तेन तद्दर्शनार्थं तदपरोक्षार्थं तत्परोक्षज्ञानादविद्यादीनां शिथिलीभावो भिद्यते इत्यादिनोच्यते । व्याख्याद्वयमपि शांकरभाष्यादिषु स्पष्टम् ।

रुदति रुदतो वा प्राव्राजीदित्यत्र ज्ञाप्यज्ञापकभावः षष्ठीसप्तम्योरर्थः । धातोश्चानादरविशिष्टं प्रव्रजनमर्थः । अत्र षष्ठ्यादि तात्पर्यग्राहकं अनादरश्च प्रत्यासत्त्या पुत्रादिविषयक एव । वैशिष्ट्यं च सामानाधिकरण्यस्वोत्तरकालिकत्वा-

वादाह क्षीयंत इति । मुख्यासंभवादाह हृदयेति । स्वसिद्धान्तेनाहाविद्येति । तत्र निमित्तं फलमित्याह तेनेति । तेन सप्तमीकरणेनेत्यर्थः । अस्यैव व्याख्या तदर्थेति अर्थाद्योग्यतया आह परोक्षेति । परस्परविरोधमपि सूचयन्नुक्तार्थं द्वयं समूलयति व्याख्येति । आदिना भामतीकल्पतर्वादि द्युभ्वाद्यायतनाधिकरणे इति शेषः । 'तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशा'विति सूत्रे इयं श्रुतिर्ज्ञानिनः कर्मक्षये प्रमाणत्वेन भाष्ये उपन्यस्तेति बोध्यं ।

षष्ठीचानादर इत्यस्य विषयमाह रुदतीति । सूत्रेऽनादरे इति विषयसप्तमी । पूर्वसूत्रमनुवर्तते । तस्मिन्नास्ये यस्य क्रियया क्रियांतरं लक्ष्यते ततः षष्ठीसप्तम्यावित्यर्थः । इत्यत्रइत्यत्रापि । अत्र लक्षणायां । तत्रेति पाठां तरं । अनादरस्य प्रव्रजनाविषयत्वादाह सामेति पुत्रैषणादित्यागस्य तद्धेतुत्वादाह स्वोत्तरेति स्वमनादरः । एवं च तत्का-

(१) पद्यस्थ 'दृष्टे' इतिपदाभिप्रायेण दर्शने इति पदं बोध्यम् ।

भ्याम् । एवंच रोदनकर्तृपुत्रादिज्ञाप्यमनादरविशिष्टं प्रव्रजनमिति बोधः ।

नराणां नृषु वा द्विजः श्रेष्ठः इत्यादौ यतश्च निर्धारणमिति सूत्रेण षष्ठीसप्तम्यौ । यतः स्वेतरेभ्यः स्वघटितसमुदायघटकेभ्यो व्यावृत्तेन धर्मेण समुदायादेकदेशस्य जातिगुणक्रियासंज्ञाविशिष्टस्य पृथक्करणरूपं निर्द्धारणं ततः षष्ठीसप्तम्यौ स्तः इति तदर्थः । पृथक्करणं च व्यावृत्तधर्मप्रकारकज्ञानविषयीकरणं अस्तिच नराणां विप्रः श्रेष्ठ इत्यादौ विप्रत्वादि विशिष्टस्य विप्रघटितनरसमुदायघटकविप्रेतरव्यावृत्तश्रेष्ठत्ववत्तया प्रतीतिः । एवंच निर्धारकधर्मनिर्धारणावध्योर्व्यावृत्तत्वाख्यः संबन्धो निर्धारणविभक्तेरर्थः ।

नरादिपदं च सामान्यरूपेण विप्रतादितरनरादिघटितसमुदायोपस्थापकं तव्द्यावृत्तश्रेष्ठत्ववानिति क-

---

लिकप्रवजनेनेति भावः । तत्रादौ वृत्तिकृन्मतमाह यत इत्यादि केचिदित्यंतन ।

यत इत्यस्यार्थः समुदायादिति । स्वघटितसमुदायादित्यर्थः । पृथक्करणेऽन्वयोऽस्य । व्यावृत्तेति स्वेतरेत्यादिः । एवंच स्वेतरयद्धर्मावच्छिन्नव्यावृत्तधर्मवत्वं जात्यादिविशिष्टस्य प्रतिपाद्यं तद्धर्मावच्छिन्नवाचकात् षष्ठी सप्तम्याविति फलितं निर्धारकधर्मः श्रेष्ठत्वादिः । यत्तु नरादिपदस्य विप्रेतरनरादौ लक्षणा । सामान्यरूपेणापि विशेषभाने तत्स्वीकारादिति तन्नेति ध्वनयन्नाह नरादीति । सच संबन्धो भेदान्वयिविधेयसमभिव्याहारस्थले विधेयतावच्छेदकेन बुध्यते त॰, इ तद्व्यावृत्तश्रेष्ठत्वेति भेदान्वाय तत्स्थलं च विधेयेनैव व्युत्पत्तिवैचित्र्यात् तदाह नराणामिति क्षात्रेयेतरेति क्षात्रयतादतरेत्यर्थः ।

सिद्धांतमतेनाह वृत्तशौर्यमिति । विशेषमाहोद्भूतेति क्षत्रियैतद्विषय इति पाठः । वाह्विति एकवचनान्यवचनमेवेत्यर्थः । अतएव ज-

भेण बोधः। नराणां क्षत्रिये शौर्यं मित्यत्र क्षत्रियेतर-नरघटितसमुदायव्यावृत्त क्षत्रियवृत्ति शौर्यमिति बोधः। उद्भूतावयवभेदविवक्षया तद्विषये बहुवचन-मेव साधु। स्पष्टं चेदं कारके इति सूत्रे भाष्ये। तत्र हि निर्धारणं कारकेष्विति ब्रूयादित्युक्तम्। भिदचोन्त्या-दित्यादिस्तु सौत्रः प्रयोगः। द्वन्द्वः सामासिकस्य चे त्यत्र समूहेऽचित्तेति ठक्। समाससमूहस्य मध्ये ऽहं द्वन्द्व इत्यर्थ इति केचित्।

परे तु अत्र न सूत्रस्वारस्यं न निर्धारणे इति सूत्रेण निर्धारणस्य विभक्त्यर्थघटकत्वबोधनात्। तस्माद्यतश्च सजातीयघटितसमुदायादेकदेशस्य जात्यादिभिः पृथ-करणरूपं निर्धारणं ततः षष्ठीसप्तम्यौ इत्यर्थः सूत्र-स्य। निर्धार्यमाणनिर्धारणावध्योः परस्परमन्वयः। नि-र्धारणावधिस्वेतरसमुदायघटकव्यावृत्तकरणकनिर्धा-रणविषयविषयिभावरूपोऽवयवावयविभावरूपश्च स-म्बन्धो विभक्त्यर्थः नृसमुदायावधिकद्विजेतरनृव्यावृत्त-श्रेष्ठत्वकरणकनिर्धारण विषयो नृसमुदायावयवो

---

लपृथिव्योरिति वक्ष्यमाणविरोधो न। एवेन तिरोहितावयवभेदविव-क्षयैकवचननिरासः। तदेवाह स्पष्टमिति निर्धारणे तत्र सप्तम्यां तदाशयमाह भिदिति। एवं सति गीतावाक्यगतिमाह द्वन्द्व इति तथा च मध्ययोगे इयं षष्ठी नेयमिति न दोष इति भावः। केचित् वृत्तिकृतः।

अत्रारुचिं प्रकटयन् सिद्धांतमाह परेत्विति। अत्र उक्तार्थे सूत्रं च न प्रकृतमित्याह ननिर्धेति। अन्यस्यापि सत्वादाह घटकत्वेति स्वे-ति स्वं विप्रादि च सजातीयं चक्षत्रियादि तदघटितेत्यर्थः। साजा-त्यं च सामान्यरूपेण।

द्विजः श्रेष्ठ इति बोधः। संसर्गघटककरणं च श्रेष्ठत्व-रूपमेव प्रत्यासत्तेः। नृणां मध्ये द्विजः श्रेष्ठ इत्यादौ तु मध्ययोगे षष्ठी। न इयम्। नृषु मध्ये इत्य-साध्वेव। नृसमुदायमध्यवर्ती द्विजः श्रेष्ठ इति बोधः। श्रेष्ठत्वादौ द्विजतरनराद्यवृत्तित्व बोधस्तु मानसो देवदत्तो वामेनाक्ष्णा पश्यतीत्युक्ते दाक्षिणेन न पश्यतीतिवत्। गोमण्डले वर्तमाना या कृष्णा गौः सा बहुक्षीरेत्याधारसप्तमीघटितवाक्येऽप्युक्तन्यायेन तथा-प्रतीतिः

ननु जलपृथिव्योर्जलं स्नेहवदित्यादौ जलमिश्रयोर्जलपृथिव्योरप्रसिद्धेर्जलपृथिव्युभयव्यावृत्तत्वस्य स्नेहे बाधेन च निर्धारणासंभव इति चेन्न। तत्रा-

---

अस्य सूत्रस्य प्रकृतपूर्वतो भेदमाह निर्धार्यमाणेति विप्रादीत्यर्थः। निर्धारणावधित्वं समुदायान्वयि। स्वतरेति पूर्ववत् घटकश्चार्थात्स्वेतर एव। करणकेति इदमेव पृथक्करणं तद्रूपं यन्निर्धारणं तद्विषयेत्यर्थः। निर्धारणावधीत्यनेन पृथक्करणे स्वघटितसमुदायावधिकत्वं लब्धं तदाह नृसमुदेति। ननु बोधे संसर्गमध्ये कथं श्रेष्ठत्वस्य तदनुक्तस्योक्तिरत आह संसर्गेति श्रेष्ठत्वरूपमेव तदादिरूपमेव क्वचित्तथैव पाठः। विशेषं प्रागुक्तोपपत्तये आह नृणामिति। एतेनास्य तदर्थत्वमबुधोच्यमानमपास्तं। मध्ये इत्यनव्यय मित्याह मध्येति।

एवं रीत्या संभावितप्राचोक्तं खंडयति। तद्योगे षष्ठ्या एवोचित्यादिति भावः। अत एव तद्बोधमाह नृसमुदायेति तत्राप्युक्तसमानार्थकत्वमार्थिकं नतु शाब्दमित्याह श्रेष्ठत्वादाविति। तत्र बीजं ध्वनयन्नाहदेवेति एतस्यान्यत्राप्यावश्यकत्वमित्याह गोमंडलं इति। तथेति बहुक्षीरत्वादौ कृष्णेतरगव्याद्यवृत्तित्वबोध इत्यर्थः। समूहो नातिरिक्तः। द्वन्द्वे च तत्र वर्तिपदार्थस्य प्राधान्यमिति प्राचीनमताशयेनाह नन्विति। तस्यातिरिक्तत्वमिति समाधत्ते तत्रापीति तदिति-समूहेत्यर्थः।

षि समूहे जलभेदस्य तद्व्यावृत्तत्वस्य स्नेहे चाबाधात्। समूहावयवयोश्च भेदाभेदाविति न पञ्चमीविभक्ते इत्यस्यात्र प्रवृत्तिः। इतरेतरद्वन्द्वेऽपि समूह एव विशेष्य इत्यग्रे वक्ष्यते।

एतेन सांकाश्यकानां पाटलिपुत्रकाणांच पाटलिपुत्रका अभिरूपतमा इत्यादिभाष्यप्रयोगो व्याख्यातः। तत्समूहे पाटलिपुत्रभेदसत्त्वेन वस्तुतोऽवयवाभेदस्यच तत्र सत्त्वेन पञ्चम्यप्राप्तेः समुदायोऽवयवेभ्यो भिन्नाभिन्न इति(१)सिद्धान्तात्। निर्धारणावधिनिर्धार्यमाणनिर्धारणहेतूनां संनिधाने एव निर्धारणप्रतीतिरिति तत्रैव निर्धारणविभक्तिः। समासनिषेधश्च। तेन पुरुषाणामुत्तम इत्यादौ शेषे षष्ठीति पुरुषोत्तम इत्यादौ समासो भवत्येवेति द्विवचनविभज्योपपदेति सूत्रे कैयट इत्याहुः।

माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यत्र निर्धार्यमाणनिर्धारणावध्योर्भेदस्यैव सत्त्वेन पञ्चमी विभ

---

नन्वेवमपि समूहभेदस्य जले सत्त्वेन पंचमीविभक्त इति पंचम्यापत्तिरेवातआह समूहेति। ननु समाहारे तस्य तत्त्वेपि नेतरेतरद्वन्द्व इति तद्दोषतादवस्थ्यमेवात आहेतरेतरइति। अपिना तत्समुच्चयः। अग्रे द्वन्द्वप्रकरणे। चार्थे इतिसूत्रबलादितः। एतेनेत्यस्यार्थमाह तदिति उभयेत्यर्थः। उक्तमेव दार्ष्टान्तिकमाह समुदाय इति। वाक्ये चकारस्य द्योतकत्वे तदर्थसाहित्यस्य विशेषणत्वेपि उभयपर्याप्तसाहित्यावच्छिन्न पाटलिपुत्रभेदस्य सत्त्वेन साहित्याश्रयाभेदस्य च तत्र सत्त्वेन षष्ठ्येवेति भावः।

अत्र सिद्धांततत्त्वमाहनिर्धारणावधीति। तेन तदभावेनैतदप्रवृत्तिरूपहेतुना। कैयट इति सूचितारुचिबीजं तु उत्तमः पुरुष इति गी-

---

(१) समुदायोऽवयवाभिन्न इति सिद्धान्तात्। इति पाठान्तरम्।

क्ते इत्यनेन पञ्चमी । अत्र निर्धारणावधिभ्याधृत्तकरणकनिर्धारणविषयविषयिभावरूपः संबन्धः पञ्चम्यर्थः। पाटलिपुत्रकावधिकनष्ठावृत्ताढ्यतरत्व करणकनिर्धारणविषया माथुरा आढ्यतरा इति बोधः।

भाष्य कृतस्तु माथुरपाटलिपुत्रकयो राढ्यत्वेन साम्यं ज्ञातवान् एतत्प्रयुङ्क्ते तत्र बुद्धिकृतभेदरूपाविश्लेषसत्वेन विभक्ता इत्यध्याहारेण अपादाने एव पञ्चमी। विभक्तं भेदः। पाटलिपुत्रकावधिकभेदवन्तो माथुरा आढ्यतरा इति बोधः। भेदप्रयोजकं चाढ्यतरत्वमेवोपस्थितेः। गवां कृष्णेत्यादौ तु संपन्नक्षीरत्वे ज्ञातेऽपि गोत्ववत्ताबुध्यनिवृत्तेर्न विश्लेषप्रतीतिः। अत्र नामार्थान्वयविवक्षया षष्ठी तु न भवति अनभिधानात्। एवमपादानत्वाविवक्षाया म-

---

तोक्तेस्तत्र कर्मधारय एवेति तत्त्वमिति। निर्धारणे सर्वत्र यथाकथंचिद्भेदस्य सत्वेन विभक्तग्रहणसामर्थ्याद्यत्र भेद एव नतु केनाप्युपात्तरूपेणाभेदस्तत्रैवास्य प्रवृत्तिरित्याह भेदस्यैवेति। ननु भेदो न सूत्रारूढोऽतआह विभक्तं भेद इति भावे निष्ठा। पूर्वत्रानुवृत्त्या निर्धार्यमाणस्य निर्धारणावधेर्भेदेन यतो निर्धारणं ततः पंचमीत्यर्थस्तदाह प्रत्याहात्रेति प्रागुक्तसिद्धांत मतेनाह निर्धारणेति विषयभावेति विषयत्वरूप एवेत्यर्थः। एवेन प्रागुक्तद्वितीयनिरासः प्रागुक्तरीत्यैवाह पाटलीति। एवं सूत्र मतमुक्त्वा प्रत्याख्यानप्रकारमाह भाष्येति। ज्ञातवान् त्येतादितिपाठः। कृतभेदेति तत्कृतसंबंधाभावरूपभेद रूपेत्यर्थः सत्वेति प्रतीत्यर्थं। परमतेनाह विभक्ता इति। एवेन प्रकृतार्थनिरासः। प्राग्वक्षाहभेदेति तत्प्रतीतौ हि एकजातीयत्वप्रतीतिर्न जायते एकजातीय धर्माश्रयत्वमेव भेदप्रतियोगिसंबंध इति भावः।

इदमेव ध्वनयन्पूर्वसूत्रोदाहरणं प्रत्याख्यानप्रकारातिप्रसंगं निराचष्टे गवामिति। अत्र एत त्सूत्रोदाहरणविषये क्रियान्वयं विनेति शेषः= एवमित्यस्य नामार्थान्वयविवक्षेत्यर्थः। तत एवानभिधानादेव। अत्र

पि षष्ठी न । तत एव अत्रपक्षे आढ्यतरत्वे पाटलिपुत्र-कव्याप्तृत्तत्वमार्थमित्याहुः ।

मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत् ।

मूले श्रवणेवा । अत्र मूलश्रवणशब्दौ तत्तन्नक्षत्रयुक्तकालबोधकौ । आधाराधेयभावःसंबन्धो विभक्त्यर्थः मूलनक्षत्रयुक्तकालाधारकं देवीकर्मकमावाहनमित्याद्रिक्रमेण बोधः ।

अद्य भुक्त्वायं द्व्यहे द्व्यहाद्वा भोक्ता । अत्र विभक्त्यर्थः स्वानन्तरकालवृत्तित्वं । एतद्दिवसाधिकरणकभोजनो त्तरकालिकमेतद्दिवसानंतरद्व्यहानन्तरकालवृत्तिभोजनाश्रय इत्यर्थः । द्व्यहे एतद्दिवसानन्तरत्वं समभिव्याहारबललभ्यम् । इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत् । अत्र स्वानन्तरदेशवृत्तित्वं विभक्त्यर्थः । एतद्देशाधिकरणकस्थित्याश्रयकर्तृकमेतद्देशानन्तरक्रोशानन्तरस्थितलक्ष्यकर्मकव्यधनमितिबोधः ।

इति सप्तमी समाप्ता ॥

---

पक्षे प्रत्याख्यानपक्षे । अन्यथा फलभेदापत्तेः ।

नक्षत्रे च लुपीत्यस्य विषयमाह मूलेनेति । नक्षत्रेण युक्तः काल इत्यणो लुबविशेषे इति लुबित्याहात्रेति । विभक्त्यर्थः एवमग्रेपि तदाह मूलेति

सप्तमीपंचम्यौ कारकमध्ये इत्यस्य विषयमाहाद्येति । क्रियाभेदभिन्नकर्तृत्वादिशक्तिरूपकारकद्वयमध्यवर्तित्वं वस्तुसन्निमित्सामिद्व्याहात्रेति लभ्यमिति । एव मग्रेपि । कालस्योदाहरणमुक्त्वाऽध्वनमाहेहस्थ इति । कालाध्वनोरित्यनुवृत्तस्य पंचम्या विपरिणाम इति भावः । इतिसप्तमी ॥

एषां सुपां एकवचनत्वादिना तत्तद्रूपेण वा एकत्वद्वित्वबहुत्वव्याप्यरूप संख्याप्यर्थः। द्व्येकयो र्द्विवचनैकवचने, बहुषु बहुवचन मिति शास्त्रात् 'तत्र संख्या प्रकृत्यर्थगता बुध्यते। संपन्नो व्रीहिरित्यादौ व्रीहित्वादिगतसंख्याया व्रीहिष्वारोपेणैकवचन प्रयोगः। प्रकृत्यर्थतावच्छेदके संख्यान्वय इति तु न युक्तं क्लृप्तस्य

---

संगतिंसूचयन्नाहैषामिति। तेन रूपेण बोधस्याननुभवाच्छास्त्रतोऽप्राप्तेश्चाह तत्तदिति। बहुत्वसामान्यस्य क्वाप्यप्रतीतेराह बहुत्वेति त्रित्वादीत्यर्थः। व्याप्यरूपेति पाठः। व्याप्येत्यपपाठः। तत्र संख्यायास्तदर्थत्वे सति तथैवानुभव इत्याह बुध्यते इति। विभक्त्यर्थविषयकबोधे प्रायेण प्रकृतिजन्योपस्थितेर्हेतुत्वात्।

यत्तु समानपदोपात्तत्वस्य प्रत्ययार्थ एवान्वय इति तत्र कार्यकारणभावान्तरकल्पने गौरवात् आख्यातोपात्तसंख्याया अपि प्रकृत्यर्थ एवान्वय इति भाष्यसंमतिपूर्वं प्रागुपपादितं। नन्विदं व्यभिचरितमत आह संपन्न इति। एतेनव्रीहित्वमेव तत्रप्रधानमिदमेवाभिप्रेत्य जात्यभिप्रायेणैकवचनमिति प्राचामुद्घोष इति। तत्रैव तदन्वय इति स्वाश्रयाश्रयत्वरूपपरंपरासंबंधेन प्रकृत्यर्थे एवान्वय इति वेत्यपास्तं। भावप्रत्ययं विना विशेष्यतया धर्मबोधेऽसाधुत्वात् तथाननुभवाच्च। अत एव स्त्रियामिति सूत्रभाष्यसंगतिरित्युक्तं वक्ष्यते च।

परादिमतं खंडयति प्रकृत्यर्थेति। अतएवैवमेवान्यत्रापत्त्याह वेदा इति। वतामेव प्रमाणानां। एकेति सर्वेषां वेदानामिति भावः। अत्र भाष्यादिसंमतिं वक्तुमन्यत्राप्याहैवमेवेति उक्तं सर्वमित्यर्थः तदेवाहतदुक्तमिति। तदुभयाशयमाह तत्रेति भाष्ये इत्यर्थः। नापत्तेरिति गवांधनमित्यर्थस्यापत्तेश्च। नापि प्रत्ययोपात्तसंख्यान्वयित्वं तत उक्तयुक्तेः तस्य प्राधान्यपदार्थत्वेन लोके प्रसिद्ध्यभावाच्च तदभिप्रेत्याह तस्मादिति। तस्येति अत एव धनमेकमिति कैयटेनोक्तम्।

प्रत्ययार्थे प्रकृत्यर्थविशेषणान्वयित्वस्य त्यागे माना-भावात्। वेदाः प्रमाणमित्यादौ प्रमाणपदेन प्रमाणत्वगतसंख्यारोपवत्तामेव प्रतीतिस्तत्फलं एकजातीयप्रमाणत्वोपपादनम्।

एवमेव गावो धनमित्यादावपि। तदुक्तं पंक्तिविंशतीति सूत्रे भाष्ये गावो धनमित्यादौ प्रीतिहेतुधर्मनमेको गुणः सच प्राधान्येन विवक्षितोऽतो द्रव्याणां बहुत्वेपि न धनशब्दाद्बहुवचनमिति। समुदायस्य प्रीतिहेतुत्वाद्धनत्वं, नत्वेकैकस्य गोपिण्डस्येति धनमेकं गोभिर्विशेष्यत इति कैयटः। तत्र गुणस्य प्राधान्यं नाम न विशेष्यता सामानाधिकरण्यानापत्तेः तस्माद्यथा लोके यो यस्य धनादिना धनादिफलं लभते तस्य तदपेक्षया गुणत्वं, धनिकस्य प्राधान्यं, तथा धनत्वादिगतसंख्यया तदाश्रयस्यैकत्वादि व्यवहारात्तस्य प्राधान्यं, आश्रितसंख्याविशेषगोपिण्डानां विशेषणत्वे एव समुदाये एकजातीयप्रीतिहेतुत्वावगम इति तत्र नैकवचनं आरोपितैकत्वेन बहुत्वस्य विरोधाभावात। विरुद्धविभक्तिराहित्येनाभेदान्वयोपप-

---

नन्वेवमपि तद्विशेषणीभूतत्वाद्गाव इत्यत्रैकवचनापत्तिरतआहाश्रितेति। तत्र गाव इत्यत्र। अतएव नहिगौर्धनमित्युक्ते तथाप्रतीतिरिति कैयटेनोक्तं। नन्वेवं विरुद्धविभक्त्यवरुद्धत्वात्कथमभेदान्वयोऽतआहारोपीति। विवक्षितं इति भाष्यस्वारस्यादाह यदात्विति। भाष्यस्याशयान्तरमाह बद्वति। अतएवाह द्वादश इति यदेत्यादिः। सर्वे इत्यर्थः। तद्वेति तदेत्यादिः। तद्गतेति द्रव्यगतेत्यर्थः। विशेषमाह यदापीति धर्मे तन्मात्रसंख्यारूपं शब्दशक्तिस्वभावात् अतो न कदाचिदपि तत्रैकवचनम्।

स्तिः। यदा तु स्वगतसंख्यावैशिष्ट्येन भानं तदा गावो धनानीत्यपि।

यद्वा धर्म्यभेदेन जातेः प्राधान्यमिति न सामानाधिकरण्यानुपपत्तिः द्व्यादयो द्रव्याभेदेनैव संख्याबोधकास्तदभेदादेव तद्गतसंख्याविशिष्टसंख्यारूपधर्मप्रतिपादकाः।

यदापि भेदेन तदापि स्वाश्रय द्रव्यगतसंख्याविशिष्टमेव धर्मं प्रतिपादयन्ति। अतएव किंसंबन्धयेकत्वे किंसंबंधिद्वित्वे किंसंबंधिबहुत्वे इत्यर्थे कस्यैकस्मिन् कयोर्द्वयोः केषां बहुष्विति प्रयोगो बहुषु बहुवचनमिति सूत्रे भाष्ये। संख्ययाव्ययेति सूत्रभाष्योक्तमाद्यान्तः संख्याः संख्येय इति तु प्रायोवादः। द्व्येकयोरित्यादौ समासे आरोपितसंख्याभाने मानाभावेन धर्माणां प्रत्येकमेकत्वाद्द्विवचनमेव। एवमेवाष्टेजसी इत्यादिप्रयोगोपपत्तिः

---

अत्रमानमाहातएवेति। प्रयोगे इति। जातावेक वचनं भाष्यांतराविरोधमेवं सत्याह संख्ययेति। अनेनामरस्य निर्मूलत्वं निरस्तं। नन्वेवं सौत्रप्रयोगविरोधोऽतआह द्व्येकेति इत्यादाविति पाठः। अन्याश्रयकं धर्माणामिति बहुवचनं इदमन्यत्रावश्यक मित्याहैवमेवेति। अतएवारोपितसंख्याप्रतीतावेकवचनं स्वगतसंख्याप्रतीतौ बहुवचनमित्येवं शब्दद्वयसिद्धिमाश्रित्य जात्याख्यायामिति प्रत्याख्यातं भाष्ये। विंशत्यादौ तु भेदाभेदयोः सत्त्वेऽपि कोशप्रामाण्यात्सदैकत्वे भेदपक्षेपि-धर्मगतसंख्यारोपवत् द्रव्यस्यैव विंशत्यादितः प्रतीतिरिति न कदापि बहुवचनं शब्दशक्तिस्वभावादिति बोध्यं। सिद्धान्ते लक्षणायाः शक्त्यनतिरेकेण युक्त्यन्तरमाह प्रेमेति।

दारा इत्यादौ स्वावयवगतारोपितबहुत्वाश्रयं बहुव-
चनमेव, नतु स्वनिष्ठैकत्वाश्रयमेकवचनं कोशादिप्रामा-
ण्यात् । प्रेमादिना प्रत्येकं सर्वेष्ववयवेषु दारत्वारो-
पात् । यत्र कोशाद्युदासीनं तत्र यथेच्छमेकस्मिन्न-
प्याचार्या आगता, आचार्य आगत इत्यादि प्रयोगात् ।

यत्तु दारा इत्यादौ साधुत्वार्थं बहुवचनमिति त-
न्न । अनुशासनाभावात् । तत्र गौणी मुख्या चोत्त-
रा संख्या पूर्वां संख्यां बाधते नहि द्विपुत्र आनीय-
तामित्युक्ते त्रिपुत्र आनीयते इति छादे घे इति सूत्र-
भाष्यात् । कैयटश्च संख्यान्तरोपजनने आश्रयाविना-
शेपि पूर्व संख्याविनाशः । संख्याशब्दानामेष स्वभा-
वो यत्संख्यान्तरस्योत्तरस्य गौणस्य मुख्यस्य वा वि-
षये न प्रवर्त्तते इति अइउण् सूत्रे अचः परस्मिन्नित्य-

---

एतेन सर्वदारोपसत्त्वे मामाभावेन तदभावे एकवचनापत्तिरि-
त्यपास्तं कोशादिप्रामाण्येन नियतारोपस्वीकारात् । यत्रत्विति
पाठः । पर्येषमित्यस्यैव स्वरूपमेकस्मिन्निति । अनतिप्रसंगायात्र
हेतुमाह प्रयोगादिति । तदनुसारादित्यर्थः । अतएव घटो नील
इत्यादितः। अत एव पितरो देवता अग्नीषोमौ देवता इति व्यवस्थित
एव प्रयोगः। आद्ये प्रत्येकं तत्वस्य द्वितीये समुदाये तस्य प्रतिपि-
पादयिषितत्वादितिभावः

परमतं खंडयति यत्त्विति नन्वेवमपि मुख्यस्वगतसंख्याप्रयुक्त-
कार्यापत्तिरेवात आह तत्रेति रोपेसतीत्यर्थः। संख्याशब्दानामिति
यत इत्यादिः। भाष्ये तत्रापि अन्त्याशयमाह निपूर्वादिति । अन्यथा
एतदुभयासंगतिः स्पष्टैव । अतएव तस्यास्तदबोधकत्वाद्बाध-
बाधश्च न तन्त्रादि प्रसिद्ध इत्याह बाधश्चेति। तत्रादावनित्यत्वपक्षे
आहपूर्वेति । नित्यत्वपक्षे आहानभीति ।

न च आद्ये ध्वनितमेतत् । आद्ये अकारादीनामेकत्वपक्षे घटेन तरति घटिक इत्यत्र द्व्यज्लक्षणठनोऽप्राप्तिमाशङ्क्य वृत्तिसंख्यानात् सिद्ध मित्युक्तम् । अन्त्ये पूर्वविधिग्रहणस्य नैधेय इति प्रत्युदाहरणं दत्तं निपूर्वाद्धाञः क्विप्रत्यये आतोलोपे तस्य स्थानिवत्त्वेन व्यच्त्वेन द्व्यच्त्वाभावात्तदाश्रयो ढग्न स्यादिति तद्भावः । अतएव द्व्यादिषु सत्सु एकोऽस्तीत्यादिर्न प्रयोगः बाधश्च पूर्वसंख्यानाशेन, विभक्त्या व्यवहाराप्रयोजकत्वं वा, द्वितीयाद्यपसारणे द्व्यादिसंख्यानाशादिवत् । शते पञ्चाशदस्तीत्यादि तु ततोऽधिकान् शतसंख्यासंपादकान् पदार्थान् अबुद्धिस्थान्कृत्वा; तेषामबुद्धिस्थत्वं तु तेष्वाहार्याभावप्रतियोगित्वारोपेण । एवमेकादशकपालस्तुत्यर्थः (१)अष्टाकपालाद्यनुवाद इति बोध्यम् ।

बहुत्वं तु त्र्यादिपरार्धान्तसंख्याव्यापको धर्मविशेषः । नचैवं कपिञ्जलानालभेतेत्यादौ चतुरादीनामप्यालम्भापत्तिः पर्यग्निकृतानारण्यानुत्सृजतीत्युक्ते

---

नन्वेवमन्यत्रानिष्टापत्तिरत आह शते इति । ततः पंचाशतः । ननु सत्त्वे तत्त्वमविरुद्धमत आह तेषामिति एवमेव तदन्येषामबुद्धिस्थत्वकरणेनैवेत्यर्थः । अष्टाकपालेतिपाठः पञ्चेत्यपपाठः । श्रुताव सत्त्वात् ।

ननु किं नाम बहुत्वं यदारोपेण निर्वाह उक्तोऽत आह बहुत्वं त्विति संख्याया व्यापक इत्यर्थः । व्याप्य इति पाठे बहुव्रीहिः । एवं बहुत्वस्य तत्त्वे विनिगमनाविरहात्

(१) क्वचित्पञ्चकपालेतिपाठः, सोऽशुद्धः

हिंसाप्रसक्तमायात्कपिञ्जलालम्भनं कृतार्थं शास्त्रं हिंसाभि-
क्या नाधिकालम्भनं बोधयतीति यत्कुमताकशमिति प्रा-
रुपम । यावत्कपिञ्जलत्रयालम्भनासंभवेन कस्मिंश्चिद्
विश्रान्तौ स्वीकृतसंख्यायां प्रथमातिक्रमे कारणाभावेन
व्यक्तित्रयस्यैवालम्भनात् । तदुक्तं जैमिनिना 'प्रथमं
वा नियम्येत कारणादतिक्रमः स्या'दिति । नच चतु-
राद्यालम्भे फलविशेषस्तत्कल्पकाभावात् ।

अतएव यत्र ब्राह्मणभोजनादावधिकब्राह्मणभो-
जने फलविशेषः श्रुतस्तत्र ब्राह्मणान्भोजयेदिति चो-
दनायां व्यक्तित्रयभोजनेन शास्त्रार्थनिष्पत्तावपि फ-
लविशेषार्थमधिकभोजनं भवत्येव ।

---

यत्तु न हिंस्यादिति निषेधानुसारेण विधिसंकोचस्तथाहि बा-
धता विना विधेरनुपपत्तिस्तत्रैव विधिना निषेधसंकोच कल्पनं क-
पिंजलनयेन च तत्संकोचं विना शास्त्रानुपपत्तिरत स्तद्व्यतिरिक्ते न
तत्संकोच इति तस्य निषेधविषयत्वात्तद्विरोधेन तत्र विधिप्रवृत्ति-
रिति तन्न तदेकवाक्यतया हिंसा न कार्येत्येतद् न हिंस्यादिति शास्त्रा-
र्थो नतु कपिंजलत्रयभिन्ने सा न कार्येति मानाभावात् । प्रत्युत
विशेषानाक्रान्ते एव सामान्यप्रवृत्तिर्न्याय्या विधिनिषेधयोर्विरोधा-
भाववादिनां तु नैवाशंकापि

किंचैवंपरशुना यजेतेत्यादावेकत्वविवक्षाप्रयासो वृथैव उक्तनि-
षेधविरोधेनैवैकेन यागसिद्धेः । इदमपि सर्वमभ्युपेत्य वस्तुतस्तत्रैव
नेतिपरोक्तसमाधिं खंडयति पर्यग्नीति । खंडने हेतुः आलम्भेनेति
समाधिः तत एवाह यावदितिआनन्त्यादिति भावः शास्त्रार्थसंपत्तये
आह कांचिदिति प्रथमेति प्रथमोपस्थितत्रित्वेत्यर्थः एवेना-
धिकालंभव्यवच्छेदः आलंभनात् तदालंभनस्यैव शास्त्रार्थत्वात्
प्रथमं वेति प्रथमोपस्थितत्रित्वमेव नियम्यते शास्त्रेण प्रथमातिक्रमः
कारणाद्भवति नच प्रकृते तथा किंचित्कारणमस्तीति सूत्रार्थः। एवञ्च

लोकेऽप्योदकान्तमनुव्रजेदित्यादौ कारणाभावे प्रथममुदकान्तमेव गच्छन्ति । स्नेहादिरूपकारणसत्त्वे द्वितीयं तृतीयं चोदकान्तं गच्छतीति प्राग्रीश्वरादिति सूत्रे भाष्ये स्पष्टम् ।

व्याकरणे तु व्याप्तिन्यायस्यैवाश्रयणम् । णिजां त्रयाणामिति सूत्रे त्रयाणां ग्रहणादाद्युदात्तश्चेत्यादावादिग्रहणाच्चेति बोध्यम् ।

पशुना यजेतेत्यादौ पश्वन्तरालम्भे प्रयोगप्राशुभावबाधेन यागवैगुण्यापत्त्या गुणानुरोधेन प्रधानाया-

---

प्रथमोपस्थितालंभनेन कृतार्थं शास्त्रं न चतुराद्यालंभं प्रयोजयतीति भावः अतएव कल्पकसत्त्वे एवाधिकानुष्ठानादेव भाष्ये स्पष्टमित्यन्वयः। तत्र तावद्वैदिकमाह यत्रेति अस्यैवार्थो ब्राह्मेति। लौकिकमाह लोकेपीति इत्यादौ इत्यादिविधिविषये सत्वे तु स्पष्टमिति एवंच कारणसत्वे एवोभयत्र व्याप्तिन्यायाश्रयणमिति सूचितं तेन। अतएव विशेषमाह व्याकेति सूत्रादावित्यर्थः आदिना निपाता आद्युदात्ता इत्यादि ।

नन्वेवमपि पशुना यजेतेत्यादावेकत्वविवक्षाव्यर्थैव एकमहत्वा द्वित्रिहननासंभवात् यावत्पशुयागासंभवाच्च परिच्छेदकाकांक्षायामुक्तन्यायेनैकस्यैव ग्रहणसंभवात् अत आह पशुनेति। प्राशुभावः क्रमः नचैकत्वस्य न्यायेनोपस्थितावपि संख्याया अनंगत्वेन द्व्याद्यालंभने यागस्य न वैगुण्यमिति वाच्यं पशुनेत्यनेन यागसाधनतया बुद्धस्य पशुत्वस्य एकालंभनेपि संपत्त्या व्यर्थत्वेन पश्वंतरालंभे प्रयोगप्राशुभावरूपस्य पदार्थानां संनिधानस्य बाधापत्त्या च तद्वैगुण्योपपत्तेः ।

कपिंजलानित्यादौ तु बहुत्वान्वयानुरोधान्नैकालम्भने निर्वाहः नचायं पशुः सर्वेति विनिगमनाविरहात् द्व्याद्यालंभापत्तिः। एकत्वविवक्षायां तु तेन पर्याप्त्या पशुत्वावच्छिन्नगतद्वित्वाद्यनाश्रयस्य साधनताबोधनान्न दोष इति वाच्यं एकवचनस्य तथा शक्त्य भावात् एवं

गावृत्तौ प्रधानत्वभङ्गापत्त्या च याजपञ्चयागासंभवेन चोपस्थितविभक्त्यर्थविशिष्टस्यैव विधानमिति न दोषः। विभक्तेः संख्याबोधकत्वस्य शास्त्रसिद्धत्वाद् विभक्त्युत्पत्तये आश्रितसंख्यायां विधिविषयताया एवौचित्यात्।

किंच यथाकृतगर्भाधानार्थसंस्काराया: पुनः संस्कारोऽनर्थकः तथैकेन पशुना क्रियासिद्धौ पश्वन्तरस्यानर्थक्यम्। तदुपादाने च तत्साधनं तत् क्रियान्तरमेव।

किंच पशुनेत्यस्य विधेयसमर्पकतया तदुपस्थितानां मध्ये कस्यचित्त्यागे मानाभावः प्रकृतिप्रत्ययाभ्यां विशिष्टस्यैव बोधे विशिष्टविधिसंभवेन न वाक्यभेदः। तदुक्तं सार्वधातुके यगिति सूत्रे भाष्ये पच्यमान इत्यत्र कर्त्तरि शानच्, कर्मणि यगित्युभयाशङ्कया प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति शास्त्रवाक्यमर्यादया तत्तच्छक्यत्वेन प्रतीयमानमर्थं तौ सह ब्रूतो न भेदेनेति तदर्थः। एवंचैकस्य धातोर्गुणपरिच्छेदार्थप्रत्ययाभ्यामर्थबोधने सहायत्वासंभवेनैतद्व्युत्पत्तिविरोधान्न

---

त्रयाणामेषां त्रयाणां वेति विनिगमनाविरहेण बहुकपिञ्जलालम्भनापत्तेश्च। तस्माज्जातिनोदनायामयं विनिगमनाविरहो विधौ न दोषाय निषेधवाक्ये त्वनुगुण एवेतिभावः

उपस्थितेति उक्तन्यायेन तथा [illegible] सर्वौचित्यात् ननूपस्थितावपि कथं विधेयत्वमत आह विभक्तेरिति समानपदोपात्तत्वादितिभावः ननु तद्विवक्षायां [illegible] आह प्रकृतीति। ननुक्तं तदेतदभिप्रेत्य तच्छंकोत्[illegible] तस्य [illegible]भावा-

नयेति भावः। पृथगुपस्थितौ हि राज्ञः पुरुषोऽश्वश्चेत्यत्रा द्वाविव स्यादेवैकस्य विनिगमनाविरहाद् उभयान्वयः। एकोपस्थितौ हि राजपुरुषोऽश्वश्चेतिवद् न तथा प्रयोगः। एकविशेषणत्वेनोपस्थितस्यान्यविशेषणत्वायोगात्।

व्याकरणं तु यौगिकस्थले कल्पितावयवशक्तिबोधनद्वारा विशिष्टशक्तेरेव बोधकम्। समर्थानामिति सूत्रे च भाष्ये किंपुनःसमर्थमभिधाने यच्छक्तं, किंपुनस्तत् कृतवर्णानुपूर्वीकं पदं सौतिथितिरित्युक्तम्। अन्यथादीर्घाभावेपि सुशब्दोत्थितशब्दयोः स्वार्थोपस्थापकत्वस्य तव दुर्वारतया कृतवर्णानुपूर्वीकस्यैवाभिधानशक्तत्वोक्त्यसङ्गतिः। संख्याया अतिशदन्ताया इति सूत्रे भाष्येपि नहि लोके केवलेन प्रत्ययेनार्थो गम्यते केन तर्हि सप्रकृतिकेनेति।

वासरूपसूत्रेऽपि भाष्ये उक्तम्। तद्धितप्रकृतिः षष्ठ्यादियुक्ता प्रकृत्यर्थे वर्त्तते, अन्येन च शब्देन प्रत्ययार्थोऽभिधीयते कृत्प्रकृतिर्न केवला प्रकृत्यर्थे वर्त्तते नान्यः शब्दोस्ति यस्तमर्थं अभिदधीतेति प्रकृतिप्र-

---

दाह शास्त्रेति प्रत्ययशब्दो यौगिकः कर्मप्रत्ययांत इत्याह प्रतीयेति शंकानिवारणमाहैवंचेति उक्तमेव तात्पर्यकथनेन द्रढयति पृथगिति एकस्य धातोः उभाभ्यां प्रत्ययद्वयं पकेति तथाबोधस्यानुपपत्तेरिति भावः।

नन्वेवं शास्त्राप्रामाण्यापत्तिरतआह व्याकेति अन्यत्र तथैव तेषामप्यावश्यकमित्याह यौगिकेति मानांतरमाह समर्थानामिति सूत्रेपीत्यर्थः। अन्यथा विशिष्टशक्त्यनंगीकारे। एवंच तेन वर्णस्फोटः शास्त्र-

त्ययसमुदाये प्रयुज्यमाने अन्वयव्यतिरेकाभ्यां प्रकृतिः प्रकृत्यर्थे वर्त्तते प्रत्ययस्तु प्रत्ययार्थे इत्युच्यते । अनुत्पन्नप्रत्यया तु न कंचिदर्थं गमयति । केवलायाः प्रकृतेः प्रत्ययस्य वा स्वार्थमात्राभिधाने सामर्थ्यं नास्ति इति च कैयटः । अर्थवतो ग्रहणमित्यादि तु शास्त्रवित्कल्प्यान्वयव्यतिरेकगम्यशास्त्रकल्पितार्थवत्त्वस्य शास्त्रव्यवस्थाहेतुत्वेन नासङ्गतम् । कुत्सित इति सूत्रे कैयटे च स्फुटमेतत् ।

विभक्त्यन्ते एकार्थीभावव्यवहारस्तु न, लोके पृथगुपस्थापकतया दृष्टानां समुदायशक्तिसहकारेण एकोपस्थितिजनकानां तत्स्वीकारात् । न हि विभक्त्यन्तस्थले पृथगुपस्थापकत्वं दृष्टम् । पचति देवदत्त इत्यादौ देवदत्तादेः पचत्यर्थविशेषणत्वेनोपस्थिते कर्त्रादावर्थेऽन्व-

---

व्यवहारस्याङ्गोपयोगी नतु बोधोपयोगीति सूचितं भाष्येपि उक्तमित्यस्यानुषंगः । अन्येन अपत्यादिना । प्रत्ययार्थः तद्धितार्थः नान्यः धातुभिन्नः । तमर्थं प्रत्ययार्थं । कैयटस्पष्टव्याख्यायाह प्रकृतीति । यातु प्रकृतिः केवलेति यत्न इत्यादिः । दृष्टांतार्थमाह प्रत्ययेति । च कैयटः कैयटश्च ।

नन्वेवमर्थवतोग्रहणमित्यादिशास्त्रीयव्यवहारोच्छेदापत्तिरत आहार्थेति हेतुत्वेन तदाश्रयणेन एतत्सूचनार्थमेवान्वयव्यतिरेकाभ्यामिति कैयटेनोक्तं स्फुटमिति तत्र हि शास्त्रे संव्यवहाराय कल्पिताभ्यामन्वयव्यतिरेकाभ्यामप्रयोगार्हस्य प्रातिपदिकस्य कल्पितामर्थवत्तां नागृहीतविशेषणा बुद्धिरित्यादिकल्पितन्यायवशात्क्रमवतीमाश्रित्येदमुच्यत इत्युक्तम् ।

नन्वेवं विशिष्टशक्त्यविशेषादेकार्थीभावव्यवहारातिप्रसंगोऽत आह विभक्त्यन्ते इति । नन्वेवं पचतिदेवदत्त इत्यादौ देवदत्तादेराख्यातस्य क्रियाप्रधानत्वाद्विशेषणेन कर्त्रादिनाऽन्वयो न स्यात

यः कारकाणां क्रियाविशेषणानां च गुणभूतक्रियाया-भिव कारकविशेषणानामपि क्रियाविशेषणकारकेष्व-प्यन्वयस्वीकारात्सामान्यरूपेणैव कर्त्रादेराख्यातार्थ-तया तत्र नियमेन विशेषाकाङ्क्षायाः सत्त्वेन तथा स्वीकारात् । प्रत्ययार्थकर्तृविशेषणेन संबन्धवत् । क्रियान्तरेण पुनः संबन्धः प्रत्ययानां स्वप्रकृत्यर्थे एवान्वयेन तत्रान्वितस्यान्वयानाकाङ्क्षितत्वाऽदो-षात् ।

एतेन पचति पचन्तीत्यादावेककर्तृकपाकक्रिया-संबन्धिकर्तृकर्तृका पाकक्रियेति बोधोपपत्तिरिपास्तम् । स्पष्टं चेदं कुत्सने च सुपीत्यत्र कैयटे ।

इदं च प्रथमान्तवाच्यकर्त्रादेः प्रत्ययान्तवाच्यकर्त्रा-दिविशेषणत्वमिति वादिनां मते । क्रियया एवाभेदान्वय

---

तदर्थैकदेशत्वाच्च कर्त्रादेः प्रत्ययार्थस्येतरविशेषणत्वेनैवोपस्थि-तेरेतेन पृथगुपस्थितिविषयत्वाद्बुद्धस्य राज्ञः पुरुष इत्यादाविव विशेषणान्वयं इति कुत्सने च सुपीतिसूत्रे कैयटोक्तमपास्तमत आह पचतीति । स्वीकारात् तत्र बाधकाभावात् साधकम-प्याह सामान्येति । सत्त्वेन तथेति देवदत्तादेर्विशेषवाचकस्या-न्वयावश्यकत्वेन तथा कार्यकारणभावांगीकारादित्यर्थः । नन्वेवं प्रत्ययार्थकर्तृविशेषणेन संबंधवत् क्रियांतरेणापि संबंधः स्या-देवं च पचति पचतीति व्याख्यायमानबोधसंभवादत आह प्रत्ययार्थेति अदोषात् तथा कार्यकारणभावाकल्पनात् तदेवाहितेनेति उक्तरीत्या तत्संबंधेनेत्यर्थः । बोधापत्तिस्तदावस्यैकवाक्यतापत्तिःपाककर्तृका-पाकक्रियेतितुनबोधः क्रियाप्रधानेति स्मृतिविरोधादित्युक्तम् ।

स्पष्टमिति यथा भार्या पत्युर्यनितान्तसंबंधं न सहते स्नाना-दिसंस्कारं तु स्वार्थमनुसज्यते तथा क्रियापीत्यविशेषणविशिष्टं

इति मते तु न काप्यनुपपत्तिः। एतेन समानप्रत्ययोपात्त-त्वप्रत्यासत्त्या विभक्त्यर्थकारके संख्यान्वयः। तत्राक-णाधिकरणन्यायेन प्रथमं विभक्त्यर्थस्य क्रियान्वयः पश्चात् प्रकृत्यर्थेन। एवंच पश्वेकत्वाभिन्नकरणको याग इति बोधः। पश्वेक इति तु पार्ष्णिको बोधः। एवंच एकत्वस्य यागाङ्गत्वान्नानेकपशुभियाग इत्यपा-स्तम्। प्रकृत्यर्थं विहाय प्रत्ययार्थस्यान्यान्वयेऽसाधु-त्वात्

किंच स्वादिसूत्रस्य कर्मणिद्वितीयेत्यादिभिः सं-ख्यावाक्यैकवाक्यतया प्रातिपदिकादेकस्मिन्कर्मणि द्वि-तीयैकवचनमित्यादिक्रमेणार्थः। एवंच संख्यायाः क्रि-यायां कारकत्वेनान्वये विभक्तेरसाधुत्वं स्पष्टमेव। किंच भिन्नपदोपस्थितक्रियान्वयापेक्षया समानपदो-पात्तत्वेन प्रथमं प्रकृत्यर्थान्वयस्यैवौचित्यमतद्भिन्नस्यैव

---

साधनमात्रमन्वयमात्रं तु विशेषणेन संबंधः तत्प्रति क्रियासंगत्यापत्ति-स्तु स्वार्थप्राधान्यविरोधिनी तां नानुजानातीति। इदमपि दीक्षिता-दिमतेनोक्तमित्याहुरन्येति। सिद्धान्ते विशेषणान्वय एव नेति प्राग्यु-क्तं तदाह क्रियायैवेति।

पश्वेकत्वाधिकरणस्थं परमतं खंडयति एतेनेति समानेति। त-थाच प्रातिपदिकार्थादपि संनिहिततरेण प्रधानेन च कारकेण सहा-न्वितत्वेनावगता संख्या प्रातिपदिकार्थमनादृत्य क्रियांगत्वं निपद्यमा-ना वाक्यसमर्पितेन क्रियाविशेषणत्वेन संबध्य पश्चादरुणैकहायनी-न्यायेन योग्यतावशात्पशुविशेषणत्वेनार्थादवबुध्यते। अङ्गत्वं तु त-स्या यज्ञं प्रत्येव पशुस्तु तदन्वये द्वारमितिभावस्तदाह तत्रेति प्र-त्यासत्तीत्यर्थः।

क्रियाकाङ्क्षादर्शनात्केवलप्रत्ययात्तदनुपस्थितेश्च । नहि नामपदमात्रेण तदुपस्थितिः । प्रातिपदिकात्कर्मणि एकत्वे च एकवचनमित्यर्थेऽपि प्रत्यासत्त्या प्रकृत्यर्थान्वय एवोचितः

किंच प्रकृतेरन्यार्थे प्रत्ययो भवतीत्युक्त्या प्रत्यासत्त्या परस्परसंबद्धार्थबोध एव तत्तच्छास्त्रेण तयोः साधुत्वबोधनं एतन्मूलिकैव प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिः । ताभ्यां परस्पर संबद्धार्थस्यैव बोधो न केवलस्येति तदर्थः । विभक्त्यर्थस्य प्रकृत्यर्थे विशेषणतैवेत्युपपादितम् । कर्मणि वर्त्तमाने एकत्वे इत्यर्थेऽपि तस्य धर्मत्वप्रतीतेः । षष्ठ्यन्ताद्यसमभिव्याहृतपदोपस्थिते धर्मिणि धर्मस्य विशेषणताया एव दृष्टत्वात्तस्य प्रकृत्यर्थं प्रति विशेषणतैवोचिता । एवंच प्रकृतिसुबर्थयोराकाङ्क्षाकार्यकारणभावविचारः परेषा-

---

एतेनेत्यस्यार्थमाह प्रकृत्यर्थमिति । वाक्यैः ङ्याप्योरित्यादिभिः वाक्यान्तरभेदाभिप्रायं बहुवचनम् । एकेति पदैकवाक्यतायां वाक्यैकवाक्यतायां चेत्यर्थः । कारकत्वेन कर्मत्वादिना तदुक्तन्यायेनैवाह किंच प्रकृतेरिति । ननु तत्सत्त्वेऽप्याकाङ्क्षामूलकस्तथा सम्बन्धोऽत आह तदर्थ इति । तत्र विप्रतिपन्नं प्रत्याह केवलेति । प्रयोजकस्यैवाभावात् तदेवाह नहीति नेति पदं ना पदं तन्मात्रेणेत्यर्थः ।

नन्वेवमपि पक्षान्तरसंभव एवात आह प्रातीति । तयोः प्रकृतिप्रत्यययोः एवमत्रेऽपि । एतेन मूलान्तरव्यवच्छेदः । ननु ताभ्यां मिथः संबद्धार्थबोधेऽपि विभक्त्यर्थस्य प्रकृत्यर्थं प्रति विशेष्यत्वात्तत्रैव तदन्वयौचित्यमत आह विभक्त्यर्थेति । द्योतकतापक्षस्यैव भाष्यस्वरसासिद्धत्वात् ।

मस्मदादीनां च भ्रममूलक एवेति ध्येयम् । सर्वथा संख्यायाः कर्मत्वेनान्वयो न युक्तः तस्मात्पशुना इत्यादौ विशिष्टविधिसंभवात् वैकल्यविवक्षायामपि वाक्यभेदः स्पष्टं चेदं हेलाराजीये ।

नन्वेवमेकत्वस्य पशुविशेषणतया यागाङ्गत्वाभावात् तदभावेपि यागावैगुण्यात् तदविवक्षितमेव स्यात् । तदुक्तं जैमिनिना—'तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वा'दिति इति चेन्न । विशिष्टस्य श्रुत्याङ्गत्वबोधनेन पशुत्वादिविशेषणवैकल्य इव तद्विशेषणवैकल्ये सत्यपि विशिष्टाननुष्ठानात्तद्वैगुण्योपपत्तेः । पशुत्वादिवच्छब्दबोध्यस्यास्यापि विशेषणभूतस्य यागाङ्गत्वोपपत्तेः । तदप्युक्तं जैमिनिना । 'शब्दवत्तूपलभ्यते तदागमे हि तद्दृश्यते तस्य ज्ञानं यथाऽन्येषा'मिति । शब्दवत् शब्दबोध्यम् यथा भवति तथोपलभ्यते एकत्वं हि यतस्तदागमे एकवच-

---

ननु एकस्मिन् कर्मणि वर्तमानात्कर्मण्येकत्वे च वर्तमानाद्वित्यर्थयोस्तत्त्वेऽपि अर्थान्तरे वैपरीत्यमेवात आह कर्मणीति । तस्यैकत्वस्य । एवंच मिथस्ताभ्यां संबद्धार्थबोधे चाप्यर्हितत्वात्प्रकृतिशब्दस्य पूर्वनिपातः । परेषांमपि नैयायिकादीनां भूषणकारादीनांचेत्यर्थः । परमतखण्डनमुपसंहरति सर्वथेति, कस्मिन्नपिपक्षे इत्यर्थः । तण्डुलं पचतीत्यादावितिभावः प्रकृतं विशेषं वक्तुमुपसंहरति 'तस्मादिति । अपिना पक्षान्तरं स्पष्टमिति अयमनुपदमेवस्फुटीभविष्यति ।

अधुना संख्याप्रसंगादुद्देश्यविधेययोः संख्याविवक्षाविवक्षे निरूपयति नन्वित्यादिना । एवं संख्यायाः कारकत्वेन क्रियायामन्वयाभावे । तत् एकत्वं । तत्र पशुनेत्यादौ । अर्थस्य पशोः । अप्रासत्वादाह

नागमे दृश्यतेऽतस्तस्याङ्गत्वज्ञानं यथान्येषां विशेषणानां पशुत्वलौहित्यादीनामपीति तदर्थः । एवं च जैमिनेरपि संख्याविशिष्टप्रकृत्यर्थबोध एव तात्पर्यम् ।

हरिरप्याह—

यजेत पशुनेत्यत्र संस्कारस्यापि सम्भवे ।
यथा जातिस्तथैकत्वं साधनत्वेन गम्यते । इति ॥

न केवला प्रकृतिरिति न्यायात् । विभक्तेः संस्कारार्थसम्भवेपि जातिवदेकत्वमपि क्रियासाधनं विशिष्टस्यैवोपस्थितेः इत्यर्थ इति हेलाराजः । अपि च संख्याया अमूर्तत्वात् करणत्वासम्भवः । न च परंपरया तस्याः करणत्वम् । अयोग्यतया परंपरया क्रियान्वयकल्पनापेक्षयोक्तयुक्तिभिः प्रकृत्यर्थान्वयस्यैव कल्पयितुमौचित्यात् । अरुणयेत्यादौ तु गुणस्यापि तृतीयाप्रकृत्यर्थत्वात परंपरया करणत्वमुचितम् । एवं च विधेयविशेषणं सर्वमविवक्षाकारणाभावाद्विवक्षितमिति सिद्धम् ।

---

विशिष्टेति ननु ग्रहादीत्या यागाङ्गत्वाभावात्कथमिदमत आह पशुत्वादीति अवसितसंख्याय तत्र हेतुं सूचयन्नाह शब्देति । तथा च नोक्तरीत्या तत्त्वमपि सिद्धमिति न परमतसिद्धिरितिभावः । एवं च तस्य तथात्वबोधनेन । संस्कारस्येत्यत्र गुरोरिदमितिवत् षष्ठी । अपि त्वयुक्तमेतदत्यभिप्रेत्याह शब्देति ननु संख्याया यागाङ्गत्वेन निर्विवादे परोक्तमेव जैमिन्याद्यभिप्रायभूतमस्तु इति नेदं युक्तमत आहापिचेति ।

नन्वेवमरुणयेत्यादौ दोषापत्तिरत आहारुणेति । गुणकवैलक्षण्ये भाविना प्रत्ययसमुच्चयः । नन्वेवमित्यत्रत्यपूर्वोक्तशङ्कासमाधिमुपसंहरति एवं चेति । ग्रहादीत्या विशिष्टविधिसंभवेत्यर्थः । सर्वं न संख्या-

ग्रहं संमार्ष्टीत्यादौ उद्देश्यग्रहगतमैकत्वं अविवक्षितं तथाहि प्राजापत्या नव ग्रहा इत्यादिवाक्यविहितग्रहोद्देशेन संमार्गो विधीयते तत्रैकत्वविवक्षायां ग्रहोत्पत्तिवाक्यगतसंख्यया एतद्वाक्यगतैकत्वस्य विरोधात् तयोर्वाक्ययोर्भेदोपपत्तिः।

यत्तु परस्परानपेक्षैकविधानात्कारकाम्वयः क्रियायामव्युत्पन्नः एकत्वस्याश्रयविधया ग्रहाकाङ्क्षत्वेपि ग्रहोत्पत्तिवाक्यतो निर्ज्ञातसंख्यतया तदनपेक्षत्वादिति। तन्न। अरुणया पथा दीपिकया व्रजतीत्यादौ साधकतममिति सूत्रस्थकैयटादिसंमते प्रयोगे तद्दर्शनात्। एवं चानुवादवाक्ये उत्पत्तिवाक्यगतधर्मविरुद्धं विशेषणमविवक्षितम्। अतएव व्रीहीनवहन्तीत्यादौ उद्देश्यविशेषणमपि बहुत्वं विवक्षितमेव।

---

आहम्। अथोद्देश्यविशेषणे आह ग्रहमिति इत्यादौ। तत्रतु प्राजेति तेन नहीत्यादिः। नहि त्रिपुत्रो द्विपुत्रव्यपदेशम् लभते इति भाष्येणोत्तरसंख्यायाः पूर्वसंख्याबाधकत्वमित्युक्तत्वेनाह विरोधादिति। भेदापत्तिरिति पाठः। अयमेव वाक्यभेद इत्यस्यार्थ इत्यनुपदमेव स्फुटीभविष्यति।

तन्मतमेव खंडयति यत्त्विति नीलं घटमित्यादौ पश्चैकत्वयोररुणैकहायन्योश्चपरस्परापेक्षयोरन्वयात्तद्वारणाय परस्परेति। एकस्यामेव क्रियायां कर्तृकर्माद्यन्वयादेकेति कारकनानात्वम् च नानापदबोध्यत्वं, तेनैकपदबोध्यनानाकारकान्वयेपि दर्शपूर्णमासाभ्यामित्यादौ न वाक्यभेदः। तदिति संख्याकृतपरिच्छेदेत्यर्थः। सापेक्षत्वमेवात आहैकत्वेति संख्यतयेतिपाठः।

इदमुपसंहरति एवंचेति विवक्षायां दोषसत्त्वे चेत्यर्थः। प्राग्वदाह धर्मेति। अतएवतद्विरुद्धमित्युक्तेरेवमत्रोत्पत्तिवाक्ये हि मियजेते·

नच ग्रहानुवादेन संमार्गः संमृज्यमानग्रहानुवादेन चैकत्वं विधेयमस्त्विति वाच्यम्। एकपदार्थयोरुद्देश्यविधेयभावेनान्वयाभावात्संमार्गस्यानुवाद्यकोटावलाभाच्च। वाक्यभेदापत्तेश्च। किंचोत्पत्तिवाक्ये बहुत्वादिसंख्याश्रवणाद् विधेयगतत्वेन त्वादिशब्दोपात्तत्वेन च तस्याविवक्षणात् तत्र तत्संख्याविशिष्टानामेवानुभवाद् ग्रहशब्देन तेन रूपेण स्मृतेषु विभक्त्यैकत्वबोधने उपक्रमस्थस्य बाध इत्यस्य मीमांसकोक्तवाक्यभेदपदार्थत्वं'। स्पष्टं चेदं हेलाराजीये।

पशौ तु न तथा विरुद्धसंख्यायाः श्रवणं। तस्मात्पुंस्त्वविशिष्टस्येव संख्याविशिष्टस्यैव तत्र विधानम्। अपिच ग्रहमिति द्वितीयया ग्रहस्य संस्कार्यत्वलक्षणं

---

स्यादावपि बहुत्वस्यैवसत्वात्। एतेन सामान्यत उद्देश्यविशेषणमविवक्षितमित्यभियुक्तोक्तमपास्तम्। एकोद्देशनानेकविधाने पृथ वाक्यभेद इत्याशयेनाह नचेति। एकेति अपृथगुपस्थिते। सिद्धांते तथा नियमाभावादाह संमार्गेति सकृदुच्चरित इति न्यायात्स चैकमिति वाक्यशेषाध्याहारादाह वाक्येति। विशिष्टस्य शुद्धात्सर्वथातिरिक्तत्वाभावेन एकोद्देशेनानेकविधानसत्वादेवंच द्विविधो वाक्यभेद इति भावः। ननु तत्रैकत्वाविवक्षायामुप्युक्तरीत्या विशिष्टग्रहोद्देशेन संमार्गविधानेप्युक्तवाक्यभेदोऽत आह किंचोत्पत्तीति। आदिना बहुत्वम्। (१)स्थस्यस्मरणस्य। अस्यैव बाधपदार्थस्य। ग्रहम् संमार्ष्टि तंचैकमिति शब्देनाभिलाप इति भावः।

तुल्यतानिरासायाह पशौ त्विति। उक्तसिद्धांते संमतिमाह बहुक्तमिति। युक्तं (२)संमार्ष्टि एकस्य ग्रहस्य द्वितीयाश्रुत्या संमार्गत्वं-

---

(१) उपक्रमस्थस्य।
(२) एकत्वयुक्त मितिसूत्रावयवव्याख्यानम्।

प्राधान्यं प्रतीयते एवंच प्रतिप्रधानं गुणावृत्तिरिति न्यायाद्विनिगमनाविरहाच्च सोमावसेकनिर्हरणफलकसंमार्गस्य सर्वग्रहैरपेक्षणाच्च विधेयपश्वादिविशेषणवत् क्रियाङ्गत्वाभावेन तद्वैकल्यप्रयुक्तक्रियावैकल्याप्रसक्तेश्च सर्वत्र ग्रहे संमार्गसिध्या विवक्षाफलाभावेन तदविवक्षा। अपिचोत्पत्तिवाक्यगतसंख्यया ग्रहस्य परिच्छिन्नत्वात् परिच्छेदकाकाङ्क्षाभावे तदविवक्षा।

तदुक्तं जैमिनिना 'एकत्वयुक्तमेकस्य श्रुतिसंयोगा' दिति पूर्वपक्षे 'सर्वेषां हि लक्षणत्वादविशिष्टं हि लक्षण' मिति। सर्वेषां संमार्गः कार्यः ग्रहत्वजातेर्द्रव्यलक्षणत्वाद् द्रव्यबोधकत्वाद् लक्षणं द्रव्यबोधनं अविशिष्टं यत इत्यर्थः। भगवता शबरस्वामिना तु प्रौढिवादेन संख्याया अपि कारकत्वेन क्रियान्वयः पश्चात्प्रकृत्यर्थेन पार्ष्णिकः सम्बन्ध उक्तस्तथा ग्रहं समार्ष्टि तं चैकमित्यादिरीत्या वाक्यभेदः संख्याविवक्षायां दर्शित इति न तत्र तस्य भारः। नव्यमीमांसकैस्तु स एवार्थो वास्तवत्वेन गृहीतः वाक्यार्थविचारार्थमेव तच्छास्त्रस्य प्रवृत्त्या पदार्थविचारस्य तत्रानुचितत्वा-

---

भात्। सिद्धांतसूत्रार्थमाह सर्वेषामिति। आद्यो हेर्निश्चयेद्वितीयस्यार्थमाह यत इति प्रौढिवादत्वे हेतुत्वसूचकं भगेति। पशुना यजेतेत्यत्राह संख्याया अपीति आदावितिभावः। अतएवाह पश्चादिति भावः आग्रहः। भर इति। पाठांतरम् ननु प्रौढिवादत्वे एव भाराभावेन तैस्तदादरः कृतोऽतआह वाक्यार्थेति विचारेति तदर्थमित्यर्थः।

स्पदार्थविचारमयुक्तं व्याकरणशास्त्रनिर्णीतपदार्थस्या-
न्यथाकरणे प्रौढैरेव निमित्तत्वात्। तं विना जैमिनि-
वाक्यानुपपत्त्यभावाच्च एकत्वमयुक्तमिति जैमिन्यक्षरा-
स्वारस्याच्चेत्यलम्।

इदं शब्दसंस्कारार्थतयोपात्तविशेषविषयमेव ई-
दृशे विषये जातावेकवचनं बोध्यम्। यद्वा न के-
वला प्रकृतिरिति न्यायात्। शब्दसंस्कारार्थमेव सं-
ख्याविवक्षा नतु प्रकृत्यर्थावच्छेदाय। यत्तु नान्तरी-
यकं शब्दोपात्तं तद्विवक्षितमेव यथाप्रकृते ग्रहत्वं यथा
च आभ्यां खनति, चतुर्भिरादत्ते, षड्भिर्हरति, इत्या-
दौ आभ्यामित्यादि। यस्योभयं हविरार्तिमार्छेत् स प-
ञ्चशरावमोदनं निर्वपेदित्यादावयवद्वयारब्धः सद्गु-

---

ननु सूत्रानुपपत्तिस्तत्र बीजम् न स्यात आह तं विनेति तथाच
वाक्यस्वीकारम् विनेत्यर्थः। एवंच तथा स्वाम्युक्तं तदनुरोधिनव्य-
मीमांसकोक्तं चमूलसूत्रविरुद्धत्वाच्चिन्त्यमेवेति बोध्यं तदाहालमिति
उद्देश्यस्थले उक्तस्य प्रकारस्यासार्वत्रिकत्वं सूचयितुं विशे-
षं वक्तुमत्र विशेषमाहेदमिति। नन्वेवम् कथं तत्सिद्धिरत आहे-
दृशे इति। नन्वेवं कथमविवक्षाऽतआह यद्वेति। नत्विति उक्त एवा-
शयः। तमेव विशेषमाह यत्त्विति तत्रापि विशेषमाह शब्दोपात्त-
मिति लक्ष्यांतरमाह यथाचेति। सच पैद्धाग्रे वासूत्रे तथोक्तेरत एव
सामान्योक्तिरत्र।

ननु यस्योभयमित्यादावुभयत्वं विवक्षितमनया रीत्या स्यात्त-
थाचैकनाशे इष्टम् नस्यादतआह यस्योभयमिति पंचेति। एकावयवेति
एकावयवप्रकृतीत्यर्थः। ऐन्द्र एव चरुः, श्रुतौ तथैव सत्वात्। आक्षेप-
दार्थमाह नाशेति। समुदायस्येति दोह्याभ्यां समुदायेति सूत्रोक्तस्या
भवद्वीयमानावयवद्वयारब्धसमुदायस्य नाशसंपत्तेरित्यर्थः। श्रुतेय-

भयशब्दस्यार्थो ननु संदेहे एकावयवनाशेऽपि समुदायस्य नाशात् निर्वापः क्रियत एवेति हरिग्रन्थे स्पष्टम् ।

अपादानसंज्ञासूत्रे भाष्ये तु धावतः पतित इत्यादावध्रुवत्वादपादानत्वाभावमाशङ्क्य सतोऽप्यविवक्षा भवति तेन पदोपात्तमपि धावनमविवक्षितमिति उक्तं इदं तु दर्शपूर्णमासाङ्गसान्नाय्यप्रकरणे पठ्यते । तत्र हि सायंप्रातर्दोहात्मकं हविर्द्रव्यम् ।

कल्पसूत्रकारास्तु प्रत्येकनाशे पृथक्प्रायश्चित्ताम्नानात् द्वैविध्यस्यापि नाशे इदं प्रायश्चित्तमित्युभयत्वं विवक्षितमेवेत्याहुः ।

यत्तूभयत्वविवक्षायां वाक्यभेदः तथाहि नामपदानांपरस्परमसम्बद्धानामाख्यातान्वयोऽरुणाधिकर-

---

भिमतमिदमेव । तथाच तद्वदत्र विवक्षितत्वेपि न दोष इति विवक्षैव एतेन तदर्थमत्र पूर्वयुक्त्योभयत्वमविवक्षितमिति परोक्तमपास्तम् तथाच नेदमस्य व्यभिचारस्थलमिति भावः ।

अतएवान्यत्तदाहापेति ध्रुवमपाये इत्यत्रेत्यर्थः । भवतीति समुद्रः कुंडिकेत्यादावेिति भावः । इदं यस्योभयमिति । सान्नाय्यपदेन दधिपयसी । सान्नाय्येति सान्नाय्ययागप्रायश्चित्तप्रकरणे छिद्रकांडे इत्यर्थः । तत्रहिं सान्नाय्ययागे यतः परीत्यापि परोक्तिरसंगतेति सूचयितुमन्यथा विवक्षामेवाह कल्पेति तथाचापस्तंबः यस्य सायं दुग्धं हविरार्तिमार्च्छेतींद्रस्य व्रीहीन्निरूप्योपवसेद्यः प्रातः स्याच्छृतं कुर्यादथेतर ऐंद्रः पुरोडाशः स्यात्तस्य प्रातर्दोहे नास्य समवदाय प्रहरेद्यस्योभौ दोहावार्तिमार्छेतामाग्नेयमष्टाकपालं निर्वपेदैन्द्रं पञ्चशरावमोदनमग्निपुरोडाशे च यजेतैंद्रंपञ्चशरावेण यो भेद्र एवते [illegible]तेति ।

तत्परमतमेव खंडयति यत्त्विति । इतिर्हेतौइतीत्यस्य अर्थ इति शेषः । नचार्तिंप्राप्तौ निर्वपेत्‌ साऽन्नार्तिर्हविःसंबंधिनीति तत्रापि वा-

णासिद्ध इति हविरासौ निर्वपेत् तच हविरुभयाभि-
न्नि। ग्रहैकत्वन्यायेन तु न गतार्थता पृथक्पदोपात्तत्वा-
दिति। तन्न। पदोपादानवैयर्थ्यात्। तच्चार्थलाघवानुरो-
धेन तदुपादानस्य यथाकथंचित् अनुवादकत्वकल्प-
ना युक्ता। अकर्तृके वेदे वक्तुरिच्छारूपे विवक्षावि-
षये आरोपिते बोध्ये।

वस्तुतः परस्परासम्बद्धानां नामार्थानामाख्या-
तान्वयो न व्युत्पन्न इत्यग्रे वक्ष्यते उपेयिवाननाश्वा-
ननूचानश्चेत्यादावुपेत्यस्याविवक्षा नञो विवक्षा तु
लक्ष्यानुसारादेव।

क्वचिदुद्देश्यगता विभक्त्यर्थसंख्या विवक्षितैव
यथा गर्गाः शतं दण्ड्यन्तामित्यादौ गर्गा इति बहुत्वं
ग्रहैकत्वस्येवाविवक्षाबीजाभावात्। एतदेवाभिप्रेत्य
संख्याया गुणस्येतिसूत्रे गुणस्येति संख्या विवक्षिता
इत्युक्तं भाष्ये। अतएवात्र समुदाये वाक्यपरिसमा-
प्तिरिति वृद्धिसूत्रे भाष्यम्

---

क्यभेदोऽस्त्येवेति हविषोऽप्यविवक्षा स्यादिति वाच्यं। आर्तिमात्र-
स्यावर्जनीयतया निमित्तत्वासंभवेन तद्विवक्षावश्यकत्वात्।

पृथगिति तस्मादुद्देश्यविशेषणमात्रमविवक्षितमितिभावः। युक्ते-
ति किंचप्रकरणाद्यज्ञांगात्तौ विशेषाविषयेप्रायश्चित्तसंभवेन तवापि
तद्दोषतादवस्थात्। नन्विदं वेदे तावद्बाधितमतआहाकर्तृके इति।

इदं परमतखंडनमपि अभ्युपेत्य। वस्तुतस्तु तदेवनेत्याह वस्तुत
इति। आख्यातेति तदर्थेत्यर्थः। अग्रे समासप्रकरणे अतएव बला-
दित्वमार्धधातुकविशेषणं विवक्षितमेव। नन्वेवमुपेयिवानित्यादौ दो-
षोऽप्यत आहोपेयिवानिति। सर्वथा परमतासांगत्याय संख्यास्थ-
लेपि तदभावमाह क्वचिदिति। अनेनातिप्रसंगो निवारितः अपिः पू-

किंचैकवचनेनैवोपपत्तौ बहुवचनकरणेन बहुत्व-संख्या विवक्षिता अतएव यूपाय छिनत्ति, पशूनन-क्ति, अग्निमादधीतेत्यादावुद्देश्यगतमपि बहुत्वं विव-क्षितमेव एवं विधेयविशेषणमपि अविवक्षाबीजस-त्त्वेऽविवक्षितमेव। यथाऽफलमेनं भोजयेति फलवि-धेयतापरनोदनायां भोजनफलस्य तृप्तेरेकफलभो-जनेऽसंभवात्तात्पर्यानुपपत्त्या विधेयगतैकत्वस्याविवक्षा।

क्वचिच्छब्दोपात्तस्यापि अनुवाद्यविशेषणस्याविवक्षा यथा—

एतौ चेद्व्याधितौ स्यातां देयं स्यादिदमौषधम्।

इत्यादौ। रदाभ्यां निष्ठातो नः पूर्वस्य च द इत्य-त्र न इत्येकत्वविवक्षायामपि चकारेण वाक्यभेद-कल्पनायाः स्थाने प्रत्येकमेकैकनकारलाभः। अस्य पू-लस्य कटं कुरु अस्य पूलस्य कटं कुर्वित्यादौ वाक्यभे-

---

र्वसमुच्चये एवंच तदौत्सर्गिकमेवेति भावः। एतदेव विवक्षाबीजा-भावरूपमेव। अतएव तत्र बहुत्वस्य विवक्षणादेव अत्र गर्गाः शतमि-त्यादौ। ननु शब्दसंस्कारायैव ग्रहैकत्ववत् बहुत्वमस्त्वत आह किं-चैकेति। एवमुद्देश्यस्थलेऽनियमं प्रतिपाद्य विधेयस्थलेऽपि प्रागु-क्तार्थस्यौत्सर्गिकत्वं स्वजीर्णसंमतपरमतासांगत्याय प्रतिपादयति एवमिति।

अनयैव रीत्यानुवाद्यस्थलेपि शब्दोपात्तत्वविषये प्रागुक्तार्थ-स्यौत्सर्गिकत्वेप्युपादानेत्याद्युक्तभाष्यार्थंद्रढयन्नाह क्वचिदिति अत्र द्वेताविव्यविवक्षितमन्यथाऽन्यस्यरोगऔषधदानानापत्तिरिति भावः। नन्वेवमपि पश्वेकत्वन्यायेन रदाभ्या मित्यादौ दोष एवात आह र-दाभ्यामिति चकारेणेति पूर्वस्येति विभिन्नविभक्तिनिर्देशेन वेत्यपि

देनानेककटकरणकप्रतीतिवद् आद्गुण इत्यादौ तु पूर्वपरयोरिति द्वन्द्वनिर्देशेनैकवाक्यतयैवोभयोः स्थाने एकगुणविधानाद् न स्थानिभेदेनानेको गुणः विधेयगतसंख्याया अविवक्षायां बीजाभावाद् यथाऽनयोः पुलयोः कटं कुर्वित्यादौ एकवाक्यतयैव बोधाद् उभयसंबन्धिनः एककटस्यैव करणप्रतीतिरित्येकः पूर्वपरयोरिति एकग्रहणं भाष्ये प्रत्याख्यातम् ।

ननु यथा आधानेनाग्निं संस्कुर्यादित्याद्यर्थकं वसन्ते ब्राह्मणोऽग्निमादधीतेत्यादिवाक्यं अग्न्यादिसंस्कारमात्रफलकं प्रति ब्राह्मणं सकृदेव स्वविषये प्रवर्त्तकं चातएव पुनः पुनस्तदाधानादिसंस्कारः । तथा आद्गुण इत्यादेः व्याकरणस्यावर्णादचि पूर्वपरयोर्गुणो भवति गुणवच्छब्दरूपं साधु भवति तच्च प्रयोक्तव्यमित्येतत्पर्यंतं व्यापारेऽपि तच्छास्त्रं प्रतिपुरुषमेकवाक्यतया सकृदेव बोधकमिति तत्संकृतस्यैकस्य खट्वेन्द्रस्य प्रयोगेण शास्त्रार्थस्य करणान्मालेन्द्रादिप्रयोगो न स्यात् । अतस्तल्लक्ष्यविषयकाभिन्नसूत्रोपप्लवेन वाक्य भेदोवाच्यः तद्वत् पूर्वपरविषयेऽपि स्यादित्येकपदमावश्यकमिति चेन्न ।

एतच्छास्त्रबोध्यस्य तच्च प्रयोक्तव्यमित्यंशस्य नि-

---

बोध्यमत एवाहास्येति वाक्यभेद इति पूर्वविशेषणं । तदुक्तिफलमेवाहाद्गुण इति ।

नन्वेवं शास्त्राधिकारिपुरुषान्प्रति प्रवृत्तं तत्तच्छास्त्रं प्रति पुरुषमेकवाक्यतया सकृदेव बोधकं स्यादित्याशयेन प्रत्याख्याने शंकते नन्विति । अग्निं अग्नित्वावच्छिन्नं । तमेवाशयमाह तच्छास्त्रमिति । आद्ययोरतत्वादाद्येत्यंशस्येति अस्याग्रेऽप्यन्वयः । शास्त्रस्येति आतावेकवचनं

त्यकाम्यत्वेन नित्यनैमित्तिककाम्यधर्मोपदेशकशा-स्त्रस्येवासकृत्प्रवृत्तिसंभवात् । स्वाभावे पापजनकं नित्यम् । यथा ब्राह्मणहिंसा तद्बोधकं न ब्राह्मणं हन्यादिति ब्राह्मणमात्र विषयम् । नैमित्तिकं राहूपरागादिस्नानं तदकरणेदोष श्रवणाद्राहूपरागमात्रविषयम् । काम्यं ज्योतिष्टोमादि तद्बोधकं वाक्यं कानानामानन्त्यात् आवृत्या वाक्यभेदेन पुनः पुनः प्रवर्त्तते ।

एव अर्थबोधनाय प्राप्ते शब्द प्रयोगे साधुभिर्भाषितव्यं नासाधुभिरित्यनेनासाधुप्रयोगे पापश्रवणान्नित्यसमत्वम् साधुप्रयोगस्य । एकः शब्दः सम्यक् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुक् भवतीति भाष्ये पठितश्रुत्या (स्मृत्या वा) काम्यत्वमप्यास्यानेन प्रयुक्तिलाघवात् अर्थ बोधनाय प्राप्ते एव प्रयोगे फल सम्बन्धबोधनं दर्शपूर्णमासयोरिव । एतेनैकस्यैव पुनः पुनः प्रयोगेणानेककामनाफलसिद्धिरिति अपास्तम् ।

---

धकंशास्त्रं । दिनासंक्रांत्यादि । एवं पूर्ववया ब्राह्मणः प्रत्युत्थेय इत्यपि । तत्रापि तदकरणे दोषश्रवणात्तस्य पूर्ववयोमात्रविषयता वाक्यमपि ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिकं ।

तस्योक्तं तत्वमुपपादयति एवमिति । तद्बोधकस्य वन्ध्यादेरभावादाह नित्यसमत्वमिति । तस्य तद्विधेरुक्तस्य । भाष्येति एकःपूर्वपरयोरितिसूत्रेत्यादिः । श्रुत्येति श्रुत्या काम्यत्वमप्यस्येति पाठः । स्मृत्यावेत्यपपाठः । अनेन श्रुतिवाक्येन प्राप्त एवेति अन्यथा सुप्रयुक्त इत्यनुवादासंगतिरेव स्यात् । एतेन उक्तरीत्या तस्यासकृत्प्रवृत्तिसंभवेन ।

अत्र सम्यक्ज्ञातः कोपि अर्थबोधनाय सुप्रयुक्तः शिक्षायुक्तमार्गेण प्रयुक्तः कामधुक् भवति किं वक्तव्यं सर्वेऽपीति सर्वेषां तथा प्रयोगः कार्य इति बोधनात्सर्वशब्दानां आवृत्त्या वाक्यभेदेन शास्त्रविषयता सूचिता। शास्त्रान्वित इत्यनेन शास्त्रस्मरणपूर्वकप्रयोगे धर्मः सूचितः। तत्तल्लक्ष्यविषयोपप्लुतवाक्ये गुणो भवतीति अंश आधानादिवद् लक्ष्यसंस्कारक एवेत्यावृत्तौ मानाभावाद् नैकलक्ष्ये पूर्वपरादिभेदेन पुनः पुन स्तस्य प्रवृत्तिः। तस्य प्रयोक्तव्यमित्यंशस्य नित्यकाम्यबोधकस्य तत्तल्लक्ष्यविषयकानन्तवाक्योपप्लवेन सजातीयानां च पुनः पुनः प्रयोगसिद्धिरिति बोध्यम्।

एवं पशुना यजेतेत्यादयोऽपि नैमित्तिका एव। भाविनोऽपि प्रधानस्य बुद्ध्यारूढत्वेन निमित्तत्व मिति विध्यावृत्त्या प्रतियागमेकैकपशुलाभः। एतदेव पठ्यते-

---

ननूक्तश्रुतावेकः शब्दइत्युक्तस्तदेव श्रुतितात्पर्यमितीदमयुक्तमेवात आहात्रेति उक्तश्रुतावित्यर्थः। तत्र बीजमाहार्थेति सारार्थमाहशिक्षायुक्तेति शंककोक्तं निराचष्टे तत्तदिति। आधानोपनयनाचमनादिविधयो नोक्तान्यतमधर्मोपदेशकास्तत्करणाभ्यां शुभादृष्टानुत्पत्तेः। किन्त्वग्न्यादिसंस्कारफलका एव तत्कार्यमग्निहोत्रवेदाध्ययनादितु करणाकरणाभ्यां धर्माधर्मजनक मित्यन्यत् अतो न तेषां पुनरावृत्तिस्तदिति भावः। एवञ्चैकग्रहणप्रत्याख्यानं युक्तमेवेति तात्पर्यम्। नन्वेवमप्येकस्य पुनः पुनः प्रयोगो न स्यादतआह तस्येति प्रत्यवायपरिहाराय फलप्राप्तये चेति भावः। प्लवेनेति वाक्यभेदादिति भावः।

एवं नित्यकाम्यस्थले उक्त्वा नैमित्तिकस्थले आह एवमिति। ननु यागस्यासिद्धत्वेन कथं निमित्तत्वमत आह भाविनोऽपीति अकरणे

संग्राहकवाक्याल्लक्ष्यसंस्कारकाणि वाक्यान्युपप्लवन्त इति प्रति प्रधानं गुणावृत्तिश्च। अतएव विधिवाक्यात्तेन पुरुषेण स्वस्वप्रवृत्त्यनुकूलव्यापारविषयत्वस्य स्वीयस्वीयभागे ग्रहात् तत्र मदिष्टसाधनत्वस्य मत्कृतिसाध्यत्वस्य ग्रहे तत्तत्प्रवृत्त्युपपत्तिः। व्याकरणे च बालान्प्रति प्रतिप्रयोगं तत्तत्सूत्रयोजनं कार्यमितिव्यवहारात् आवृत्तिः सिद्धैव

भूवादयो धातव इत्यादौ प्रत्येकं धातुत्वपर्याप्तिबोधनाय बहुवचनम्। हरिरप्याह—

एकं ग्रहणकं वाक्यं सामान्येनाभिधीयते
कर्त्तरीति यथा तच्च पश्वादिषु विभज्यते
एकरूपमनेकार्थं तस्मादुपनिबन्धनम्
योनिर्विभागवाक्यानां तेभ्यो ऽनन्यदिव स्थितम्

ग्रहणकवाक्यत्वाभावे यत्किंचिद्योगेन परिक्षीणशक्तित्वात् अन्येन प्रत्ययविधायकेन कर्त्तरि कृदित्यादिं न संबध्येत। अतएव पशौ कर्तरीत्यादि उप-

---

प्रत्यवायादेवाह विध्यावृत्त्येति। एतदेव एत न्मूलकमेव। अत एव अनन्ततदुपप्लवादेव। तत्तत्पुरुषे विधिप्रवर्त्तनादेव। नन्वेवमपि व्याकरणे पूर्वांशस्येष्टावृत्तिलाभो न स्यादत आह व्याकरणेचेति। एवंच तथा तदभावेप्येवं प्रकारेण सेति भावः।

नन्वेवं धातव इति बहुवचनं व्यर्थमुक्तरीत्यैव सिद्धेरत आह अवेति। उक्तेऽत्रसंमतिमाह हरिरपीति अत्र पूर्वार्धार्थे। यथेत्यन्तो दृष्टान्तः। तच्चेत्यादिर्द्वितीयोर्थस्तस्मादित्यादिस्तृतीयोर्थः। ग्रहणकेति सङ्ग्राहकेत्यर्थः। अनेन व्यतिरेकमुखेनोक्तार्थः प्रदर्शितः यत्किञ्चिदिति प्रत्ययविधीत्यर्थः। परीति बहुव्रीहिः। कर्तरीत्यस्य विषयमाह कर्त्तरि कृदिति विशेष्य अस्य फल माहातएवेति दृष्टान्ततयो-

पद्यते । उपनिबन्धनं बहूनां वाक्यानां निबन्धनं तथा-नं तेभ्यो विभागवाक्येभ्यः अनेकार्थं यथा हृकुल्कृ-ञोरि अणूकर्त्तरीत्याद्यनेकार्थबोधकमित्यर्थं पुञ राजः।

एवंच विभक्त्यर्थसंख्यारूपमनुवाद्यविशेषणं विरो-धे सत्यर्थापरिच्छेदकमेव । अविरोधि तु तत्परिच्छे-दकतया तत्रान्वय्येव एतेन सुप्सुपेत्यादावेकत्वं विव-क्षितं तेन सुबन्तसमुदाये न समास इति कैयटाद्युक्त-मपास्तम् । किंच तत्रैकत्वविवक्षायां सर्वं सुबन्तैः समासालाभः सर्वप्रातिपदिकाच्च प्रत्ययालाभः । किंच सुबुत्पत्तिवाक्ये तेषां बहुत्वसंख्यावगमेन तद्वि-रोधादत्रैकत्वविवक्षा न युक्ता ग्रहैकत्ववत्

सुबन्तसमुदायेन समासस्तु भाष्यकृतेत्थं वारितः। सुप्सुपेति वर्त्तते। ननु च भोः आकृतौ शास्त्राणि प्रवर्त्त-न्ते प्रातिपदिकात्सुप्सुपेत्युक्तेऽन्यस्मादन्यस्माच्च प्रत्ययः क्रियतेऽन्येनान्येन सुबन्तेन च समासः क्रियते । नैष दोषः । आकृतिस्तु प्रत्येकं समाप्यते । यावत्येतत्समा-प्यते प्रातिपादिकादिति सुप्सुपेति च तावतः प्रत्ययोत्पत्त्या तावता समासेन भाव्यं प्रत्येकं च स

---

तपरमादीत्यस्य विषयमाह पद्याविति हरतेरित्यादिसूत्रे इति भावः। राज इत्यस्याह्रातिशेषः ।

विशेषं वक्तुं प्रकृतमुपसंहरति एवञ्चेति तस्याविवक्षणे चेत्यर्थः। एतेन अनुवाद्यविशेषणत्वेनार्थापरिच्छेदकत्वेन तानुद्दिश्य समास-विधानात् । आदिना प्रातिपदिकादि । अत एवाह सर्वप्रातीति न केवलं तत्वं किन्तु तद्विरोधोपीत्याह किञ्च सुबिति ।

एतेनतेषामुत्पत्तिवाक्यादनेकत्वावगतेर्जातिपक्षे तज्जात्याक्रान्त-तया व्यक्तिपक्षे च विनिगमनाविरहात्सर्वव्यक्तिषु प्रवृत्तिः सिद्धेत्यप-

मापद्यते प्रातिपादिकादिति द्वयोश्चैतत्समाप्यते सुप्स-पेतीति। आकृतावित्यस्य तज्जात्याश्रये सर्वत्रेत्यर्थः।

अतएव सरूपसूत्रे भाष्ये जातेः पदार्थत्वे गौरनुबन्ध्य इत्यत्र सर्वानुबन्धनाभावे कर्मवैगुण्यमाशङ्क्य यद्यपि तत्पक्षेऽनवयवेन साकल्येन चोद्यते तथापि जातिःप्रत्येकं समाप्यत इत्येकानुबन्धनेऽपि कर्मावैगुण्यमुक्तम्। ननु जातावुक्तं कार्यं यत्र क्वचित् व्यक्तौ करणेन शास्त्रस्य कृतत्वाद्व्यक्त्यन्तरे न प्रवर्तेतेत्युक्तम्।

तथानित्यवीप्सयोरिति सूत्रे व्याप्तिप्रतिपिपादयिषारूपवीप्सोपादाने किं प्रयोजनमिति प्रश्ने साकल्येन द्रव्याणां क्रियागुणादिसम्बन्धप्रतिपादनरूपमनवयवाभिधानं तदुपादाने प्रयोजनमित्युक्त्वा यद्येवं जात्याख्यायां द्विर्वचनं प्राप्नोति व्रीहिर्यव इति जातौ पदार्थे साकल्येन सर्वद्रव्यप्रतिपत्तिरिति च कैयटः। न वैकार्थत्वाद् जातेरनेकार्थाश्रया च वीप्सा इति परिहृतमित्यन्यत्॥

---

स्तं तथा सति तद्वदविवक्षाया एव फलितत्वात्तदाह ग्रहैकत्वेति नन्वेवं सुबन्तसमुदायेन महत्कष्टं श्रित इत्यादौ समासापत्तिरवात आह सुबन्तेति समर्थसूत्रे इति भावः। यथाश्रुतासैङ्गतेराहाकृतीति आकृति पदवाच्यजातीत्यर्थः। जातिपक्षे सर्वत्र प्रवृत्तौ भाष्यसम्मतिमाहातएवेति तत्पक्षे सर्वत्र प्रवृत्त्यभिमतत्वादेव। तत्पक्षे जातिपक्षे। अनवयेत्यस्यैव व्याख्या साकेति। स्पष्टार्थमस्य व्यत्रच्छेद्यमाह नन्विति।

अत्रैव भाष्यान्तरमाह तथेति। सूत्रे इति भाष्ये उक्तमिति शेषः। योग्यतया लक्ष्यार्थमाह प्रतीति। इतिर्भाष्यसमाप्तौ। तदाशयमाह जाताविति। चो व्युत्क्रमे कैयटश्च। शङ्कोक्तस्यासिद्धान्तिसंमतत्वसूचनायाह नवेति। उक्तभाष्यद्वयीयसमाधितात्पर्यं माहायमिति। स्वांगस-

अयं भावः—यथा स्वाङ्गत्वस्य जनपदत्वस्य च प्रत्येकं समाप्त्या स्वाङ्गसमुदायजनपदसमुदाययोर्न स्वाङ्गग्रहणेन जनपदग्रहणेन च ग्रहणं तथा प्रातिपदिकादिपदप्रवृत्तिनिमित्तप्रातिपदिकत्वसुबन्तत्वादीनां प्रत्येकं समाप्त्या न तत्समुदायस्य ताभ्यां पदाभ्यां ग्रहणमिति। न च स्वाङ्गादित्यादौ एकत्वविवक्षया तदर्थलाभः। तत्रत्यैकत्वस्य सबोधकप्रत्ययप्रकृत्यर्थस्वाङ्गवाचकशब्दान्वितत्वेऽपि स्वाङ्गान्वितत्वैकस्वाङ्गवाचकादित्यर्थलाभेन सुन्दरपाणिपादेत्यादौ ङीष्वारणासंभवात्स्वाङ्गवाचकपाणिपादशब्दस्यैकत्वात्।

किंच ङ्याप्प्रातिपदिकादित्यादौ समासे संख्याया अभानेन प्रातिपादिकसमुदायात् प्रत्ययो दुर्निवारः। श्रूयमाणविभक्त्यर्थैकत्वं तु तत्रसमुदायान्वयि तस्मात् भाष्योक्तं समाधानमेव युक्तम्।

किंचैवं स्त्रीभ्यो ढगित्यादेः स्त्रीप्रत्ययान्तसमुदायादापत्तिः। यथा च बहुवचनसत्त्वेऽप्येकैकस्त्रीप्रत्ययान्तादेव प्रवृत्तिः न तत्समुदायादेवमन्यत्रापि।

पशुना यजेतेत्यादौ त्वविरोधादेकत्वस्य प्रकृत्य-

---

मुदायस्य जनपदसमुदायस्य चेति पाठः। एवमग्रे तत्पदेन ग्रहणमिति पाठः। कैयटाशयमाह नचेति। स्वमेकत्वं एको यः स्वाङ्गवाचकः शब्द इत्यस्यैव ततो लाभेन तावनेष्टासिद्धिरिति भावः। समासे इति उपसर्जने इतिशेषः। अभानेनेतिपाठः। तस्मात्कैयटाद्युक्तरीतेस्तत्र न्यायतः सम्भवात्। एवं तत्रैकत्वविवक्षावदत्र बहुत्वाविवक्षया। इत्यादेरिति इत्यादिविहितढगादेरित्यर्थः। इत्यादाविति-पाठ विषयसप्तमी।

परमप्रकृतं विशेषयाह पशुनेति। तमेवाह केचित्त्विति। तत्त्वादिति एकप्रयोगीयानेकयागव्यक्तीत्यर्थः। अतएवाह सकलेति तदेव-

र्थान्वयित्वं इत्येतावता विवक्षाव्यवहारः ।

केचित्तु तत्तद्यागव्यक्तिविषयेणानेन पश्वयन-साध्यसकलयागव्यक्त्युद्देशेन पशोर्विधानं तत्र यावन्ति पशुत्वं समाप्यते प्रत्येकं तस्य विधानं प्राप्नोति अनेकयागानामुद्देश्यत्वात् । तद्वारणायैकत्वविवक्षा अन्यथा रुद्राभ्यामित्यादाविवोद्देश्यानेकत्वेनानेकपशुविधानं स्यात् । यद्यपि एकेनैव सकलावयवलाभात् वृथा पशुवधभिया नैवानेकपशोर्विधानं तथापि तदविवक्षायां मांसलोभेनाज्ञानेन वानेकपशुकयागकरणे कर्मवैगुण्यं न स्यात् पशुत्वपर्याप्त्यधिकरणेन तदनुष्ठानादतस्तद्विवक्षा ।

न चात्रैकत्वविवक्षायामेकपशोरेव यागः स्यान्न पश्वन्तरस्येति शङ्कापि प्रतियागसमुदायात्मकयागव्यक्ति एकैकपशो र्विधानात् यागत्वावच्छेदेनैकपशो र्विधानासंभवादित्याहुः ।

एवं लिङ्गस्यापि विवक्षाविवक्षे बोध्ये ।

इति सुबर्थसंख्याविचारः ॥

---

दृष्टान्तेन द्रढयति अन्यथेति तदविवक्षायामित्यर्थः । उक्तमेव विशदयति यद्यपीति मांसेत्यादेर्मध्यमणिन्यायेनान्वयः । अत्र पक्षे प्रतीत्यस्य व्यक्तीत्यत्रान्वयः । ननु एकप्रयोगे इष्टसर्वप्रयोगेपि एकस्यं पशोर्विधानापत्तिरत आह यागत्वेति । केचिदित्यरुचिबीजं तु सर्वं वाक्यं सावधारणमिति न्यायेन पशुत्वपर्याप्त्यधिकरणकेनैव यागेनेष्टं भावयेदित्यर्थलाभेनानेकपशुकयागे च तदनधिकरणपशुसमुदायेन यागानुष्ठानात्तद्वैगुण्यमेव एकत्वविवक्षायामप्येकेनैव नानेकेनेति नियमेनैव कर्मवैगुण्यस्योपपादनीयत्वादिति । उक्तं सर्वमन्यत्र तथैवातिदिशति एवमिति ।

इति सुबर्थसंख्यानिरूपणम् ।

## अथ वृत्तिविचारः।

तद्विषयं समर्थः पदविधिरिति सूत्रं सामर्थ्यं चाऽऽैकार्थीभावः। पृथगर्थानामेकार्थीभावः सामर्थ्यं राजपुरुष इति समासे एकार्थानीति भाष्यात्। एवञ्च यत्किञ्चित्पदजन्यपृथगुपस्थिति विषयार्थकत्वेन लोके दृष्टानां शब्दानां विशिष्टविषयैकशक्त्यैवोपस्थितिजनकत्वमेकार्थीभाव इति फलितम्। तेषां तत्त्वं तु साद्दश्याद्बोध्यम्। कार्यशब्दं मन्वतां वाक्यादेव वृत्तिनिष्पत्तिबुद्धेर्वा।

एकार्थीभाव इति च्विनिर्देशो गौणमेकार्थत्वं समासघटकपदानां बोधयितुं। यथा पदानामसत्त्वात्तत्सत्ताव्यवहारो गौणः तथा तेषामेकार्थत्वव्यवहारोऽपीति बोध्यम्।

विभक्त्यन्ते एतद्धारणाय दृष्टानामित्यन्तं, तेषां लोके तत्त्वेन दृष्टत्वात्। औपगवादौ प्रत्ययानां तथा दृष्टत्वाभावेन यत् किञ्चित्पदजन्येत्युपस्थितिविशेषणम्। अपत्यरूपार्थस्योपगोरपत्यमस्तीत्यादौ तथा

---

अथेति सुबन्तप्रकृतिकसमासघटितत्वादिति भावः। तद्विषयं वृत्तिविषयकं। अत्र उक्तसूत्रे भाष्यमर्थत आह पृथगिति। किं समर्थं नामेत्यादिस्तत्रत्यः। एवं च तथा तदुक्तौ च। विशिष्टेति बहुव्रीहिः। ननु तयोर्भेदादयुक्तमिदमत उक्तभाष्याशयमाह तेषामिति पदानामेकोपस्थितिजनकत्वमित्यर्थः। सादृश्यात् वाक्यीयत्वाध्यवसायेन अतएवाहेकेति नित्यत्वपक्षे इदं। अत एव पक्षान्तरमाह कार्यमिति जातावेकवचनं॥

गौणत्वमेव विशदयति यथेति। एतदिति एकार्थीभावेत्यर्थः। तत्त्वेन तदर्थकत्वेन। प्रत्ययानां तद्धितानां। नन्वेवं पूर्वातिप्रसङ्ग एवा-

दर्शनसत्त्वात् । विभक्त्यर्थस्य तु न तथात्वं तद्वाच्यार्थवाचकस्य शब्दान्तरस्याभावादिति निरूपितम् ।

विशिष्टविषयैकशक्त्येति हेतुवचनं, अत एव कैयटः अन्य एवावयवार्थान्वितः समुदायार्थः प्रादुर्भवतीति तदपेक्षयैकार्थीभाव उच्यते पांसूदकवदविभागापन्नत्वादिति ।

अयं भावः—वाक्ये यथा पदैः पृथक् पदार्थानां बोधेऽप्याकाङ्क्षामूलकवाक्यशक्तिवशाद्विशेष्यविशेषणभावापन्नविशिष्टार्थप्रतीति नैवं वृत्तौ । किन्तु अवयवशक्तिभ्यामाकाङ्क्षामूलकसमुदायशक्तिसहकृताभ्यां नियतोद्बोधकवशात्पदार्थबोध एव जायमानो विशेष्यविशेषणभावापन्नविशिष्टविषयो भवति तत्र विशिष्टशक्तिग्रह इत्थं राजपुरुषादिपदं राजसम्बन्धवत्पुरुषादौ शक्तमिति । तत्र सा विशिष्टशक्तिः प्राप्ताप्राप्तविवेकन्यायेन सम्बन्धांशे विशेषणत्वाद्यंशे च पर्यवस्यति, राजादेः क्लृप्तावयवशक्त्यैवोपस्थितिसम्भवात् ।

आकाङ्क्षामूलकेति विशेषणात् नित्यघट इत्यादेर्नैकार्थीभावेन साधुत्वम् ।

---

त आह विभेति । शक्त्यादेर्नयत्किञ्चित्पदजन्यपृथगुपस्थितिविषयत्वमित्यर्थः । निरूपितं कारकप्रकरणे । हेत्विति तत्स्वरूपबोधनायेति भावः । अतएव ईदृशैकार्थीभावाङ्गीकारादेव । उभय तात्पर्यमाहाय[illegible]ति । तच्छक्यमाह विशेष्येति सार्वत्रिकत्वायाह निपेति । तत्र तयोर्मध्ये । तत्र वृत्तौ । सम्बन्धेति स्वस्वामिभावादीत्यर्थः । विषयताया अपि शक्यत्वस्य प्राङ्निरूपितत्वादाह विशेषणेति । अतएव वि-

विशेषणत्वेनापस्थितघटत्वादेः स्वविशेषणकाकाङ्क्षाऽभावाद् अतो नित्यो घट इत्यादिवाक्यमपि न। अत एव राजपुरुषैकदेशे राज्ञि वाक्य इव ऋद्धस्येत्यादिविशेषणान्वयो न तस्य पदार्थैकदेशत्वात्।

यद्यपि तस्य राजपदार्थत्वमस्ति। तथापि विशेषणान्वये विशेष्यस्येतरविशेषणत्वविषयकशाब्दिकज्ञाविषयत्वस्य तन्त्रत्वेनेतराविशेषणत्वेन ज्ञानस्य तन्त्रत्वेन वा दोषाभावः। एतन्मूलिकैव पदार्थः पदार्थेनान्वेति ननु पदार्थैकदेशेनेति व्युत्पत्तिः।

दर्शनीयायाः माता दर्शनीयमाता इत्यादौ एकविशेष्यकप्रतीतिजनकत्वरूपसामानाधिकरण्यसत्वेऽपि न पुंवत्त्वम्। वृत्तेःपूर्वमपि यत्र सामानाधिकरण्यं तत्रैव पुंवत्त्वप्रवृत्तेर्भाष्यसंमतत्वात्। राज्ञि विशेषणान्वयरूपविशेषस्यैकार्थीभावकृतत्वं भाष्ये दूषितम्। एकार्थीभावसत्वेऽपि देवदत्तस्य गुरुकुलमित्यादौ तदभावात्।

---

शिष्टशक्तिस्वीकारादेव। णत्वविषयकेति पाठः।

लाघवादाहतएवेति। तत्र प्रत्येकशक्तिविशेष्यत्ववत एव समुदायशक्तिगम्यविशेषणत्वेनोपस्थितेर्विद्यमानमपि राज्ञिराजपदार्थभूतविशेष्यत्वं विशिष्टशक्तिगम्यया विशेषणतया तिरोभूतं प्रकारभावेनेत्यर्थः। एवं सति प्रसक्तपुंवत्वातिप्रसङ्गं निराचष्टे दर्शेति वक्ष्यमाणभेदार्थं वाक्योपादानं अतएव पट्वीमृद्व्याविति द्वन्द्वे युगपदधिकरणतावचनपक्षे पुंवत्वमापादितं भाष्ये। अपिना वृत्तिसमुच्चयः।

भूषणादिसकलप्राचीनग्रन्थासाङ्गत्यायोक्तमपीदं न भाष्यसंमतमित्याह राज्ञीति तदाद्याविवित्यर्थः। तत्रान्वयव्यभिचारमाहैकार्थीति तद् अनन्वयः। भाष्यीयन्यूनतां परिहरन् व्यतिरेकव्यभिचारम

इदमुपलक्षणम् । घटादिपदे एकार्थीभावाभावेपि तदेकदेशे घटत्वादौ विशेषणान्वयाभावादित्यपि बोध्यम् । राज्ञः पुरुषोऽश्वश्चेतिवद्राजपुरुषोऽश्वश्चेत्यप्यत एव न । एकत्र विशेषणत्वेन गृहीतशक्तिकस्य ज्ञातस्य वा परत्र विशेषणत्वायोगात् । घटः पटश्च द्रव्यमितिवत् तदर्थे द्रव्यपदस्य घटरूपविशेषपरतायां द्रव्यं पटश्चेत्यप्रयोगात् । एवं राज्ञः पुरुषो भार्यायाश्चेतिवद् राजपुरुषो भार्यायाश्चेति न । एकविशेषणवैशिष्ट्येन गृहीतशक्तिके ज्ञाते वा विशेष्ये तत्सजातीयसम्बन्धेन विशेषणान्तरसंबन्धस्याव्युत्पत्तेः । घटो द्रव्यमित्यर्थे घटो द्रव्यत्ववदित्यप्रयोगात् ।

तदुक्तं भाष्ये राजा पुरुषं स्वाम्यन्तरेभ्यो निवर्त्तयति पुरुषोऽपि राजानं स्वान्तरेभ्यो निवर्तयति इति ।

राजसंबन्धविशिष्टे भार्यायाः प्रतीतिविषयत्वादिसंबन्धबोधको राजपुरुषो भार्याया इति प्रयोगस्तु राजपुरुषः सुन्दर इतिवदिष्टः।तत्र सुन्दरनिष्ठप्रकारतानिरूपितपुरुषनिष्ठविशेष्यताया अवच्छेदकं पुरुषत्वमेव नतु राजसबन्धोऽपीत्यभिप्रायेण प्रधानस्य सविशेषणत्वेऽपि वृत्तिरिति व्यवहारः । एवं सर्वत्र विशिष्टविष-

---

व्याहेदमिति तदिति तदर्थेत्यर्थः । तस्य फलान्तरमाह राज्ञ इति अत एवेत्यस्यार्थमाहैकत्रेति । प्राग्वत् पक्षान्तरमाह ज्ञातस्यैवेति । अत्र हेतुमाह घट इति । लक्षणया आह घटरूपेति । पक्षान्तरमाहैवमिति अस्यार्थमाहैकेति । प्राग्वदाह ज्ञातेवेति । उभयत्र संमतिमाह तदिति उभयमित्यर्थः । उक्तान्यातिप्रसङ्गमुक्तरीत्या प्राप्तमिष्टापत्त्याऽन्यथा परिहरति राजसम्बन्धेति ।

नन्वेवं प्रधानस्य सविशेषणत्वेऽपि वृत्तिरिति व्यवहारोच्छेदाप-

यकज्ञाने विशेष्यतावच्छेदकत्वादि विशेष्यनिष्ठधर्मे ए-
वेति बोध्यम् । विशिष्टस्य विशेष्यानतिरेकाद् इति
कर्मधारयप्रकरणे स्फुटीभविष्यति ।

एकार्थीभावबलादेव वृत्तावुपसर्जनपदार्थे संख्या-
बोधकप्रातिपदिकाभावे एकत्वादिरूपसंख्याविशेषान-
वगतिस्तेन द्विपुत्रादौ न दोषः । मासजातादावपि श-
ब्दान्न तद्बोधः । किंत्वनेकमासजाते द्वित्रिशब्दादिपूर्व-
मासजातस्यैव प्रयोगाद् एकमासजातविषय एवायं
प्रयोग इति निश्चयः । त्वत्पुत्रो युष्मत्पुत्र इत्यादाव-
पि प्रयोक्तुरहंकारानास्पदचैत्रपुत्र इत्येव बोधःविग्रह-
वाक्यीयैकवचनत्वारोपेणादेशः । अयं चारोपो न बो-
धफलकः,किंतु शास्त्रप्रवृत्तिमात्रफलकः, वृत्तेस्तथाबोधे
भाष्यकृताऽसाधुत्वबाधनात ।

यत्तु आदेशतदभावाभ्यां तत्र संख्याविशेषाव-
गतिः भाष्यं तात्पर्यग्राहकाभावे सतीति पूरणीयमिति।

तन्न । तद्विधायकशास्त्राज्ञानवतः तद्बोधानाप-

---

त्तिस्त्वद्रीत्या वृत्तौ केवलविशेष्ये विशेषणान्वयस्यैवाभावात् अत
आह तत्रेति दृष्टान्तवाक्ये इत्यर्थः । एवं च तथा प्राचीनग्रन्थासंग-
त्या एवेति बोध्यं । नकेवलमत्रैवेत्थं किन्त्वन्यत्रापीत्याहैवमिति ।

प्राचां ग्रन्थासाङ्गत्यायाहैकत्त्वादीति । तेन संख्याबोधकेति वि-
शेषणेन नचैवमन्यत्राप्रसंगापत्तिरतआह मासेति गमकाभावादि-
ति भावः। तस्यैव तच्छब्दस्यैव । एवमन्यत्रापीत्याहत्वदिति । प्रागुक्त-
सिद्धान्तमतेनाह प्रयोक्तुरिति । नन्वेवं कथ मादेशतदभावावत
आह विग्रहेति नन्वेवं बोधोपि स्यादत आहायं चेति ।

कैयटयुक्तिं खण्डयति यत्त्विति तत्र उभयो स्तयोः तात्पर्येति ननु
संख्याबोधकेतीति भावः । तदिति मादेशेत्यर्थः । पक्षान्तरे प्राप्ति

से: । विग्रहे द्विवचनबहुवचनान्तत्वेऽपि एकार्थीभाव-बलाद्वृत्तौ तद्बोधः । अतएव प्रगृह्यसंज्ञासूत्रभाष्य-प्रयुक्ते कुमार्योरगारं कुमार्यगारमित्यादौ द्विवचना-न्तेन विग्रहेऽपि वृत्तौ द्वित्वाबोधः, किन्तु कुमारीत्वा-दिनैव कुमारीद्वयबोधः । अन्यथा सिद्धान्ते प्रगृह्यत्वा-भावेन द्वित्वद्वयप्रकाशकाभावादस्य प्रयोगस्यासाधुत्वे-नासाधुप्रयोगे भगवतोऽप्रवृत्तेयतापत्तिः । एवंच वृ-त्तौ संख्यानवगमेऽपि अनेकार्थप्रतीत्या तथा विग्रहे बा-धकाभावः । अतएव संख्याविशेषानवगतिरेवोक्ता नत्वनेकार्थानवगतिरुक्ता । चित्रगुरित्यादौ गोत्वेनैव शाब्दतोऽनेकगोव्यक्तिबोधः नतु बहुत्वेन । तन्मध्य इत्यादौ तत्वेनैव व्यक्तिद्वयबोधो नतु द्वित्वधर्मेणैवम-न्यत्राप्यूह्यम् ।

अतएव कुक्कुटेन्द्रगोपवाचकगोषुचरवर्षासुजा-दौ बहुवचनसत्वेऽपि न संख्याविशेषबोधः । अत्र ता-दृशस्यैव रूढत्वाद् बहुवचनान्तेनैव विग्रहः । एवं चा-

---

सत्वादाह सिद्धांते इति । इंदुदेदंतं द्विवचनमित्यर्थे इत्यर्थः । अस्य विग्रहवाक्यस्य । तदुपपत्तिमुक्तां द्रढयति एवंचेति तथाबोधानगी-कारेवेत्यर्थः। अतएव तथातत्प्रतीतेरेव।उक्ता भाष्ये । अन्यत्राप्येवमे-वेत्याह चित्रगुरित्यादि इत्यादावपीत्यर्थः । एवमग्रेपि । अनेकत्वं व्य-क्त्यन्वयि ।

यद्विशति मने दोषान्तरं सूचयन्नाहातएवेति वृत्तौ तद्बलात्सर्वथा-तदनंगीकारादेवेत्यर्थः । कुक्कुटश्चेंद्रगोपश्चतयोर्वाचकौ यौ तौ तदा-द्यावित्यर्थेन समुदितान्वयमात्रे एव तात्पर्यं नतु यथासंख्यान्वये इति-न प्रयोगानुपपत्तिरिति बोध्यं । नन्वेवमन्यवचनांतघटितप्रयोगस्या-पत्तिरत आहात्रेति उभयत्रेत्यर्थः ।

आरोपितबहुत्वाश्रयो बहुवचनरूपः संस्कारो नतु प्रकृत्यर्थान्वयी। यथा च वदा इत्यादितो बहुत्वेनैव कदाचित् त्रयाणां कदाचित् चतुरादीनां भानं, नतु कदाचिदपि त्रित्वचतुष्ट्वादिना, तथा वृत्तौ राजत्वादिनैवैकानेकव्यक्तिभानं तात्पर्यवशान्नत्वेकत्वद्वित्वादिना।

दन्तोष्ठस्य दन्ताः स्निग्धतरा इत्यादौ च संख्याया अभानाद् दन्तत्वेनोष्ठत्वेन दन्तौष्ठलक्षणार्थद्वयस्य प्रतीतेस्तत्रैव। अनेकव्यक्तिसत्वेऽपि तासामनेकत्वेन शब्दतो भानाभावादिति बोध्यम्। एतद्वत्स्तोकाभ्यां मुक्त इत्यादावलुकि न साधु। अनभिधानाद् इति स्पष्टं भाष्ये।

जातौ बहुवचनमिति कैयटोक्तं तु न युक्तम्। जात्याख्यायामित्येतत्सूत्रं प्रत्याचक्षाणेन भाष्यकृता जातौ पदार्थे बहुवचनस्यासाधुत्वबोधनाद् यथोत्तरं

---

यद्यपि वर्षाशब्दस्य नित्यबहुवचनान्तत्वमिति सुवचं तथाप्यार्थमावश्यकमाह तादृशेति। नन्वेवं कथं तावद्बहुवचनमेवात आहैकं चेति तादृशस्यैव रूढत्वेचेत्यर्थः। बहुत्वेति अवयवगतेत्यादिः। तत् बहुत्वं। प्रागुक्तहेतोः बहुवचनप्रसङ्गात्स्मृतदृष्टान्तेनोक्तमर्थं मध्ये सिंहावलोकनन्यायेन द्रढयति यथाचेत्यादिना बोध्यमित्यंतेन। अयं ग्रन्थ ऊह्यमित्यनंतरं तूचितः। व्यवस्थार्थमाह तात्पर्येति।

नन्वेवं तमबापत्तिः क्वचिदत आह दन्तोष्ठस्येति मध्ययोगे षष्ठीयं नतु निर्धारणे। उक्तरीत्यै…द दंतत्वे चेति। ओष्ठत्वेन द्विवचनत्वमस्तीति सूचितम्। अनेकत्वेन द्वित्वबहुत्वाभ्यां। कृत्यल्युट इत्यादौ त्वारोपितबहुत्वनिमितकं बहुवचनमिति बोध्यं। एतद्वत् गोषुचरादिवत्। गोषुचरादावाह जाताविति। ननु तथापि सूत्रमते साधुत्वमेवात आह यथोत्तरमिति। अत एव मासजातादावुक्तरीत्या निर्वाहा-

मुनीनां प्रामाण्यात् । अतएव भाष्यकृताऽस्य वि-शेषस्योपसर्जनविशेषणाभावरूपविशेषस्य गुरुकुल-मित्यादाविव मासजातादावव्यापकत्वं नोक्तं

संख्याविशेषानवगतिरेवाभेदैकत्वसंख्यापदेनोच्यते । भेदसहचरितद्वित्वादेरेकत्वस्य चाभानमिति तदर्थः। संख्याविशेषप्रतीतौ पृथगुपस्थापकपदज्ञानं कारणमिति तत्प्रतीत्यभावस्यैकार्थीभावकृतत्वमन्यथा घटो घटप-टावित्यादौ घटत्वादेरपि संख्याविशेषावगत्यापत्तिः । तदुक्तं हरिणा-

वाचिका द्योतिका वापि संख्यानां या विभक्तयः ।
तल्लुक्यवयवे वृत्तौ संख्याभेदो निवर्त्तते इति ॥

यद्वत्र अभेदैकत्वसंख्या भासते, परित्यक्तवि-

---

देव । यस्य मासेत्यत्रान्वयः। दृष्टांतं व्यतिरेके आहोपसर्जनेति । एवं स-ति चिरंतनोक्तिं खण्डयितुमभ्युपेत्य तदीयव्यवहारं तावद्योजयति सं-ख्येति । एवेन तन्मतव्यवच्छेदः। ननु न तत्वस्तत्प्रतीतिरत आह भेदेति भेदश्चैकत्वंच तदर्थसंख्याभानं तस्याभावः । भेदपदं तत्र लाक्षणिक-मिति भावः ।

ननु तत्र तदनवगतेः कथमेतत्कृतत्वमत आह संख्येति । अ-न्यथा तस्य तत्र कारणत्वाङ्गीकारे । पत्तिरिति तथाच द्विवचनाद्या-पत्तिरिति तथा प्रयोगोच्छेद एव स्यादिति भावः । वाचिका इति-अपिर्व्युत्क्रमे । वृत्तौ तल्लुक्यस्यवयवे उपसर्जनपदार्थे तदभाव-मित्यर्थः ।

कैयटहरदत्तदीक्षितभूषणकृदादिसिद्धान्तं खण्डयितुमनुवदति यद्वेत्यादि अत्र घटकोपसर्जनपदार्थे । एवेनोक्तव्यवच्छेदः । नन्वेवं निःशेषरूपभेदरहितैकत्वमित्यर्थस्य युक्तत्वेऽपि विशिष्टस्य कथं संख्या-त्वमत आह यथैकत्वमिति । अत्र व्युत्पत्तिं प्रदर्शयन् संमतिमाह-द्वित्वेति ।

शेषसंख्यासामान्यमेवाभेदैकत्वसंख्या, यथैकत्वं द्वि-त्वादीनां निमित्तं तथेदमभेदैकत्वं सर्वेषामेकत्वादीनां निमित्तमिति सापि संख्येत्युच्यते द्वित्वाद्यनुस्यूतैक-त्वादेकस्वभावत्वेनाभिन्नमिवेति तेन पदेनोच्यते इति-हेलाराजः।

यथा दूराद्रूपमात्रं गृह्यते नतु शुक्लकृष्णादि-विशेष एवं राजपुरुष इत्यादौ सत्वभूतत्वात् संख्या-वानत्रार्थ इत्येतावत्प्रतीयते न त्वव्ययार्थवद् असंख्यो नापि घटादिवद्विशेषसंख्यावच्छिन्न इति। विशेषपरि-त्यागश्च तदभानमेव।

यद्वा राजपुरुष इत्युक्ते राजद्वयादिसंबन्धिनोऽपि भानात्सर्वविशेषाणां सामान्यरूपेण भानं मधुनि र-सानामिव। अतएव तत्र राज्ञो राज्ञां वेति जिज्ञा-सा। विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वनि-यमात्सति तु निमित्ते मासजातादौ तत्प्रतीतिर्भ-वत्येव।

उक्तं भाष्यं तु राजपुरुष इत्यादिप्रयोगविषयमेव। तदुक्तं हरिणा–

---

उक्तमर्थं वक्ष्यमाणहर्युक्तदृष्टान्तेनोपपादयति यथेत्यादीत्यंतेन। नन्वेवं सामान्यस्य विशेषानालिङ्गितस्याभावात् कथं तस्यातोऽत आह विशेषेति। आदिना बहवस्ते। अपिनैकराजसम्बन्धी। अत्रापि वक्ष्यमाणतदुक्तमेवाह मधुनीति। अस्यावश्यकत्वमाहातएवेति। अस्यार्थमाह विशेषेति। इदमपि गमकाभावे इत्याह सति त्विति तत्प्रतीतिर्विशेषरूपेण विशेषप्रतीतिः।

नन्वेवमुक्तभाष्यविरोधोऽत आहोक्तमिति। यमेव यकमेव। तदुक्त-मिति हरीत्यन्तनेति भावः। वाऽन्नास्थायां नतूक्तविकल्पे। तत्रेत्यस्या-

अभेदैकत्वसंख्या वा तत्रान्यैवोपजायते।
संसर्गरूपं संख्यानामविभक्तं तदुच्यते।

वृत्तावुपसर्जनपदार्थानामपि सत्वभूतत्वात्संख्यायोगावश्यकत्वेन विशेषसंख्याऽभावेन च सामान्यसंख्यारूपं सर्वसंख्याविशेषाणां संसर्गरूपं तादिति तदर्थः।

यथौषधिरसास्सर्वे मधुन्याहितशक्तयः।
अविभागेन वर्त्तन्ते तां संख्यां तादृशीं विदुः। इति

अनेन यद्वेति पक्ष उक्तः। आद्यमाह-

भेदानां वा परित्यागात्संख्यात्मा स तथाविधः।
व्यापनाज्जातिभागस्य भेदापोहेन वर्त्तते।

पूर्वं समस्तभेदसंसर्गरूपं तदित्युक्तम्। इदानीं तु समस्तभेदानुगतं भेदापोहरूपं तदिति विशेषः। अर्थस्य सामान्यविशेषरूपानेकधर्मवत्त्वेऽपि विचित्रत्वाच्छब्दशक्तीनामुपसर्जनपदेन सर्वविशेषसंसर्गभानं सर्वविशेषाणां संख्यात्वेन वा भानम्।

अगृहीतविशेषेण यथा रूपेण रूपवान्।
प्रख्यायते न शुक्लादिभेदरूपं तु गृह्यते। इति।

---

र्थो वृत्ताविति। अपिना विशेष्यं। अपृथगुपस्थितेराह विशेषेति। अभावेन चेति च्छेदः। अविभक्तमित्यस्यार्थः सामान्येति। तृतीयपादार्थमाह सर्वेति। तदिति सामान्ये नपुंसकं तत्पदवाच्यमिति तदर्थः। एवमग्रेपि। हर्यंतरमाह यथौषेति स्पष्टोऽर्थः। इतिर्हरिसमाप्तौ एवमग्रेपि।

अनेन उक्तपद्यद्वयेन। आह स एव प्राग्वत् पूर्वतो विशेषस्य स्पष्टतयाऽप्रतीतेरादौ तमाह पूर्वमिति। अथ मतद्वयतात्पर्यमाहार्थस्ये-

तन्न। तथा बोधाननुभवात्। द्रव्यस्य संख्याव्यभिचारेण तज्ज्ञानसंभवात्। तत्र तादृशजिज्ञासायाः स्वरसतः सिद्धत्वाभावेन स्ववासनाकल्पितत्वाच्च। अतएव हेलाराजेनैतन्मतद्वयोपपादकहरिकारिका मतान्तरमाहेत्यवतारिता। तस्य चारुचिग्रस्तत्वं तन्मते भाष्यस्य संकोचेन व्याख्यां कुर्वता गोषुचरार्थं प्रत्याख्यातमपि जात्याख्यायामिति सूत्रमावश्यकमिति वदता हरिणा कैयटेन च बोधितम्। नच तत्प्रत्याख्याने द्रव्याभिप्रायेणैव बहुवचनस्य साधुत्वं वाच्यं तत्रैकशेषार्थमेकशेषसूत्रारम्भे गौरवमिति वाच्यम्। द्रव्येऽपि पदार्थे तत्प्रत्याख्यानस्य भाष्ये कृतत्वेनाक्षतेः। निरूपयिष्यते चेदमुपरिष्टात्।

अतएव भाष्येऽभेदैकत्वसंख्येति व्यवहारो भासते इति च नास्ति। वृत्तौ संख्याविशेषो न भवतीत्येतावदेव समर्थसूत्रे भाष्यम्। तेन रूपेण संख्याभानस्यान्यत्रादृष्टत्वाच्च।

---

ति। इत्यन्तरमाहागृहीतेति। इति एतेन 'भेदापोहस्तु गम्यते' इति भूषणधृतपाठः प्रत्युक्तः पौनरुक्त्यापत्तेः। स्पष्टोऽस्यार्थः। पूर्वपद्यार्थस्तु भावप्रकाशे स्पष्टः। नन्वेवं विशेषजिज्ञासा न स्यादत आह द्रव्यस्येति अव्यभीति च्छेदः। जिज्ञासायां न शब्दजन्यं तज्ज्ञानं नियामकं आम्रफलदर्शनमात्रेण सविशेषजिज्ञासानापत्तेरिति भावः।

अभ्युपेत्येदमतो वस्तुतत्वमाह तत्रेति राजपुरुषादावित्यर्थः। अतएव उक्तार्थस्यानुभवविरुद्धत्वादेव। तस्य च मतान्तरस्य। जातावेकवचनं भाष्यस्य उक्तस्य। ग्रस्तेत्यस्य बोधितामित्यत्रान्वयः समुच्चितस्य प्रत्येकमन्वयो नात्र यथासंख्यं। द्वितीयऽसङ्गतिमाशङ्कते नचेति। तत्र तथा सति। कथमित्याशङ्कायामाह निरूपेति

अतएव कालाः परिमाणिनेति सूत्रे एकवचनान्तानामुपसंख्यानं मासो जातस्येत्याद्यर्थे माभूदिति-वार्त्तिकमनभिधानान्नेत्युक्तमिति प्रत्याख्यातम् ।

एवमलुक्सूत्रेपि भाष्ये द्विवचनबहुवचनान्तानामसमासोऽनभिधानादित्युक्तम् । अनभिधानादित्यस्य समासेन द्वित्वादिसंख्यावैशिष्ट्येनानेकव्यक्त्यनभिधानादित्यर्थः । द्विवचनेत्यादेश्च द्वित्वादिवैशिष्ट्येन बोधकानामित्यर्थः ।

किंचार्द्धं नपुंसकमिति सूत्रेऽर्द्धं पिप्पलीनामित्यर्थं समासमाशङ्क्यैकाधिकरणेनेत्यनुवृत्त्या समाहितम् । तव तूपसर्जनपदार्थे एकत्वस्यैवाङ्गीकारेण समासप्रसङ्ग एव नास्ति । मम तु पिप्पलीत्वेनानेकव्यक्तिभाने समासशङ्कोचितैव । किंचात्रपक्षे गोपुच्चरे जात्याख्यायामभेदैकत्वे बहुत्ववदतिदेशाद्बहुवचनमुक्त्वा स्तोकान्मुक्त इत्यादावेकवचनमुत्सर्ग इत्येकवचनमित्युक्तं, तत्परस्परविरुद्धम् । तदैकत्वे बहुत्वातिदेश-

---

एकशेषप्रकरणे इत्यर्थः । तन्त्रेणेत्यर्थः तन्त्रेणेतिभावः । अतएव मासजातादौ सिद्धान्तरीत्यङ्गीकारादेव । उक्तमितिहेतौ इत्युक्त्येत्यर्थः । तव तु तत्प्रतीतिसत्वात्तदसङ्गतिः स्पष्टैव । एवमग्रेऽपि । उभयत्र स्वमतेनाहानभीति । नन्वेवं कथं तदन्तत्वमत आह द्विवचनेति । तत्र दोषान्तरमाह किञ्चेति । एवमग्रेपि । रणं इत्यन्वितिपाठः ।

अत्र पक्षे मतान्तरे । एवमनेक भाष्यादिविरुद्धार्थप्रतिपादकत्वेनात्र विषये हरेरपि महाप्रमाद इति तदनुयायिनामन्येषां प्रमादः सुतरामिति ते सर्वेऽयुक्ता एव किन्त्वभेदैकत्वस्य संख्यात्वे तद्गणनायामादावेकत्ववत्तस्याप्यादौ तद्गणनापत्तिः । किञ्च नियतविषयपरिच्छेदहेतुत्वरूपसंख्यात्वस्य बहुत्वे इव तत्र दुर्वचत्वमिति

षदेकवचनस्यापि प्राप्तेरिति दिक्।

एवं चकारयोगो वाक्ये राज्ञो गौश्चाश्वश्च पुरुषश्चेत्यादौ भवति, नतु राज्ञो गवाश्वपुरुषा इत्यादौ समासे। वृत्तौ समूहलक्षणैकार्थप्रादुर्भावाद्भेदस्य निवृत्त्या भेदनिबन्धनसमुच्चयरूपस्य द्योत्यत्वाभावेन द्योतकस्याप्यप्रयोग इति कैयटः। पृथगुपस्थितयोरेव समुच्चयस्य चद्योत्यतया चप्रयोगाभावस्यापि समासे एकार्थीभावकृतत्वम्। लोकेऽपि पृथक्ज्ञातयोरेवैकदेशस्थत्वे समूहव्यवहारात्।

नच समासेन चार्थस्याभिहितत्वात्तदप्रयोगः। समासेन सत्त्वभूतस्य विशेष्यतयाभिधानेऽपि असत्त्वभूतस्य विशेषणतया बोधार्थं चप्रयोगस्य दुर्वारत्वात्। चार्थे द्वन्द्व इति तु सादृश्याच्चार्थत्वारोपेण ने-

---

बोध्यं तदाहेति दिगिति।

तस्यफलान्तरमाहैवमिति। आदिभ्यां दत्तस्य च गौः॥ दत्तचैत्रमैत्राणां गौरित्यनयोः सङ्ग्रहः। तत्र द्वितीयमुपपादयति वृत्ताविति। नन्वेवमप्येतस्य कथमेकार्थीभावकृतत्वमत आह पृथगिति ननु तत्रैव किम्मानमत आह लोकेऽपीति। अपिना वेदः। अस्य तत्वं विघटयति नचेति। दुर्वारत्वादिति अतएव तस्य तद्विवरणत्वम्।

नन्वेवं चार्थे द्वंद्व इत्यस्यासङ्गति रतआह चार्थे इति। नच वस्तुतश्चार्थे सति द्वंद्व इति तदर्थः। भूसत्तायामित्यादावपि तथात्वापत्त्याऽनुशासनस्यार्थनिर्णायकस्य क्वाप्यभावापत्तेः। सह विवक्षाविरहेऽपि भेरीपटहं वादयेति द्वंद्वापत्तेश्च। यद्यपि समूहस्य द्विर्बोधानलुभवान्न तत्र चप्रयोग इति मतस्य तत्कृतत्वं तथापिचेनासत्वभूतविशेषणोपस्थितेर्वृत्तौ तद्वैपरीत्यस्यान्यत्र विशेष्यविशेषणभावादिवैपरीत्यवदेकार्थभावकृतत्वमेवेति तस्यापि तद्द्वारोक्तरीत्या तत्कृतत्वम्। यद्यपीदमपि भाष्ये नोक्तमतएव कैयट इत्युक्तं तथाप्युक्त-

र्थमिति दिक् ।

अन्ये त्वेकार्थीभाववशादपृथगुपास्थतेर्वृत्तौ नोद्देश्यविधेयभावेनान्वयः, पृथगुपस्थितेस्तथान्वये तन्त्रत्वात् । अविमृष्टविधेयांशदोषनिरूपणावसरे यत्रोद्देश्यविधेययोः पदाभ्यां पृथगुपस्थितिस्तत्र तथान्वयः । तत्र समासे पदात् पृथगुपस्थितिः, अपृथगुपस्थितौ च न तथा व्युत्पत्तिरिति काव्यप्रदीपाद्युक्तेः। अत एव चतुर्थी चाशिषीति सूत्रविहितचतुर्थ्या न समासः। आशीर्विषये हि उद्देश्यविधेयभावो गम्यते, समासे तदवगमाभावादिति हरदत्तादयः। अयमेवैकप्रसरताभङ्गो नाम यद्विशिष्टैकोपस्थितिजनकत्वरूपसामर्थ्यभङ्गः । उद्देश्यविधेयभावेनान्वये पृथगुपस्थितेस्तन्त्रत्वेन तथाऽन्वये तद्भङ्गादिति ।

---

रीत्या युक्तियुक्तमिति दिगिति ।

परादिमतमाहान्येत्विति । अत्र भाष्यादिमानाभावादाहाविमृष्टेति । तत्रेति तत्रैवोद्देश्यविधेयभावेनान्वय इत्यर्थः। नच नहि। पदादिति जातावेकवचनं । प्रकाशोऽपि नैवमित्याह काव्यप्रदीपेति । अत्र स्वीयसंमतिमप्याहात एवेति। हितादियोगे ज्ञापकाच्चतुर्थीति भाष्योपपादकोऽयं तद्ग्रंथः। हि यतः। तदिति उद्देश्यविधेयभावेत्यर्थः।

तन्त्रान्तरसंमतमपीदमित्याहायमेवेति वषट्कर्त्तुः प्रथमभक्ष इत्यादौ तथान्वयो मीमांसकैरुक्त इत्यर्थः। तदर्थमाह यदिति । नच एवं स कुतो नातआहोद्देश्येति । तदिति तद्रूपसामर्थ्येत्यर्थः। इतीत्यस्याहुरितिशेषः। क्वचित्तथापाठ एव। नन्विदंव्यभिचरितंकिंचैवं तत्र तथान्वयापत्ति रतआहाकिंचोद्देश्येति । उप बंधः समीपोच्चारणं तदिति यदादीत्यर्थः। ननु नायं नियमः अन्यत्रापि तत्तत्प्रतीतेरत आहैकार्थीति अनेन व्यतिरेकव्यभिचार उक्तः। अन्वयव्यभिचारमाहाभ्यासेति। ननु तथा व्युत्पन्नस्य तथा बोधो दुर्वार इति तस्यावार-

तन्न ; भाष्यकृतानुक्तत्वात् । किंचोद्देश्यत्वविधेयत्वे यच्छन्दतच्छन्दोपबन्धव्यङ्ग्ये, वृत्तौ रूढत्वादिना तदन्वयासंभवान्न तथान्वयः । एकार्थीभावाभावेऽपि घटमित्यादौ तथान्वयाभावेन, अभ्यासलोपश्चेत्यादौ समासेपि तथान्वयेन च तस्य तत्कृतत्वाभावाच्च । तथान्वयाभिप्रायेण समासप्रयोगेऽपि प्राप्तत्वाप्राप्तत्वादिपर्यालोचनोत्तरं लोहितोष्णीषा इत्यादौ तथा बोधो भवत्येवेति नासाधुतेत्याशयेनायं भाष्ये नोक्तः ।

विशेषणं विशेष्येणेति सूत्रे 'उभयविशेषणत्वादुभयोश्च विशेष्यत्वादुपसर्जनाप्रसिद्धि'रिति वार्तिके उभयबुद्धिस्थ विशेषणत्वस्य विधेयताप्रतीतेश्च । अतएव प्रकाशकृतेदृशसमासवाक्यानि च्युतसंस्कृतिदोषे नोदाहृतानि, किन्त्वविमृष्टविधेयांश एव । एवं च पृथगुपस्थितयोस्तथान्वय इत्युत्सर्गस्य त्यागेन सहृदयहृदयस्य वैमुख्यं तस्य दूषकताबीजम् । प्रदीपेऽपि तत्र तथान्वय इत्यस्य उत्सर्गेणेति शेषः ।

आशीर्विषयचतुर्थ्यन्ते तु न समासः । चिप्राय

---

णीयत्वेपि तत्रासाधुत्वं वृत्तेर्वाच्य मिति अयमपि भगवता वक्तव्य एवेत्यत आह तथान्वयेति समस्तान्वयेत्यर्थः ।

एवं सूत्रकृत्संमते भाष्यसंमते च वार्त्तिककृत्संमतिमप्याह विशेषणमिति । काव्यप्रदीपमूलसंमतमपीदमेवेत्याहात एवेति । तथा बोधे समासस्यासाधुत्वाभावादेवेत्यर्थः । ईदृशेति तथान्वयेन बोधजनकेत्यर्थः । नन्वसाधुत्वाभावे किंतस्य दूषकत्वबीजमत आह एवंचेति । तत्र तथान्वयेचेत्यर्थः । तस्याप्यनियतत्वादाहोत्सर्गेति । नन्वेवं प्रदीपासंगतिरेवात आह प्रदीपेति

नन्वेवं हस्वव्रतमात्रासांगत्यपर्यवसाने इष्टापत्तावपि तदुक्तदोषस्य-

भद्रं भूयादित्यादौ विप्रभद्रार्थयोरुभयोरपि तिङन्तार्थान्वयेन परस्परमसामर्थ्यात्। चतुर्थी चाशिषीत्यस्य चाशीर्विषयार्थान्वय्यर्थकात् तद्वाचकभद्रादियोगे चतुर्थीषष्ठ्याविर्त्यथात् । भद्रकर्तृकं विप्रसंबन्ध्याशंसाविषयो भवनमित्यादिक्रमेण बोधः। राजकुलं शुभं भूयादिति तु साध्वेव ।

किंच समासादावपि तथा व्युत्पन्नस्य तद्बोधो दुर्वारः। नचासाधुत्वम्। भाष्याद्यनुक्तेः। विशिष्टोपस्थितावपि विशेषणादौ प्रकारतादिस्वीकारवदुद्देश्यतादिस्वीकारे बाधकाभावादधिकमग्रे वक्ष्यामः। अतएव कैश्चिदुद्देश्यत्वादि प्रकारत्वादिरूपमेवोक्तमन्यैस्तु तत्समीनाधिकरणम्।

किंच अन्वादेशस्य किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरविधानाय पुनरुपादानरूपस्य समासे त्वदुक्त-

---

रणे कथमतआहाशीरिति। आदिना षष्ठी। तार्थान्वेतिक्रियामित्यर्थः। ननु कथमिदं सूत्रतो लब्धमतआह चतुर्थीति। चो वाक्यालंकारे।यार्थेति क्रियारूपेत्यर्थः। कात्प्रातिपदिकात्। आदिः प्रकारार्थः सौत्रक्रमेणाह चतुर्थीषष्ठ्याविति। उक्त सूत्रार्थफलमाह राजेति। राजकुलस्य संबोधनविभक्त्यंतस्याध्याहृते जानीहीत्यत्र प्रागुक्तरीत्याऽन्वयो न भूयादित्यत्रात एव न तद्द्वारा शुभमित्यत्रेति नतत्प्राप्तिरिति भावः।

तत्रदोषांतरमाह किंचेति। ननु वृत्तौ विशिष्टोपस्थितौ कथमुद्देश्यत्वादिप्रतीतिरतआह विशिष्टोपेति। ननु तदपि कथं विरोधादतआहाधिकमिति। सति प्रकरणे इत्यर्थः। अतएव तद्वृत्तत्स्वीकाराभावभिन्नरूपेण प्रतीतेराहान्यैरिति। दीक्षितादिमतेन दोषांतरमाह किंचेति। अज्ञानेन शंकोपपत्तावप्याहप्रेति। धानामित्युभयपरस्येतिपाठः। आहुरित्यरुचिबीजं तु न तत्र तादृशं विधानमिष्टं किंतु बोधनमात्रमित्य-

रीत्या संख्यार्थाभावेन एतच्छ्रितक इत्यादौ एकाध्याहे-
पाशङ्कया, अप्रयुक्तत्वेन तत्समाधानपरस्य द्वितीयाद्वौ-
स्वेन इति सूत्रस्थभाष्यस्य चासङ्गतिरित्याहुः ।

यत्तु निष्कौशाम्बिः गोरथो घृतघटो गुडधानाः के-
शचूडः स्वर्णालङ्कारो द्विदशाः सप्तपर्णो गौरखर इ-
त्यादिषु क्रान्तयुक्तपूर्णमिश्रसंघातविकारसुच्प्रत्य-
यलोपवीप्साजातिविशेषाद्यभिधानमेकार्थीभावकृत-
मित्युक्तम् ।

तन्न । भाष्यानुक्तत्वात् । निरादिपूर्वपदानां क्रा-
न्ताद्यर्थवृत्तितयोक्तार्थानामिति न्यायेन तदप्रयोगसि-
द्धेश्च । गौरखरादेश्च समुदायस्य जातिविशेषे रूढिस्वी-
कारेण न दोषः पङ्कजादिवत् । एकोपस्थितिजनक-
स्वरूपैकार्थीभावकृतत्वस्य क्रान्तादिलोपे संभवा-
भावाच्च ।

अतएव संख्ययाव्ययेति सूत्रे समासेनाभिहि-
तः सुजर्थ इति कृत्वा समासे सुज्न भविष्यति । किं-
चभोऽसुजर्थ इति समास उच्यते, न खलु सुजर्थ इ-
त्युच्यते, गम्यते तु सुजर्थ इति भाष्ये उक्तम् । तत्र

---

न्यत्र स्पष्टमिति नायंदोष इतीतिबोध्यं

दीक्षितभूषणकृदाद्युक्तिं खंडयति यत्त्विति । यथाक्रममाहक्रांते-
त्यादि । प्राग्वदाह निराद्वीति । नन्वेवमपि चरमे दोष एवात आह
गौरेति चस्त्वर्थे । इदंच तत्संभवमभ्युपेत्य । वस्तुतः सएवनेत्याह
एकोपेति । अतएव निरादेस्तद्वृत्तित्वादेव । द्विदशा इत्यादावाह स-
मासेनेति सुजर्थे समास इतीत्यर्थः ।

नन्वितो नोक्तार्थलाभोऽत आह तत्रेति भाष्ये वृत्त्यर्थः । योग्यता-
या आह पूर्वेति । नन्वेवं तथैव कुतोनोक्तमत आह पूर्वेति । तत्रैवमभ्यु-

समासेनेत्यस्य समासघटकपूर्वपदेनेत्यर्थः। पूर्वपदस्य तदर्थत्वद्योतकश्च समास इति समासेनोक्त इत्युक्तिः। द्योतकविषयेऽपि उक्तार्थानामिति न्यायोऽस्त्येव। अतिप्रसङ्गस्त्वनित्यत्वात्परिहरणीयः। द्रष्टुं गतश्चैत्रः कृष्णं, श्रितो गुरुकुलं मैत्र इत्यादौ न समासः कृष्णश्रितयोः परस्परमसंबन्धेनाकाङ्क्षामूलकैकार्थीभावस्यासंभवात्।

विशिष्टशक्तिस्वीकारादेव समासस्यार्थवत्वात्प्रातिपदिकत्वसिद्धिः। अतएव वृत्तौ विशिष्ट एवार्थो राजपुरुषपदाभ्यामभिधीयते इति कैयटः। भाष्ये चैकार्थीभावपक्षे 'संसृष्टार्थं समर्थ'मिति समर्थपदव्युत्पत्तिरुक्ता। विशिष्टबुद्धिं प्रतिच विशेषणविषयकस्यैव हेतुत्वमिति न विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वे व्यभिचारः। अतएव घटपदाद् घटत्वविशिष्टज्ञानोपपत्तिः।

---

कार्थानामितिन्यायस्य वाचनिकविषयत्वाद्भाष्यासंगतिरेवातआह द्योतकेति। नन्वेवं व्यतिलुनत इत्यादि न स्यादतआहातीति। परैर्व्यपेक्षापक्षसाध्यत्वेनोक्तफलं सिद्धांतेऽपि निष्प्रत्यूहमित्याह द्रष्टुमिति। प्रागुक्तरीत्यैवाहाकांक्षेति। अथ विशिष्टशक्तेः फलमाह विशिष्टेति।

यत्तु राजपुरुषपदाभ्यां प्रत्येकमुभयोपस्थितिरित्ययमेवैकार्थीभाव इति। तन्न। बोधावृत्त्यापत्तेरनुभवविरोधाच्च। तदेतद्ध्वनयन्नाहातएवेति उक्ताशयादेवेत्यर्थः। अन्यथातदसंगतिः स्पष्टैव। भाष्यसंमतमपीदमित्याह भाष्येचेति। पक्षान्तरेऽन्यव्युत्पत्तेः सत्वादाहैकार्थीति। ननु विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य हेतुत्वाद्विना पृथगुपस्थितिं विशिष्टबुद्ध्यनुपपत्तिरत आह विशिष्टेति। इदमन्यत्र तवाप्यावश्यकमित्याहात एवेति तां प्रति तस्य हेतुत्वस्वीकारादेवेत्यर्थः।

यत्तु न विशिष्टे शक्तिः, किंत्ववयवशक्तिज्ञानसहकृताद्वृत्तिरूपपदश्रवणरूपादुद्बोधकाद्राजसंबन्धी पुरुषः, चित्राणां गवामयमित्यादेर्विग्रहवाक्यतोऽनुभूतस्य विशिष्टार्थस्य स्मरणमयमेवैकार्थीभावो नामातो नोक्तदोषाः। अतएव भट्टपादैस्तेषामेव विग्रहत्वं स्वीकृतम्। स्वावयववृत्तिज्ञानसहकारेणार्थोपस्थापकत्वस्याप्यर्थवत्सूत्रे ग्रहणात्समासस्य प्रातिपदिकत्वम्।

यद्वा वाक्यवत्समासेऽपि पृथगुपस्थितयोरेव परस्परान्वयः। अयन्तु विशेषः—वृत्तिघटकपदोपस्थितयोः प्रथमं परस्परमेवैकरूपेणान्वयो वृत्तिस्वभावात्, तो न तत्र विशेषणान्वयादिकं, वाक्ये तु यदैव विशेष्ये राज्ञोऽन्वयस्तदैव राज्ञि ऋद्धत्वान्वयः, तदास्यैकदेशत्वज्ञानाभावात्। एकरूपेणेत्युक्तेर्नोद्देश्यविधेयभावेनान्वयः।

यद्वा विशिष्टलक्षणया वृत्तौ विशिष्टोपस्थितिरि-

---

मीमांसकैकदेशिमतं खण्डयति यत्त्विति। ननु राज्ञः पुरुष इत्यादिवाक्यतो न समासाज्जायमानस्मृतिसमानाकारानुभवोऽत आह राजेति। अत्यंतसमानार्थतया एतेषामेव विग्रहत्वांगीकारादिति भावः। नोक्तदोषा इति उद्देश्यविधेयभावेनान्वयविशेषाः। समासस्यार्थवत्त्वाभावात्प्रातिपदिकत्वं न स्यादतआह स्वावयवेति। स्वं वृत्तिः। अपिना स्ववृत्यार्थोपस्थापकत्वपरिग्रहः।

एतद्दोषाभावादेव पूर्वतो लघूभूतं पक्षमाह यद्वेति। नन्वेवं प्रागुक्तदोषापत्तिरेवातआहायं त्विति। एवेन ऋद्धत्वादिनिरासः। तत्र बीजांतरानुपलंभादाह वृत्तीति

इतोपि लघुभूतं पक्षमाह यद्वेति पूर्वपदोत्तरपदलक्षणेति मतस्य भूषणादौ सविशदं निरस्तत्वेनानुक्तत्वादाह विशिष्टेति

ति षष्ठीतत्पुरुषलक्षणायाः सबन्धिरूपाधिकविषय-
त्वेन षष्ठीतत्पुरुषात्कर्मधारयस्य लघुत्वम् बोध्यमिति ।

तन्न । आद्ये तादृशविग्रहवाक्यमजानतां विशि-
ष्टोपस्थितेः शक्तिं विनोपपादयितुमशक्यत्वात् । द्वि-
तीये वृत्तिपदन्तादृशबोधकारणमिति ज्ञानस्य तद्बोध-
कारणत्वकल्पनापेक्षशक्तिकल्पनाया लघुत्वात् । बो-
धकारणत्वस्य सम्बन्धं विनानुपपत्त्या शक्तिसिद्धेश्च ।

किंचैवं समासादीनां वृत्तित्वासिद्धिः वृत्त्याश्रय-
त्वेनैव तेषां वृत्तित्वव्यवहारात् । तृतीये बोध्यज्ञानं विना
बोध्यसम्बन्धरूपलक्षणाया अज्ञानेन तया विशिष्टो-
पस्थितेर्वक्तुमनौचित्यात् ।

किंच पङ्कजपदादेरपि पद्मत्वविशिष्टे लक्षणाया
एवापत्तौ रूढिशक्त्युच्छेदः । बाधादिप्रतिसंधानं वि-
नापि बोधात्तत्र शक्तिसिद्धिश्चेत्प्रकृतेऽपि समम् ।

---

नन्वेवं षष्ठीतत्पुरुषात्कर्मधारयस्य लघुत्वानापत्तिरत आह षष्ठी-
ति। तादृशेति राजसंबंधी पुरुष इत्यादीत्यर्थः । विशिष्टोपेति वृत्तितो
ज्ञायमानेत्यादिः । वृत्तिपदमिति तद्रूपपदं । प्रथमं मिथ एवैकरूपेण
तयोरन्वयबोधेत्यर्थः । अन्यथा वैलक्षण्यं न स्यादतः सिद्धांतमते-
नाह बोधेति ।

अयंभावः यथा प्रयोज्य प्रयोजकवृद्धव्यवहारेण तत्पदजन्यत्वं प्र-
योज्यबोधेऽनुमायासंबद्धस्य बोधकारणत्वानुपपत्त्या तत्पदवृत्तिं तदर्थे
कल्पयति बालस्तथा वृतिपदेपि तादृशबोधकारणत्वं त्वदभिमतं
संबंधं विनाऽनुपपन्नं कंचित्तदतिरिक्तं कल्पयेदेवान्यथा तव पदेऽव्य-
तिरिक्ता शक्तिर्नसिध्येत्, वाक्ये चसंसर्गांशे लक्षणा नसिध्येदिति ।
एवं विशिष्टशक्त्यनंगीकारे गभीरायांनद्यामित्याद्यनुरोधेन सिद्धां-

किंच कर्मधारये शक्यान्यबोधाभावेन लक्षणा न युक्ता। शक्यसंबन्धयशक्यार्थबोधो हि सर्वत्र लक्षणया दृश्यते। विशेष्यविशेषणभावस्तथेति चेद्वाक्येऽपि तद्बोधेन तत्राप्येकोपस्थित्यापत्तेः। एवंच प्रथमभक्ष इत्यादौ त्वदसंमतस्योद्देश्यविधेयभावेनान्वयस्यापत्तिरित्यलम्।

इदं वृत्तेर्विशिष्टशक्तिमत्त्वं लोकसिद्धमेव। शास्त्रेऽर्थविधानाभावात्। अचतुरेत्यादावदर्शनात्। वृक्षादीनामर्थाविधानाच्च। चार्थे इत्यादि तु चार्थे वृत्तिमनूद्य द्वन्द्वसंज्ञामात्रविधायकमन्यथानेकं सुबन्तं चार्थे वर्तते तच्च द्वन्द्वसंज्ञकमिति वाक्यभेदापत्तेः। किंच स्वसमानार्थकवाक्यानिवृत्तये विभाषाधिकारस्यापूर्वस्य करणे गौरवम्। मम तु एकार्थीभावे समासो, व्यपेक्षायां वाक्यमिति शास्त्रकृत्कल्पितसिद्धार्थानुवाद एव सः।

इयञ्चैकार्थीभावोपपादिका विशिष्टशक्तिः समर्था-

---

तरीत्या आहबोध्येति। आदिनायोगादि। स्यादिसिद्धांतेनाहकिंचकर्मेति। तत्र लक्षणायास्तस्यापीष्टत्वादाहैकोपेति। त्यापत्तेःत्यापत्तिरिति-पाठः। अत्रेष्टापत्तावाहैवंचेति समासे इति शेषः। अन्यथा तत्र वाक्येऽपि स्यादितिभावः। पूर्वपदस्योत्तरपदे वा लक्षणेत्यादि सविस्तरं भूषणेखंडितं तत एव बोध्यं तदाहेत्यलमिति

नन्विदं वृत्तेर्विशिष्टार्थत्वं लोकव्यवहारसिद्धमुतशास्त्रैकगम्यमतआहेदमितिलोकस्तद्व्यवहारः। नन्वेवमपि चार्थे इत्यादौ क्वचित्त दस्त्येवात आह चार्थे इति। मात्रपदेनार्थविधानव्यवच्छेदः। अन्यथा अर्थस्यापि विधाने। अस्याप्यसिद्धांतत्वादाहशास्त्रकृदिति। एतेन वृत्त्यवृत्त्योः स्वभावसिद्धत्वस्यापि निरासः सूचितः। विशेषमाहेयं-

श्रितः पदविधिरित्याद्यर्थक'समर्थः पदविधि'रितिशास्त्रबलाद् अलौकिके विग्रहेऽप्यारोप्यते । अतएव तत्र समाससंज्ञायामर्थवत्त्वनिबन्धनप्रातिपदिकत्वे विभक्तिलुक्सिद्धिः । षष्ठीत्यादिशास्त्रबलेन भेदोपस्थितिनिबन्धनषष्ठ्यादिनिर्वाहाय पृथगर्थत्वमप्यारोप्यते । उभयोरपि काल्पनिकत्वेन विरोधाभावः शास्त्रप्रामाण्यात् ।

नन्वेकार्थीभावनिर्वाहकविशिष्टशक्तिवादे बहुव्रीहिस्तपुरुषोऽन्तरङ्ग इत्यादिव्यवहारोच्छेदः । बहिर्भूतपदार्थविषयकबोधजनकत्वं हि बहुव्रीहौ बाहिरङ्गत्वम् । नचात्र पक्षे तदस्ति अन्यपदार्थेऽपि प्रत्येकातिरिक्तविशिष्टशक्यत्वसत्त्वेन स्वपदार्थत्वस्यैव सत्त्वादिति चेन्न ।

स्वघटकपदघटितवाक्यदृष्टार्थमात्रविषयकतत्पुरुषीयशक्तिग्रहापेक्षया बहुव्रीहिसंज्ञकपदसमुदायीयशक्तिग्रहस्य स्वघटकपदघटितवाक्यदृष्टार्थातिरिक्ता-

---

चेति । आदिनाभाष्योक्तार्थांतरम् । तत्र अलौकिके । लुक्ग्रहणं नलोपादे रप्युपलक्षणं । नन्वेवं षष्ठीत्यादिशास्त्रस्य निर्विषयता स्यादत आह षष्ठीति । नन्वेवं विरोधापत्तिरत आहोभयोरपीति । न च न हि ।

सत्त्वादिति स्पष्टं चेदं नदीभिश्चेति सूत्रे भाष्ये तत्रहि द्वारावतिको देश इत्यत्रदेशस्य समस्यमानपदाभ्यामुक्तेः पूर्वपदार्थतेति पूर्वपदार्थप्राधान्यान्नदीभिश्चेत्यव्ययीभावः प्राप्नोतीत्याशंक्य समासेन विशिष्टेन स उच्यते नतु पूर्वपदोत्तरपदाभ्यामन्यथा चित्रग्वादावप्यन्यपदार्थप्रधानता न स्यात् ताभ्यामेव तदभिधानात् । यदि तु समुदायरूपान्यपदार्थत्वेन तत्प्रधानता तर्हि प्रकृतेऽपीत्युक्त ।

र्थविषयकत्वेन बहिरङ्गत्वाच्च । एवमेव षष्ठीतत्पुरु-षात्कर्मधारयस्य लघुत्वं बोध्यं कर्मधारयसंज्ञकपदस-मुदायजशक्तिग्रहापेक्षया षष्ठीतत्पुरुषसंज्ञकतज्जन्य-शक्तिग्रहस्य षष्ठ्याद्यर्थरूपाधिकविषयत्वेन गुरुत्वात् ।

एवं च निषादस्थपत्यादिशब्दानां षष्ठीसमासक-र्मधारयबहुव्रीहिभिर्नानार्थत्वेन क्व तात्पर्यमिति सं-देहे शक्तिग्रहलाघवानुरोधात्कर्मधारयार्थे तात्पर्यं क-ल्प्यते संभवति सामानाधिकरण्ये वैयधिकरण्य-स्यान्याय्यत्वात् ।

तदुक्तं जैमिनिना 'स्थपतिर्निषादः स्यात् शब्द-सामर्थ्यात्' इतिनिषादस्थपतिशब्दस्यान्तरङ्गत्वेन नि-

---

क्तार्थेति वहिर्भूतान्यपदार्थेत्यर्थः । इदमपि तत्रैव भाष्ये उक्तं यद्यप्यत्र चित्रग्वादावेताभ्यां पदाभ्यामेषोऽर्थ उच्यते अन्यपदा-र्थोऽपि तु गम्यते इति विग्रहवाक्ये समासघटकपदातिरिक्तपदेन प्र-तीयमानस्येह विशिष्टेन प्रतीयमानतया तस्यान्यपदार्थप्राधान्यमिति तद्भावः । एवमेवेत्यस्यार्थमाह कर्मेति तदिति पदसमुदायेत्यर्थः । षष्ठ्याद्येति त्वाद्यक्तेत्यादिः ।

परसंमतमपीत्थमेवोपपन्नमित्याहैवं चेति तथा लाघवगौरवाभ्यां तद्व्यवहारोपपादने इत्यर्थः । पूर्वनिपातप्रकरणानित्यत्वादाह षष्ठीसमा सेति । नानेति निषादसंबंधिस्थपतिनिषादस्वामिकपुरुषांतररूपे-त्यादिः नानार्थतात्पर्याद्विशेषावगतिरितिन्यायादाहक्वेति । आदि-ना पदार्थोपस्थितिः । इदमेवाभिप्रेत्य—

पर्यवस्यच्छाब्दबोधाविदूरप्राक्क्षणस्थिते ।
शक्तिग्रहेऽतरंगत्वबहिरङ्गत्वचिंतनम् ॥

इति वैयाकरणमतोन्मज्जने दीक्षिताः ।

आद्यनिरासे हेत्वंतरमप्याह संभवतीति स्थपताविति तद्विषयक-शीघ्रोपस्थितत्यिर्थः । अतएव शब्दसामर्थ्यपदेन तादृशतत्शक्ति-

षादरूपस्थपतौ शीघ्रोपस्थितिजनकत्वानुकूलात्साम-
र्थ्यात् शक्तिरिति तदर्थः । अतएव बहुव्रीह्यर्थको न
सः । अन्यथा बहुव्रीहौ मीमांसावार्त्तिककारैः शक्ति-
कथनेन निषादपदस्य तत्रालाक्षणिकत्वेन च तदभा-
वस्य सूत्रतो न लाभः स्यात् । एतेन शब्दसामर्थ्या-
दित्यस्य निषादशब्दस्य निषादबोध एव सामर्थ्यात्
शक्तेः षष्ठीतत्पुरुषे तु पूर्वपदस्य लक्षणेति न तस्य
ग्रहणं जघन्यत्वादिति शबरस्वामिकृतं व्याख्यानं
प्रौढ्येव । वक्ष्यमाणे भाष्यसंमते व्यपेक्षावादे तत्रापि
लक्षणाभावाच्चेति दिक् ।

ननु स्थपतिशब्दः स्वामिश्रेष्ठान्यतरपर्याय इति-

---

ग्रहणादेवैतदर्थकः सोपि । अन्यथा तस्योक्तार्थानंगीकारे । यत्तु षष्ठी-
तत्पुरुषाशयेनोक्तं तदुपलक्षण मास्तामतआह वक्ष्येति । सिद्धांतेऽस-
म्भवादेवाह व्यपेक्षेति । असंभवाच्चेति च्छेदः एवंच तदधिकरणोच्छे-
दापत्तिः ।

एतेन कर्मधारये यावंतः श्रुतपदार्थास्तावतां वाक्यार्थेऽन्वय
इति तस्य प्राबल्यं बहुव्रीहितत्पुरुषयोस्त्वेकस्यैवेति ततस्तयोर्दौर्बल्यं
षष्ठीतत्पुरुषात् बहुव्रीहौ द्वयोरिति बहुव्रीहिदौर्बल्यमित्यपि तदु-
क्तमपास्तं । बहुवीहौ शक्तिपक्षे बहुव्रीहौ श्रुतिवृत्तता कर्मधारयतत्पु-
रुषयोर्वाक्यवृत्ततेति श्रुतिलिंगाधिकरणन्यायेन बहुव्रीहेरेवापत्तेस्तद-
धिकरणोच्छेदावारणात् ।

नच बहुव्रीहावपि विनियोजकं वाक्यमेवेति न तत्रतन्न्यायप्रवृत्ति-
रिति वाच्यं श्रुतिर्न विनियोजिका किंत्वभिधात्री अतएव रथकाराधि-
करणेयोगात्रूढेः प्राबल्यंसिद्धांतितमिति वाक्याच्छ्रुतेः प्राबल्ये य-
च्छीघ्रप्रवृत्तत्वादि बीजं तन्न्यायेन कर्मधारयेऽपि शक्तेः प्राग्व्यवस्था
पनात् । द्वयोरपि श्रुतित्वेन विरोधाधिकरणन्यायस्याप्रवृत्तेस्तदा-
हेति दिगिति ।

ञस्य गुणशब्दत्वान्निषादस्य जातिशब्दत्वात्कर्मधारये स्थपतेः पूर्वनिपातापत्तिः। किंच स्थपत्यर्थस्य सबन्धिनि नित्यसाकाङ्क्षत्वात्षष्ठीसमास एव न्याय्यो नरपत्यादिष्विवेतिचेन्न।

'लिङ्गदर्शनाच्चे'ति जैमिनिसूत्रेण हेत्वन्तरोक्तेरदोषात्। लिङ्गं च दृश्यते कूटं च दक्षिणेति। कूटं हि निषादानामेव स्वमिति शबरस्वामिनः। एवंच राजदन्तादित्वात्कर्मधारये स्थपतेः परनिपातः। संबन्ध्याकाङ्क्षानिवृत्तिरप्यर्थतो निषादानामेव तत्वलाभादुपपन्ना। लिङ्गं चानेकार्थस्य शब्दस्यार्थनियामकं दृष्टम्। तस्मादनेकार्थं निषादस्थपतिशब्दस्यार्थनियामकं शीघ्रोपस्थितिजनकशक्तिकत्वं लिङ्गं चेत्येव सूत्रतात्पर्यं वक्तुं युक्तम्।

---

दपदस्यचेति पाठः। जातिगुणयोगे गुणवाचकस्यैव पूर्वनिपातनियमादाहकर्मेति। लिंगेति पूर्वत्रेत एवास्वरसादित्यादिः। कूटं हीति यतस्तेषामेवोपकारकं नार्याणामतस्तेषामेव तत्स्वमित्यर्थः।

मायानिश्चलयंत्रेषु कैतवानृतराशिषु।
आयोधने शैलशृंगे सीरांगे कूटमस्त्रियाम्॥

इत्यमरादिः। एवंच तद्दर्शनेन तदसंभवेच। अग्रे व्युत्क्रमेणान्वयः नन्वेवं कथमाकांक्षाशांतिरतआह संबंधीति। तत्त्वेति स्वत्वेत्यर्थः। क्वचित्तथैवपाठः। नात्राक्लृप्तकल्पनेत्याह लिंगं चेति। संयोगादौ तस्य परिगणनात् तदधिकरणसिद्धांतमुपसंहरति तस्मादिति। एवेन स्वाम्याद्युक्तिनिरासः। उत्सर्गत इत्युक्तेः फलमाहाश्वेति। इदमन्यसंमतमपीत्याहात एवेति लिंगस्य तन्नियामकत्वादेवेत्यर्थः। एवंच तत्र लाघवादिविचारो मीमांसकानां कथंचित्संभवमात्रेण नेयो च वास्तव इति बोध्यं। तदाहेत्यन्तमिति।

किंच षष्ठीतत्पुरुषेऽपि ऐश्वर्यस्योत्सर्गतो निरूपकसजातीयनिष्ठस्यैव लाभेन कर्मधारयादविशेषः। अतएव नरपतिसुरपत्यादिशब्दतो नरसुरयोरेवैश्वरत्वेन प्रतीतिः। अश्वपतिगजपत्यादौ त्वगत्या तात्पर्यानुपपत्त्या चोत्सर्गस्य त्यागः। अतएव शंकरभगवत्पादैर्दहराधिकरणे ब्रह्मलोकशब्दे कर्मधारयसमासः सर्वाः प्रजा अहरहर्गच्छन्त्य एनं ब्रह्मलोकं न विन्दन्तीतिलिङ्गेन साधित इत्यलम्।

तत्र स्वाभाविकत्वपक्षे श्रोत्रियादिवदखण्डा निरवयवा नित्याः शब्दास्तदन्वाख्यानाय कल्पिते रेखागवयस्थानीये शास्त्रप्रवृत्तिः। तदुक्तम्।

अबुधं प्रत्युपायाश्च विचित्राः प्रतिपत्तये।
शब्दान्तरत्वादत्यन्तं भेदो वाक्यसमासयोः॥

इति। अतएव गोरथादौ युक्तादीनां लोपाविधानम्। गवां रथ इत्येव वाक्यस्य कल्पनेति। क्रियाम-

---

जहत्स्वार्थत्वादिकं सखंडपक्षे नाखंडपक्षे। अतएव भाष्ये एकार्थीभावसामर्थ्यमुक्त्वा तस्य फलानि चोक्ताशब्दैरर्थाभिधानं स्वाभाविकमेव न शास्त्रगम्यमित्यादि वावचनानर्थक्यमित्यंतेन ग्रंथेन। नित्यशब्दवादे एकार्थीभावसामर्थ्यं व्युत्पादितं ननु तत्र जहत्स्वार्थत्वाजहत्स्वार्थत्वादि विचारितं। तत्पक्षे तद्विचारस्यैवाप्रवृत्तेः। पदानामर्थस्यैवाभावात्तदेतत् ध्वनयन्तन्मतमादावाह तत्रेति भाष्योक्तपक्षद्वयमध्ये इत्यर्थः। उक्तहेतोरेवेति। तदुक्तं हरिणा—

प्रयुज्यमानवाक्यस्य नोपायत्वमित्याह शब्दांतरत्वादिति। अतएव उपायवैचित्र्यादेव। तदेवमिति। नन्वेवं कथं युक्तत्वप्रतीतिरत आह क्रियामिति। हर्यंतरमाह तथेति वृक्षादिपदं यथा विशिष्टेर्थे एव व्यवस्थितमित्यर्थः। वस्तुतोऽसत्वादाह कल्प्येति स्वभावेति। वि-

न्तरेणानन्वयात्तत्र तदवगतिः। गोयुक्त रथइति लौकिकं तु समासस्य पर्यायरूपम्। तथा—

पदं यथैव वृक्षादि विशिष्टेऽर्थे व्यवस्थितम्।
नीलोत्पलाद्यपि पदं भागाभ्यां वर्त्तते तथेति।

भागाभ्यां कल्पिताभ्याम्। सादृश्यमूलकस्तु वाक्यस्थैरत्रत्यानामभेदभ्रमो बालानान्तन्मूलक एवैकार्थीभावव्यवहारो ऽत्र पक्षे वास्तवः। खण्डास्तु नात्र पक्षे पदानां पृथगर्थत्वस्वभावत्वेन स्वभावभङ्गापत्तेः। तथा—

रूढ्यरूढिविभागोपि क्रियते प्रतिपत्तये। इति।

शास्त्रकृद्भिरबुधानामितिशेषः। पङ्कजादिपदं योगरूढं सप्तपर्णादिपदं रूढं राजपुरुषादि यौगिकमित्यादिरपि काल्पनिकः प्रतिपादनोपाय एवेति तदर्थः। तत्र वाक्यार्थानुगमाद्राजपुरुषादियौगिकः सप्तपर्णादौ क्वचिदर्थानुगमेऽपि शीर्णपर्णे तदभावाद्रूढिरेव पङ्कजादौ वाक्यार्थानुगमादर्थान्तराननुगमाच्च योगरूढिरिति दिक्।

परेतु वाक्याद्वृत्तिः शास्त्रनिष्पाद्या। अर्थाभिधा-

---

शिष्टार्थाभिधानस्वभावेत्यर्थः। इयंतरमाह रूढ्यरूढीति। साकांक्षत्वादाह शास्त्रेति अन्वाख्यानाविशेषेऽपि तत्तदुपपादयति त्रयाणां मध्ये इत्यर्थः। क्वचिद्दर्पणे। एवं च तत्र नैयायिकादीनामवयवाद्यर्थविचाराभिनिवेशो भ्रांतिमूलकत्वान्निष्फलत्वाच्चायुक्त एवेति बोध्यं तदाहेतिदिगिति।

अथ भाष्योक्तद्वितीयमत माह परेत्वित्यादिना आहुरित्यंतेन॥ यद्यपि सखंडानित्या इति पक्षेऽजहत्स्वार्थतैवार्थत्यागे मानाभावा-

न्मपि शास्त्रकृतमेव । एवं चानेकं सुबन्तं चार्थे वर्त्तमानं च द्वन्द्वसंज्ञकमित्यर्थाद् घटकपदानामेव चार्थे वृत्तेरुक्तार्थत्वाच्चकाराप्रयोगः सिद्ध इति नैकार्थीभावस्य फलं सः ।

नच तन्मते शब्दवदर्थोऽपि शास्त्राधीनः शास्त्रकार्यतया शब्दानां लोकतोऽर्थज्ञानासंभव इति वृत्तिमत्समुदायत्वं वृत्तित्वमित्यस्य वक्तुमशक्यतया किं वृत्तिलक्षणमिति वाच्यम् । परार्थाभिधानं वृत्तिरित्यस्य भाष्ये एवोक्तत्वात् । परस्य शब्दस्योपसर्जनार्थकस्य यत्र शब्दान्तरेण प्रधानार्थकपदेन अर्थाभिधानं विशेषणत्वेन ग्रहणं सा वृतिरिति तदर्थः ।

यद्वा । परार्थस्य प्रधानार्थस्याप्रधानपदैर्यत्र स्वार्थविशेष्यत्वेन ग्रहणं सा वृत्तिरित्यर्थः । राजपुरुष इत्यत्र पुरुषपदेन वाक्यावस्थायामनास्कन्नो राजार्थो राजपदेन वा पुरुषार्थ आस्कन्द्यते, तत्संवलितः स्वार्थ उपस्थाप्यत इति यावत् । एतावतैवैकार्थीभाव इति व्यवहारः ।

---

त्फलाभावाच्च तथापि तत्रापि वृत्तिवर्त्तनवादिनां मतमाह वाक्यादिति ते एवं मन्यमाना इति भावः । नासूयेत्युक्त्यान्यत्राकरणस्यादोषत्वेन प्रामाणिकत्वे वाक्यभेदापत्तिरिष्टैवेति न प्रागुक्तः स दोष इत्याशयेनाहार्थेति एवेन स्वाभाविकत्वव्यवच्छेदः ।

एवं चकारयोग इत्यादिदिगित्यंतप्रागुक्तग्रंथासंगतिमाह एवं चेति तयोः शास्त्रगम्यत्वेचेत्यर्थः । स इति अत एव तत्र कैयट इत्युक्तं सत्वभूतत्वादिविशेषस्तु तत्कृत एवेति भावः । तन्मते वृत्तिवर्त्तनवादिमते । धीनइति शास्त्रेतिपाठः । इत्यस्य नित्यवादिनोच्यमानस्य वृत्तिलक्षणस्य । भाष्योपप्रश्नमेवाह किमिति । विशेषणेति अर्थस्ये-

बहुव्रीहावपि प्रधानं पदं समुदाय एव घटके प-
दे चाप्रधाने तत्र प्रधानपदेनावयवार्थास्कन्दनेनैव स्वा-
र्थबोधनम् । अवयवैर्वा तदर्थास्कन्दनेन । समुदायस्य
प्राधान्ये चावयवाप्रतिपाद्यप्रधानभूतान्यपदार्थबोध-
कत्वात् ।
द्वन्द्वेऽपि प्रधानपदसमुदायोपस्थाप्यसाहित्यस्यावयवा-
र्थास्कन्दनेन बोधः, अवयवाभ्यां वा तदर्थास्कंदनेन
बोधः। समाहारेतरेतरयोरुभयोरपि साहित्यं समूहो
विशेष्यमाद्येऽनुद्भूतावयवभेदोऽन्त्य उद्भूतावयवभेद
इति वक्ष्यते । नचेदमसंभवि अप्रधानेन सर्वथा स्वार्थ-
त्यागे तदत्यागे वा असंभवात् । अन्त्ये तेनैवार्थबोधे
सिद्धे प्रधानेन तदभिधानासंभवात् ।

यद्वा स्वार्थबोधनव्यग्रस्य परार्थाभिधायकत्वासं-
भवात् । किंचाद्ये शब्दार्थसंबन्धानित्यतापत्तिः राज-
पुरुषादितः पुरुषादिमात्रबोधापत्तिश्चेति वाच्यम् ।

---

त्यादिविनिगमनाविरहादाह यद्वेति । तत्वं लक्ष्ये । उभयथापि योज-
यन्ति राजेति यथेत्यादिः । इत्यत्र चेति पाठे नायं । एवंनोक्त-
प्रकारविशिष्टशक्तिरूपव्यवच्छेदः ।

एवं तत्पुरुषे उक्त्वा अन्यत्र क्रमेणाह बहुव्रीह्यादिना । प्राधान्यं
च न स्वतः । किंत्वर्थकृतमेव प्राग्वादित्याह समुदेति स्पष्टार्थं पुनर्बोध
इति । ननु प्राचां मते समाहारेऽस्यसुवचत्वेपि नेतरेतरयोगेऽतआह
समेति । तस्यैवार्थः समूह इति । साहित्यान्वयाशयेनाह विशेष्यमिति ।
नन्वेवं कथं शब्दवैलक्षण्यमत आहाद्ये इति वक्ष्यते द्वंद्वप्रकरणे नचे-
त्यस्याद्यवाच्यमित्यत्रान्वयः असंभवी । लक्षणमयुक्तंतेन तत्पदेनावि-
शेष्यपदे पक्षद्वयस्यानिष्टत्वादत्रैव शंका तत्राद्ये स्पष्टमसंभवमुपेक्ष्या-
हांत्य इति तत्रैव पक्षांतरमाह यद्वेतिआद्येऽन्यदोषद्वयमाह किंचेति ।

ष्ठ्यथाप्यदोषात्। नचान्त्ये राजादिपदैः स्वार्थस्य वि-शेष्यत्वावच्छिन्नस्य बोधनात्कथमितरविशेषणतयोप-स्थितिरिति वाच्यम्। गुणभूतपदं प्रधानपदार्थविशेष-णत्वेनोपस्थितिविरोधिनः स्वार्थभूतस्य राजाद्यर्थगत-विशेष्यत्वस्य त्यागेन जहत्स्वार्थत्वाङ्गीकारेणादोषात्।

यद्वा सर्वथोपसर्जनपदेन स्वार्थस्य त्यागः। वृत्तौ राजपदसम्बन्धमात्रेण पुरुषपदमेव राजसम्बन्धिपुरु-षबोधकमामोदान्वयमादाय चम्पकपुट इत्यादिव्य-वहारवद् राजपदार्थः पुरुषविशेषणमित्यादिव्य-वहारः।

अत्रपक्षे एकार्थीभावो नाम पदद्वयबोध्ययोरेक-पदबोध्यत्वरूपः। अलौकिके तु प्राग्वदेवासावारोपितः। अतएव जहत्स्वार्थापदस्य जहत्युपसर्जनपदानि स्वार्थं यस्यां सेत्यर्थ उक्तो हेलाराजेन।

यद्वा भेदसंसर्गौ सामर्थ्यम्। तथाहि वृत्तौ रा-

---

तत्रादावन्त्येऽदोषं शङ्कापूर्वमुपपादयति नचान्त्ये इति। स्थितिरि ति शास्त्रबलादिति भावः। त्यागेनेति शास्त्रबलादिति भावः। एवं च तस्यतत्रपक्षे तद्बोधत्वेन सर्वथा स्वार्थत्यागेपि त्यागेन तदङ्गीका-रेण परार्थाभिधायकत्वसम्भव इति तात्पर्यं।

आद्येप्यदोष मुपपादयति मात्रपदेन तदनित्यतापत्तेरुद्धारः राज-सम्बन्धीत्यनेन द्वितीयोद्धारः। नन्वेवं व्यवहारोच्छेदापत्तिरत आह चंपकेति क्रियमाणेत्यादिः ग्बन्मात्रेणेत्यर्थः। न न्वत्र पक्षे कथमे-कार्थीभावो द्वितीयपदार्थस्यैवाभावादत आहात्र पक्षे इति। नन्वि-दं कथमलौकिकेऽत आहालौकीति। प्राचामसाङ्गत्यायोपसर्जनप-दे एव तत्त्यागेन जहत्स्वार्थात्वं नतु विशेष्यपदेपीत्युक्ते सम्मतिमा-हातएवेति। अयमेवार्थोस्य। तदग्रिमभाष्योक्तमेव पक्षान्तर माह यद्वेति। नैकार्थीभाव इति भावः। राजसम्बन्धेति यत इत्यादिः। सो-

जपदसंनिधानात्पुरुषपदेनैव राजसम्बन्धवती राजान्य-स्वामिसम्बन्धाभाववती च या पुरुषव्यक्तिः सोप-स्थाप्यतेऽतो न राज्ञः स्वान्तरेण सम्बन्धः राजपद-स्यार्थाभावात्। नापि पुरुषस्य स्वाम्यन्तरेण सम्बन्धः।

यथा वेदान्तिनामखण्डार्थबोधो लक्षणवाक्यादौ तद्वत्। अखण्डार्थत्वं च पदार्थसंसर्गानवगाहिप्रती-तिजनकत्वम्। यथा कश्चन्द्र इति प्रश्नोत्तरे प्रकृष्टप्र-काशश्चन्द्र इति वाक्ये प्रकृष्टप्रकाशपदार्थं जानतस्त-

पेति पुरुषत्वेनेति भावः। अत इत्यस्यार्थो राजपदेति। संसर्गफलं केवलपुरुषबोधाभावरूपं स्पष्टमेवेति भेदफलमाह नापीति।

अस्याद्दष्टचरत्वं निराचष्टे यथेति। सत्यंज्ञानमनंतं ब्रह्मेत्या-दिलक्षणवाक्येषु सत्यादिपदसमभिव्याहृतब्रह्मपदंसच्चिदानन्दरू-पब्रह्मव्यक्तिविशेषं निर्धर्मतयैव शुद्धचित्तस्य बोधयति। अन्यस्य तु औपाधिककल्पितभेदव्यक्तिवृत्तिसाजात्याश्रयत्वेनान्त करणवृत्त्यु-पलब्धभेदचिदानंदानुगतज्ञानं तत्वाभ्यां च बोधयति। तथा बोधेपि तेषां धर्माणांन वास्तवत्वं त्रिविधपरिच्छेदशून्यत्वबोधका-नन्तादिपदविरोधात्।

एवंच यौक्तिकः कल्पितत्वग्रहस्तेषु अशुद्धचित्तस्य सत्यादिवा-क्यं विशिष्टार्थतात्पर्यराहितं लक्षणवाक्यत्वात्प्रकृष्टप्रकाशादिवादित्या-नुमानिकश्च। एवं तत्वमस्यादिवाक्यमखण्डार्थमुपाधिभेदभिन्नैकार्थ-प्रतिपादकत्वात् महाकाशो घटाकाश इति वाक्यवदिति तस्या-पि तत्वग्रहः। शुद्धचित्तस्य तु बोध उक्त एवेत्यर्थः॥

नन्वेवमपि प्रकृते धर्मभानेन नाखण्डार्थत्वमत आहाखण्डेति। अत्र दृष्टान्तमाह यथेति। तत् प्रकृष्टप्रकाशरूपं। प्रश्ने चन्द्रत्वे। च-न्द्रस्यैव त्तत्वमित्याह बुभुत्सितेति। प्रकृष्टेति अबुभुत्सितेत्यादिः। तस्य प्रत्यक्षरूपमानान्तरात्सिद्धेः। नन्वेवं किमर्थमुपादानमत आ-ह मानान्तरेति। एवेनानुपात्तव्यवच्छेदः। अत एव जन्माद्यस्य यत इति जन्मस्थितिनाशरूपत्रितयकारणत्वमेव लक्षणमुक्तं नत्वन्यत-मकारणत्वमेव लक्षणम्।

दाश्रयस्य बुभुत्सितचन्द्ररूपस्य वस्तुनश्चन्द्रत्वेन च-न्द्रपदवत्वेन च बोधः, न तु प्रकृष्टप्रकाशवैशिष्ट्यवि-षयकः मानान्तरसिद्धस्याप्युपात्तस्यैव व्यक्तिविशेष-निर्द्धारणोपायत्वमतस्तदुपादानम् । एवं प्रकृतेपि रा-जपदप्रयोगः। शक्तिग्रहोपि राजपदयुक्तं पुरुषपदं पुरु-षत्वेनोक्तव्यक्तिविशेषे शक्तमित्याकारः । एवं प्रकार-त्रयं भाष्ये स्पष्टं। अन्त्ययो र्महाराज इत्यादौ पूर्वपदे आख्यादि भूतपूर्वगत्यार्थवत्वमादाय बोध्यं ।

वाक्यानां वाच्यतावच्छेदकतत्तद्धर्मोपस्थितिद्वारा तदुपलक्षि-ताखण्डव्यक्तितात्पर्यकत्वमिति सिद्धान्तेन कश्चन्द्र इति प्रश्ने च-न्द्रत्वेन चन्द्रस्यैव बुभुत्सितत्वेन तत्प्रतिपादकत्वस्य प्रकृष्टप्रकाश-श्चन्द्र इत्याकारे उत्तरे आवश्यकत्वेन तत्रैकैककारणत्वोक्तौ त दुप-स्थितिद्वारा एकैकगुणोपलक्षितब्रह्मस्वरूपस्यैवोकवाक्याल्लाभेन तात्पर्यविषयीभूतस्य गुणत्रयोपलक्षितेश्वरेण जीवाभेदस्य तत्वमसी-त्यादिप्रतिपाद्यस्यासिद्धेस्तदर्थं त्रितयोपादानात् स्पष्टं चेदं व्यास-सूत्रे न्दुशेखरे

एवञ्च लक्षणवाक्येनाज्ञाते लक्ष्ये चन्द्रत्वादिना बोधिते इतर-व्यावृत्तिस्तत्पदवाच्यत्वं चार्थात् सिद्धं । तथाऽपि केवलपुरुषपदो-पादाने न तथा प्रतीतिरिति राजपुरुषादिवृत्तेर्जहत्स्वार्थत्वोपपादनायैव तद्भाष्यप्रवृत्ते स्तदाहैवमिति ॥

नन्वत्र पक्षे कथं शक्तिग्रहः। असिद्धरीत्यसंभवादत आह श-क्तिरिति । भेदसंसर्गयोर्माने तु संसर्गस्य प्रतियोगिनिरूप्यत्वात्पूर्व-पदार्थस्यापि बोधविषयत्वावश्यकत्वेन पूर्वपदांशेपि तत्वाभावा-च्चदसंगतिः स्पष्टैव । अत एव तच्छेषे उक्तं 'एवमस्मिन व्यवच्छि-न्ने यदि स्वार्थं जहाति नैतावता पुरुषमात्रस्यानयनं प्राप्नोतीति तत् त्वनयन्नुपसंहरति' एवमिति । जहत्स्वार्थत्वोपपादनायेतिभावः । नन्वत्र पक्षत्रये आद्ये पूर्वपदस्यार्थवत्वेनाख्यादिसिद्धावपि अन्त्य-योस्तदभावात्तदसिद्धिरत आह राज इति । एवंचाद्य एव युक्ततर इति गूढाकूतं ।

यद्यपि भेदसंसर्गौ भेदः संसर्गो वा सामर्थ्यमिति भाष्ये उक्तं तथापि वृत्तौ सामर्थ्यस्य लक्षणत्रये भेदवदर्थोपस्थापकत्वं संसर्गवदर्थोपस्थापकत्वं वोभयवदर्थोपस्थापकत्वं वेति। भेदवदित्याद्यवधारणमाद्ययोर्बीजं भेदसंसर्गयोः समनैयत्यात्। विनिगमनाविरहस्तृतीये बीजम्।

को भेदः संसर्गो वेत्युपक्रमस्य भाष्य उक्तम्। वाक्ये प्रसक्तं सर्वस्वन्निर्दिश्यते राज्ञः पुरुषोऽश्वश्चेत्यादि तथा प्रसक्तः सर्वः स्वामी च प्रयुज्यते राज्ञः पुरुषो भार्यायाश्चेति राजपुरुष इत्युक्ते राजा पुरुषं स्वाम्यन्तरान्निवर्त्तयति पुरुषो राजानं स्वान्तरान्निवर्त्तयति एवमुभयस्मिन्परस्परेण व्यवच्छिन्ने यदि स्वार्थं जहाति राजपदन्तदा कामं जहात्विति स्वाम्यन्तरादित्युक्त्या राजरूपस्वामितोऽनिवृत्तिलाभेन तत्संसर्ग उक्तः। अनेन च तयोस्तत्तद्रूपेण बोधाविषयत्वमुक्तं बोधविषयत्वे राजपदार्थस्य भेदसंसर्गस्य प्रतियोगितयान्वयावश्यकत्वे तत्त्यागकथनासङ्गतिः। अर्थस्य

---

ननु भेदसंसर्गावित्यत्र भेदः संसर्गो वेत्युक्त्या अन्यतरस्यैव तत्वलाभो नोभयोरिति इदमयुक्तमत आह यद्यपीत्यादि। ननु लक्षणत्रयासंगतिरविविक्तत्वादत आह भेदवदिति। तथापि नातिप्रसङ्ग इति प्रागुक्तासिद्धिरेवेत्याह भेदेनेति। यद्यपि भाष्येऽयमावाबुक्तस्तथापि स्वोक्तलक्षणत्रयक्रमाशयेनाह तृतीये इति। युक्तत्वं चास्येति सूचयितुं तत्र क्रमं विहाय तत्र तथा क्रमः।

अस्य जहत्स्वार्थत्वोपपादकत्वं समनैयत्ये मानं सूचयन्नाह को भेद इति। प्रसक्तमित्यनेनान्यव्यावृत्तिः। चेति इत्यादि। पुरुषः सोपि। नोत्तरपदे तत्वमित्याह राजपदमिति। इतिभाष्यसमाप्तौ। सूचन

बोधाविषयत्वमेव हि त्यागः । तस्मादुक्त एवार्थो भाष्यसंमतः ।

यत्तु अर्थवत्सूत्रे कैयटे समासग्रहणं तुल्यजातीयानां नियमार्थं, सुबन्तानामिति भाष्यप्रतीकमुपादाय सुबन्तानामित्युपलक्षणं भेदसंसर्गद्वारकार्थवत्तायुक्तानान्तेन कुम्भकारेत्यादिसमाससंग्रह इत्युक्तं तत्र वाक्ये पदार्थयोर्विभागेनापि बोधे सति इतरसंसर्गाकांक्षा भेदसंसर्गः स द्वारभूतो यस्य विशिष्टार्थस्य तद्युक्तानामित्यर्थ इति न तद्विरोधः ।

हरिरपि—

भेदसंसर्गशक्ती द्वे शब्दस्यैते व्यवस्थिते । इति ।

भेदशक्त्या पृथग्भानं संसर्गशक्त्यैकभानमिति तदर्थः ।

यत्त्वन्त्यपक्षे भेदसंसर्गौ वाच्यौ राजसम्बन्धी-अराजकीयभिन्नः पुरुष इति बोधः । यद्वा भेद एव वाच्योऽराजकीयभिन्नः पुरुष इति बोधः । एतद्विरोधा-

---

विषयमेवाह स्वाम्यन्तरादिति । अनेन यदि स्वार्थमित्यनेन च तयोः भेदसंसर्गप्रतीतिः एतदुभयप्रतीत्यर्थः । ननु बोध विषयत्वेऽपि त्यागस्वीकारे किम्बाधकमत आहार्थस्येति । ह्यितः । त्यागः शब्दकृतः ।

तृतीयपक्षे कैयटाविरोधं परिहरति यत्त्वित्यादि । कैयटे तदीये उक्तमित्यत्रान्वयः । तानेवाह सुबंतानमिति इत्यत्रसुबंतानामिति भाष्यप्रतीकमित्यर्थः । अन्यथाकारेत्यस्यासुबंतत्वेन तदसङ्ग्रहः स्पष्ट एव । ततो भेदसंसर्गयोस्तु तद्रूपेण भानलाभ इति विरोधः । तत्र कैयटीये । अपिनान्यसमुच्चयः । तयोर्भानं न हरितात्पर्यविषय इत्याह भेदशक्त्येति । प्रागुक्तमिदं । दीक्षितभूषणकृदाद्युक्तिं खण्डयति-

देव राजपुरुषो भार्याया इति न । संसर्गस्त्वनुमेयः ।

यद्वा संसर्ग एव शक्यो राजसंबन्धीति बोधः अराजकीयभेदस्त्वनुमेय इति । तन्नानुभवविरोधात् । गौरवाच्च । द्वन्द्वे भेदादेर्वाच्यताया उपपादयितुमशक्य त्वाच्च । किंच भेदसंसर्गयोर्भाने तयोः प्रतियोगिनि रूप्यत्वात्पूर्वपदार्थस्यापि बोधविषयत्वावश्यकत्वेनानेन प्रकारेण पूर्वपदे जहत्स्वार्थत्वोपपादनपरभाष्यविरोधात् ।

किंच राजनिष्ठयोरपि भेदसंसर्गयोर्भाष्ये दर्शितत्वेन तयोरपि वृत्तिजबोधे विषयतापत्तिरिति दिक् ।

यद्वोपसर्जनपदेऽप्यजहत्स्वार्थैव भिक्षुको हि भिक्षामासाद्य न पूर्वां जहाति संचयायैव प्रवर्त्तत इति भाष्यात् ।

अयं भावः स्वास्मिन्स्वपदार्थभूतायां विशेष्यतायां

---

यत्त्वित्यादि । अन्त्येति प्रागुक्तजहत्स्वार्थत्वोपपादकभाष्यीयप्रकारत्रयांत्यपक्षे इत्यर्थः ।

लाघवादाह यद्वेति । अस्यावाच्यत्वे राजपुरुषः सुन्दर इतिवद्राजपुरुषो भार्याया इत्यपि स्यादित्यस्य तत्त्वमावश्यकमिति ध्वनयन्नाहैतदिति । द्वन्द्वे रामकृष्णामित्यादौ । अपिना पुरुषनिष्ठसमुच्चयः । विषयतापत्तेरिति पाठः । तथानुभवविरोधादिना तदनङ्गीकारेऽर्धजरतीयानौचित्यं भाष्यस्यान्यथाप्युपपत्तेरुक्तत्वात् । तदाहेति दिगिति । एवं जहत्स्वार्थापक्षमाह यद्वेति । अपिना प्रधानपदं । भिक्षुक इति उक्तप्रकारत्रयेण जहत्स्वार्थत्वमुपपाद्यास्तु वा जहत्स्वार्था स्वार्थत्यागं विनापि अधिकार्थग्रहणे प्रवृत्तिर्वक्तुं शक्या यथेत्युक्तेदमुक्तं तत्र ।

नन्वन्त्यपक्षद्वयप्रतिपक्षतयाऽस्याः सुवचत्वेऽपि आद्यपक्षप्रतिपक्षतया विरोधावृत्त आहायं भाव इति । स्वस्मिन्नुपसर्जनपदे स्व-

स्त्वामेवेतरानिरूपितां विशेषणतामङ्गीकरोति विशिष्टशक्तिबलात्। तत्र सा विशेषणता राजादिपदोपस्थाप्ये सम्पूर्णे अविशेषात्। एवंच स्वपदार्थभूतविशेष्यतायाा अपि विशेषणत्वेनैव भानेन तत्र विशेषणान्वयः स्वरूपतो विशेष्यत्ववैशिष्ट्येनोपस्थित एव तदन्वयात्। वाक्ये तु पदजन्योपस्थितौ स्वरूपतो विशेष्यत्ववैशिष्ट्ये च भानमिति तदन्वयसिद्धिरित्याहुः।

यत्तु सखण्डाः शब्दा इति पक्षेऽप्यवयवशक्तिं तल्लक्षणां चाजानतां बालानां समुदायशक्त्यैव बोधस्य सर्वानुभवसिद्धत्वेनावश्यकल्प्यया तयैव राजविशिष्टपुरुषबोधोपपत्तौ तयोस्तद्बोधकत्वं न कल्प्यम्। वृषभादिपदे वृषादेरिव। आनुपूर्व्यन्तरघटकत्वाभाव विशिष्टानुपूर्व्या एव शक्ततावच्छेदकत्वात्। अतएव रामादिपदान्नाग्निनारायणादीनां बोधः। वाक्ये तु पदान्यर्थवन्त्येव। राजसम्बन्धी पुरुष इत्यर्थे राज्ञः पुरुषः पुरुषो राज्ञ इत्यनयोः शक्तिकल्पनापेक्षया-

---

त्र अङ्गीक्रियमाणायां पस्थाप्य इति यावानर्थस्तस्य क्लृप्तस्तस्मिन्ताद्विशिष्टे इत्यर्थः। पदेन स्वरूपव्यवच्छेदः। ष्येन तेनैव। एतच्च ऽनित्यशब्दवादिपक्षाश्रयां जहत्स्वार्थायामपि तु त्वयामिति बोध्यम्।

भूषणादिप्रतिपादितान्ययाजहत्स्वार्थापक्षं खण्डयति यत्त्वित्यादि। अपिनाऽखण्डपक्षसमुच्चयः। नैयायिकादिमतनिरासायाहावयवमिति। तयोः राजपुरुषपदयोः। आदिना याचकादि। नन्वानुपूर्व्याः शक्ततावच्छेदकत्वे तद्भिन्ना तदसम्भवोऽतआहानुपूर्व्यन्तरेति अस्यावश्यकत्वमाहातएवेति। रमित्यस्याग्निबीजत्वादकारस्य वासुदेववाचकत्वाद्राहाग्निनेति। एकार्थत्वं चैकवृत्त्यार्थबोधकत्वं च्विप्रत्ययस्तु प्रागवदेवेति बोध्यम्।

पदशक्तेर्लघुत्वात् । आरोपितार्थमादाय विग्रहवाक्ये प्रत्येकं विभक्त्यादि पदत्वं च । वृत्तिप्रागवस्थार्थारोपेणैव, सुपन्था इत्यादावात्वादीति ।

तन्न । आरोपितेनैवार्थवत्वस्य ततो बोधस्य च दुर्वारत्वात् । प्रातिपदिकादीनां सर्वत्रारोपितमेवार्थवत्त्वम् । कस्य चिद्विशिष्टशक्तिग्रहमात्राद्बोधस्त्ववयवानां नानर्थकत्वं साधयितुमीष्टे । वाक्यादपि कस्यचित्तथा बोधेन तत्राप्यवयवानर्थक्यापत्तेः । केवलशास्त्रप्रक्रियोपयोगिविचारवतां तदज्ञानस्य विशिष्टशक्तिग्रहमात्राद्बोधस्य च वक्तुमशक्यत्वाच्च ।

तदुक्तं वृद्धैः ।

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनीति ।

रूढिः समुदायशक्तिर्यत्रावयवार्थविरोधिनी तत्रैव । यथा रथंतरशालिपर्णीगौरखरादाविति तदर्थः । तत्र

---

ननु वृत्त्यन्तर्गतानामर्थवत्त्वाभावे तन्निमित्तकप्रातिपदिकत्वाद्यनापत्तिरत आहारोपितेति । नन्वेवमपि तेषामात्वे विशिष्टरूपापोदानविहितपथिमथीत्यात्वाद्यनापत्ति रथंवत् ग्रहणे इति परिभाषासत्वादत आह वृत्तिप्रागिति । प्रत्ययोत्तरपदयोश्चेत्यादिसूत्रस्थभाष्यसंमतमिदं । अधिकं भूषणगुरुमंजूषादौ द्रष्टव्यं ।

उक्तरीत्या तदावश्यकत्वादाहारोपितेति । अवयवानामित्यादिः । नकेवलमत्रैवेदं किंत्वन्यत्रापीत्याह प्रातीति कस्यचित्तादृशबालस्य । पदोरिति तथाच विशेषणान्वयाविन्यस्यापृथगर्थानामिति भाष्यविरोधापत्तिश्च । तदिति अवयवादीत्यर्थः । ग्रहमात्रात् बोधस्य चेति पाठः । यथाश्रुतासंगतेराह रूढिरिति । सा जहत्स्वार्था ।

नन्वेवं शास्त्राविषयत्वेन कथं रथंतरादिशब्दसाधुत्वमत आह तत्रेति रथंतरादावित्यर्थः । नन्वेवं रीती राजपुरुषादावपि सुवचात आह त्वयात्विति । एवंच तादृशतस्यास्तदसंमतत्वेच रामादितस्त

पदद्वयस्य नैरर्थक्येऽपि रथकरणकतरणकर्तृत्वादिकस्या-हार्यारोपेण प्रक्रियानिर्वाहो बोध्यः। त्वया तु राजादिपदे आहार्यार्थारोपो वक्तुमशक्यः तदर्थबाधाभावात्।

किञ्च राजपुरुष इत्यादावुत्तरपदार्थत्यागे न फलम्। किञ्चैषा जहत्स्वार्था न भाष्यसंमता 'यदि जहत्स्वार्था पुरुषमात्रस्यानयनं प्राप्नोती'ति भाष्यासङ्गतेः। उभयो रप्यनर्थकत्वे कस्याप्यानयनं न प्राप्नोतीति वक्तव्यं स्यात्। एवंच वृत्तावानुपूर्व्यन्तरघटकत्वाभावविशिष्टानुपूर्वी शक्ततावच्छेदिकेति न नियमः पूर्वपदेऽप्यनर्थकत्वमेकार्थीभावोपपादनाय शास्त्रकृत्कल्पितमेव प्रकृत्यादेरर्थवत्। बहुव्रीहिद्वन्द्वयोस्तु उभयोरपि उपसर्जनत्वेनोक्तरीत्यैव जहत्स्वार्थत्वं वक्तुं शुक्यम्।

जहत्स्वार्थविकल्पे च सर्वार्थत्यागमिच्छता।
बहुव्रीहिपदार्थस्य त्यागः सर्वस्य दर्शितः॥

इति हर्युक्तेः। एतेन जहत्स्वार्थतैवैकार्थीभावोऽजहत्स्वार्था च व्यपेक्षैवेति भूषणोक्तमपास्तम्। भाष्ये संख्याविशेषाभावं च योगाभावरूपमेकार्थीभावकृत-

---

द्बोधवारणाय तत्रावश्यकत्वेऽप्यत्राह वृत्ताविति। भाष्य मते तत्वमपि च वास्तवमित्याह पूर्वेति। तत्रानर्थकत्वमपीत्यर्थः। एवं सामान्यतदुक्ति संबंध्य विशेषपरत्वे प्रागुक्तरीत्या इष्टापत्तिरेवेत्याह बहुव्रीहीति सौत्रक्रमेण प्रयोगः। उभयोः अवयवयोः। समुदायस्यैव प्रधानपदत्वं प्रागुक्तं तदाहोक्तेति। एवं उभयोरनर्थकत्वरूपं। तत्रांशे संमतिमाह जहदिति।

भूषणादिस्वीयसिद्धांतं खण्डयति एतेनेति। अस्यार्थमाह भाष्ये इत्यादि विरोधादित्यंतेन। भाष्यइत्यस्योक्तमित्यत्रान्वयः। संख्येति प-

विशेषमुक्त्वा अथैतस्मिन्नेकार्थीभावकृते विशेषे किं स्वाभाविकं शब्दैरर्थाभिधानमाहोस्विद्वाचनिकमिति विकल्प्य स्वाभाविकत्वपक्षं व्यवस्थाप्य अथ ये वृत्तिं वर्णयन्ति किन्त आहुः परार्थाभिधानं वृत्तिरिति ग्रन्थेन वाचनिकमिति पक्षमुक्त्वा अथ तेषामेवं ब्रुवतां किं जहत्स्वार्था वृत्तिरुताजहत्स्वार्थेत्युक्तं तद्विरोधात्।

अनेन हि एकार्थीभावमुपक्रम्योक्तेस्तत्रैव पक्षद्वयमिति लभ्यते। वाप्यश्वे संज्ञायामिति समासे जहत्स्वार्था, सुप्सुपेति समासे त्वजहत्स्वार्थेत्याशयेनेदूतौ च सप्तम्यर्थ इति सूत्रे तत्र जहत्स्वार्थाऽजहत्स्वार्थे द्वे अपि भाष्यकृतोक्ते इति न तद्विरोधः।

यद्वा पूर्वपदे जहत्स्वार्थत्वमात्रेण तदुपपत्तिरित्यलम्।

---

कार्थीभावः। अस्याशयः प्राक् प्रतिपादितः तमेवाहानेनेति। हि यतः। नन्वेवमीदूतौचेति सूत्रभाष्यविरोधापत्तिर्द्वयोरेकत्रासंभवादत आह वाप्यश्व इति। अत्र वाप्यश्वे।

नन्वनुशासनभेदमात्रेण तदुपपादनमयुक्तं सिद्धान्वाख्यापकत्वाच्छास्त्रस्य।

ततः सिद्धांतमतेनाह यद्वेति समासद्वयेऽपीति भावः। एतेनारोपितार्थग्रहणे वाप्यश्व इत्यादौ ईदूतौचेति प्रगृह्यत्वमाशंक्य जहत्स्वार्थायां वृत्तावानर्थक्यान्नदोष इति भाष्योक्तं विरुध्येतारोपितार्थमादायेतरशास्त्रवत्तस्यापि प्रवृत्तिसंभवादित्याशंक्य तत्रार्थग्रहणसामर्थ्येनेदृशार्थस्याग्रह इति सकलप्राचीनग्रंथकारोक्तमपास्तं तदाहेत्यलमिति।

व्यपेक्षेति वदंतीत्यत्रान्वयः। इसुसोः सामर्थ्ये इत्यत्रक्लृप्तत्वादिति भावः। अत्र वृत्तौ। एवव्यवछेद्यमेवाह नतिर्वाति। ननु तस्याः वाक्येपि

व्यपेक्षावादिनस्तु परस्पराकाङ्क्षारूपा व्यपेक्षैवात्र सामर्थ्यं नत्वेकार्थीभावः। तदुक्तं भाष्ये 'परस्परव्यपेक्षां सामर्थ्यमेके' 'संप्रेक्षितार्थं समर्थ'मितिचेति।

अयं भावः। राज्ञः पुरुष इत्यादौ परस्परसाकाङ्क्षयो राजपुरुषयो सम्बन्धस्य राजादिपदोत्तरविभक्तिर्वाचिका, राजपुरुष इत्यादावपि पृथगुपस्थितयोस्तयोः परस्पराकाङ्क्षयोः सम्बन्धो राजा सुन्दर इत्यादौ विशेष्यविशेषणभाववत्समुदायशक्यो नत्वयं विशिष्टैकोपस्थितिनियामकः उपस्थितयोराकाङ्क्षानन्तरमेव तत्प्रतीतेः। शक्तिग्रहश्चोपस्थितयोरवयवार्थयोः संसर्गे इदं शक्तमित्याकारः सप्तम्यर्थसम्बन्धस्य विशिष्टशक्यत्वादेव वाप्यश्व इत्यादौ वापीपदस्य सप्तम्यर्थेऽवृत्तेर्न प्रगृह्यत्वम्। अतएव समुदायस्य प्रातिपदिकसंज्ञासिद्धिः।

अयमपि पक्षो वृत्तिवर्तनवादिन एवेति भाष्ये स्पष्टतया वाक्यादेवेयं वृत्तिर्निष्पन्नेति मन्यमानस्य वृत्तावपि वाक्यतुल्याकाङ्क्षाया एव सत्त्वेन भेद-

---

सत्वात्कथमिदमत आहायं भाव इति। नन्वत्र पक्षे कथं शक्तिग्रहोऽत आह शक्तीति। अत्र मते वाप्यश्वे दोषमुद्धरति सप्तेति। अतएव संबंधे समुदायशक्तेरेव। एवेन स्वाभाविकत्वव्यवच्छेदः मानस्येत्यस्याकांक्षायामन्वयः। एवेन विभिन्नव्यवच्छेदः। भेदेति विरुद्धविभक्तिराहित्येपीत्यादिः। ननुनामार्थयोरितिसत्त्वे कथमिदमत आह पदेति। नन्वेवमतिप्रसङ्गापत्तिरतआहाकाङ्क्षेति अतएवेत्यस्यार्थमाह तदर्थेति समुदायादेवेत्यर्थः। अतएव तल्लुक एव। अत्र वृत्तौ तद्बोधे तज्जन्योपस्थितेर्हेतुत्वावगतिरित्यग्रे।

सम्बन्ध बोधा, पदभेदेन व्युत्पत्तिभेदादाकाङ्क्षावशे-
नैव तत्तद्व्युत्पत्तिकल्पनात्। अतएव विभक्तेर्लुक्
तदर्थस्यान्यत एव प्रतीतेरत एवात्र न संख्याविशेषा-
वगतिः वाक्यदृष्टविरुद्धविभक्तिकत्वस्यात्राप्यनुस-
न्धानान्न नामार्थयोरभेदान्वयव्युत्पत्तिविरोधः अत-
एव दधि द्रष्टेत्यादौ भेदान्वयः विभक्तिलोपमजानतो-
पि तज्ज्ञानकृतोपदेशाल्लोकव्युत्पत्त्या तथा बोधः। त-
दभावे तु तत्तद्व्युत्पत्तेरप्यज्ञानान्न दोषः। विभक्त्यर्थस्य
च प्रकृतिबोध्यार्थेऽन्वयाद्राजपुरुषं पश्येत्यादौ विशिष्टे
कर्मत्वधीः।

यत्तु राजपदस्य राजसम्बन्धिनि लक्षणा। अत
एव राज्ञि न विशेषणान्वयः भेदसम्बन्धेनान्वये तु
ओदनः पचतीत्यादावन्वयबोधवारणाय भेदसंसर्ग-
कनामार्थप्रकारकशाब्दबोधे तद्धितप्रत्ययजोपस्थि-

---

यत्र तु तत्प्रतीतिनिबन्धनमस्ति तत्र भवत्येव तत्प्रतीतिर्यथा-
तावकीनादौ तत्राहि तवकममकावेकवचने इत्यादेशविधायकं। द्वन्द्वा-
दौ चशब्दाभावस्तु तदर्थे एव तस्य विधानात् वृत्तिवाक्ययोः
पर्यायतैव। वचनं सार्थकमिति पाठः क्वचिद्दृश्यते। नन्वेवमपि ना-
मार्थयोरिति व्युत्पत्तिविरोध एवात आह वाक्येति। अयमेव युक्त
इति ध्वनयन्नाहातएवेति तदनुसंधानादेवेत्यर्थः। अन्यथा तदति-
प्रसङ्ग एवेति भावः। ननु तज्ज्ञस्यैतत्सम्भवेपि कथमतज्ज्ञस्यात-
आह विभक्तीति। अनेन शास्त्रव्युत्पत्त्यभावः सूचितः। अतएवोप-
देशो लोकव्युत्पत्तौ हेतुः। अतएव त्पत्त्वेत्यपाठः। तदुपदेशः। तत
लोकः। अपिना शास्त्रीया। नन्वेवं सम्बन्धस्यैव कर्मत्वप्रतीत्याप-
त्तिरत आह विभेति। वृत्तेस्तत्रानिवेशात इति भावः।

एतत्पक्षावलंबिन्यपेक्षावादैकदेशिनव्यनैयायिकादिमतं खण्डय-
ति यत्त्वित्यादिना सम्बधिनीति। अयं भावः एवं सति राज्ञः

तेर्हेतुत्वावश्यकत्वेन तदसम्भवः। प्रत्ययत्वं संकेतविशेषसम्बन्धेन प्रत्ययपदवत्त्वं जातिविशेषो वा। नचैवं कर्मधारयत्वापत्तिरिति वाच्यम्। समासघटकपदार्थस्य विशेष्यत्वे सति यदलौकिके विग्रहे पदद्वयेपि एकविभक्तिनिर्देशस्तत्रैव कर्मधारयत्वस्वीकारात्। सत्यन्तेन चित्रगुः पञ्चपूलीत्यादेर्व्यावृत्तिरिति।

---

पदार्थैकदेशत्वेन न तत्र विशेषणान्वयः। अन्यथा ऋद्धस्य राजपुरुष इत्यादि स्यात्। नच शोभनायां गङ्गायां घोष इत्यादौ लाक्षणिके एकदेशभूतेपि शक्यार्थे लिंगशोभनादिविशेषणान्वयवत् प्रकृतेऽपि तदन्वयो दुर्वार इति वाच्यम्। तत्रापि गङ्गापदस्यैव शोभनगङ्गातीरे लक्षणायां पदांतरस्य तात्पर्यग्राहकत्वात्।

नचैवमपि चैत्रस्य नप्तेत्यादाविवैकदेशान्वयो दुर्वारः। तत्र हि नप्तृत्वं स्वजन्यजन्यपुंस्त्वं तदेकदेशे जन्यत्वे चैत्रस्यान्वय इति वाच्यम् ससम्बन्धिकातिरिक्ते तथानङ्गीकारात्। यद्वा तत्रापि स्वजन्यपुत्रत्वसम्बन्धेन नप्तर्येवान्वयः।

एवं घटादन्य इत्यादावपि स्वप्रतियोगिकभेदसंसर्गेणान्यस्मिन्नेवान्वय इति न दोषः। अतएव देवदत्तस्य गुरुकुलमित्यादौ समासो भवत्येवेति। ननु राज्ञो भेदसम्बन्धेन पुरुषेन्वयोऽस्तु किं लक्षणयाऽत आहेतिभेदेति नान्वयं उच्यमाने त्वित्यर्थः। अत एवाग्रतदो नासंगतिरन्यथा तदसङ्गतिः स्पष्टैव तेनान्वयस्यैव परामर्शात् उपस्थितेरिति, प्रत्ययभिन्नत्वेनागृहीतं यत्तज्जन्यो पस्थितेरित्यर्थः। अतो राजसम्बन्ध इत्यादौ सम्बन्धादिपदे ङस्पदत्व भ्रमदशायां जायमानस्य भेदसम्बन्धेन राजादिप्रकारकसम्बन्धादिविशेष्यकान्वयबोधस्यानुपपत्तिर्नापि राज्ञः पुरुष इत्यादौ ङसादौ सम्बन्धपदत्वभ्रमदशायां सम्बन्धाद्यंशे भेदसम्बन्धेन राजादिप्रकारकान्वयबोधापत्तिः।

प्रत्ययत्वेन गृहीतमिति तु नोक्तं राज्ञः पुरुषइत्यादौषष्ठ्यादेःप्रत्ययत्वादिनोपस्थितिदशायामपि तथाबोधानुभवादिति भावः। नन्वेवं प्रत्ययानामनेकत्वादननुगमापत्तिरत आह प्रत्ययत्वं चेति। तत्रादौ

मत्र। कण्ठे कालो दास्याः पुत्र इत्यादौ लक्षणायां मानाभावेन तत्र विशेषणान्वयापत्तेः। नच तत्रापि दासीपदस्य तत्संबन्धिनि लक्षणा। दासीसंबन्धिसम्बन्धीति बोधाननुभवात्। विभक्त्यन्तस्य तु न लक्षणा। तस्य तत्र शक्त्यभावात् विभक्त्यर्थस्य संसर्गतयैव भानाच्च। भेदसंसर्गकनामार्थप्रकारकबोधे च संसर्गबोधकत्वेन गृहीतपदज्ञानस्य कारणत्वेनादोषाच्च ओदनादिपदस्य लक्षणया संसर्गबोधकत्वमेव नानाभिधानाद्रूढिप्रयोजनयोरभावाच्च।

पराङ्गवद्भावानुरोधाच्चात्रापि व्यपेक्षैव सामर्थ्यमन्यथा पराङ्गवद्भावे एतत्, समासादावेकार्थीभाव इति वाक्यभेदः स्यात्तत्र परिभाषाप्रवृत्त्यभावे तु ऋतेन मित्रावरुणावृतावृधावृतस्पृशेत्यादौ ऋतेनेत्यादेः पराङ्गवत्वे आमन्त्रितस्य चेत्याद्युदात्तत्वापत्तिः। तत्प्रवृत्तौ तु ऋतेन मित्रावरुणावित्यनयोरानर्थक्ये इत्य-

---

चतुष्टयीपक्षे आह संकेतेति। त्रयीपक्षे आह जातीति। एवं लक्षणांगीकारे। सामानाधिकरण्यात्तत्रेति भावः।

अलुक्समासे विभक्तिश्रवणेन दोषमाह कण्ठे इति। षष्ठ्याः सम्बन्धिनि लक्षणायामपि दासीपदार्थस्यैकदेशत्वं दुरुपपादमेव वस्तुतः सा दुर्वचैव सुब्विभक्तौ न लक्षणेति त्वदीयसिद्धांतात्। तदेतदभिप्रेत्योक्तदोषाभावायाह विभक्त्यंतेति षष्ठ्याद्यंतस्यर्थः। नन्वेवमपि बोध्यत्वमादाय स्यादेवात। भाष्यसिद्धांतेनाह विभक्त्यैति। नन्वेवं भेदसम्बन्धेनान्वयासम्भव उक्तकार्यकारणभावादंतस्त त्सिद्धांतेनैवाह भेदेति। एवंचौदनःपचतीत्यादावदोषेण स कार्यकारणभाव एव नेति भावः।

ननु तस्यैवावश्यकत्वं अत्र कार्यकारणभावे तत्र लक्षणया दोषस्यैव सत्त्वादत आहौदनादीति। तयोः अन्यतरस्येति शेषः।

र्थोऽन्वाख्यानप्रदर्शनार्थमन्यानान्वयेन परस्परमसामर्थ्यान्न दोषः। मित्रावरुणाविस्येतच्च सम्बोधनप्रथमान्तम् । स्पष्टं चेदं भाष्ये ।

कर्मधारयेऽपि विशेष्यविशेषणभावेनान्वयो व्यपेक्षासाध्यः । उपकुम्भमित्यादावव्ययीभावे नञ्तत्पुरुषे च निपातानां वाचकत्वेन पूर्वोत्तरपदयोरर्थापेक्षा, निपातानां वाचकत्वस्याप्यङ्गीकाराद् निष्कौशाम्बिरित्यादौ क्रान्ताद्यर्थस्याकाङ्क्षावशादत्र पदैकदेशन्यायेन भानं न ह्याकाङ्क्षावशात्संसर्गस्यैव भानं नान्यस्येत्यत्र मानमस्ति । वाक्यदृष्टाकाङ्क्षातुल्याया आकाङ्क्षाया वृत्तौ जायमानत्वेन तद्वशाद्वाक्यैकदेशन्यायेनान्यत्रेवात्रापि बोधः । द्विदशा इत्यादौ सुजर्थस्य सप्तपर्णो वीप्सायाश्चैवमेव बोधः ।

---

एवमेकदेशिमतं संदूष्य व्यपेक्षावादी स्वमतं समर्थयते परांगेति । त्रेनेसुसोरित्यस्य समुच्चयः । तत्र परांगवद्भावे परांगेति सुबामंत्रित इतीत्यादिः । आपत्तौ निमित्तं सूचयन्नाह मित्रेति तत्र श्रुतौ । तथा-चामंत्रितस्य सत्वमिति तत्प्राप्तिः । मित्रावरुणावृतावित्यनयोस्तु पार्ष्णिकान्वयसत्वादस्त्येव सामर्थ्यम् । नच तन्निमित्तग्रहणान्नायं दोषः परिभाषामाश्रित्य तत्प्रत्याख्यानस्यैव न्याय्यत्वात् तदाह स्पष्टं चेदमिति कौस्तुभेऽप्येवम् ।

नन्वेवमपि कर्मधारये किं फलं तस्या अत आह कर्मेति । नन्वेवमपि निपातानां द्योतकतयाव्ययीभावादौ सा दुर्वचैवेति आह चेति । पदयोरर्थद्वारा हेत्वसिद्धिं सिद्धान्तमतेन परिहरति नियेति । अपिना द्योतकत्वम् । प्रतिपादितमिदं प्राक् । नचैवमपि बोधकाभावेन कथं क्रांताद्यर्थप्रतीतिरत आह निष्काविति । आदिना गोरथादौ युक्तादिपरिग्रहः । सिद्धांतमतेन तदुपायमाह पदैकेति । इदमेवोपपादयति वाक्यदृष्टेति दृष्टान्तमपि सिद्धान्तमतेनैवाह वाक्यैकाले प्रविश्य पिण्डीमित्यादावित्यर्थः । एतेनार्थाध्याहारो निरस्तः ।

बहुव्रीहावपि समुदायवाच्येनान्यपदार्थेन चित्रगोपदार्थयोराकाङ्क्षया परस्परान्वितयोरन्वयः। अन्यपदार्थस्य समुदायवाच्यता चानेकमन्यपदार्थे इति शास्त्रबलात्।

द्वन्द्वेपि चार्थे द्वन्द्व इति शास्त्रबलात्साहित्यं समुदायशक्यामिति वदन्ति।

तन्न। उक्तानामेकार्थीभावकृतविशेषाणां विशेषणे संख्याविशेषानवगमविशेषणसंम्बन्धाभावादीनां वचनसाध्यत्वेन गौरवात्। दधीत्यादौ लुक्यपि संख्याविशेषावगमे तस्य तदनवगमप्रयोजकत्वाभावाद् द्वावित्यादावन्यतो बोधेऽपि लुगभावाच्च। किञ्च समानार्थकवाक्यस्यानिवृत्तयेऽपूर्ववावचनारम्भे तव गौरवम्।

किञ्च यत्र युगपदुभयसम्बन्धविवक्षा परत्वादिना च क्रमेण वृत्तिद्वयं यथाऽब्राह्मणत्वमित्यादौ नञर्थभावार्थयोर्युगपद्विवक्षायां परत्वात् त्वप्रत्यये ततः

---

उक्तप्रकारमन्यत्रातिदिशति द्विदशा इति। अन्यत्रापि तामुपपादयति बहित्यादिना। चित्रेति चित्रं गोपदार्थश्च तयोरित्यर्थः! अन्वयः स्वस्वामिभावादिना। वाच्यताचेति साच तत्तद्रूपेण किंचित्वेन सामान्येन चशक्यामति। तथाच तत्राप्याकाङ्क्षावशादवयवयोः सम्बन्ध इति भावः। लक्षणाया दूषितत्वात्तथोपपादनं क्वापि न कृतमिति बोध्यम्। अन्यत्र निर्वाहस्य तेन कृतत्वाद्विशिष्य तानेवाह विशेषणे इति आदिना राजपुरुषोऽश्वश्चेत्यादि।

ननु विभक्तिलुक एव तदनवगमप्रयोजकत्वमिति नाद्यदोषोऽत आह दधीति नन्वेवं विभक्तिभिन्नत स्तद्बोधानंगीकारे द्वावित्यादौ दोषोऽत आह द्वाविति। तथाच तदसमभिव्याहृतान्यतो बोधेपि तदसमभिव्याहृतान्यत इति न दोषः।

गौरवान्तरमाह किंचेति एवमग्रेपि। तदेव विशिष्याह यथेति

समासस्तत्र विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति विषयताशाल्येव बोधः। तत्रैव यदा पूर्वं नञर्थसम्बन्धविवक्षा ततो भावार्थविवक्षा तदा विशिष्टस्य वैशिष्ट्यमिति विषयताशाल्येव बोधः। यदा तु पूर्वं भावार्थविवक्षा तदा विशिष्टे वैशिष्ट्यमिति विषयताशाल्येव बोध इत्येतत्सर्वं तादृशतादृशविषयताशालिबोधे विशिष्टशक्तिस्वीकारादेकार्थीभाववादेऽक्लेशेन निर्वहति न व्यपेक्षावादे। स्पष्टं चेदं तस्य भाव इति सूत्रे भाष्ये।

किञ्चाकाङ्क्षितसम्बन्धस्य न समुदायशक्यत्वं मानाभावात्। किन्तु शिष्यमाणं लुप्यमानार्थाभिधायीति न्यायेन पूर्वपदशक्यत्वमेवोचितम्। एवंच वाप्यश्व इत्यादावपि प्रगृह्यत्वापत्तिः। सोमो गौरी अधिश्रित इत्यनेन समत्वात्। किंचैवं समुदायस्यार्थवत्त्वाभावात्प्रातिपदिकत्वानापत्तिः। नाचार्थवत्त्वमर्थबोधकत्वमिवावयववृत्त्यार्थबोधकत्वमपीति वाच्यम्। अशब्दार्थत्वात्।

यत्तु समासे सर्वत्र उत्तरपदे लक्षणा प्रातिपदिकत्वमपि तस्यैवेति तन्न। तन्मात्रस्य प्रातिपदिकत्वे

---

कथंचिन्निर्वाहेऽप्याह क्लेशेनेति। स्पष्टमिति तत्र हि नञ्समासाद्भावप्रत्ययो विप्रतिषेधेनत्युक्तं। इष्टापत्तावाहैवंचेति। तस्य पूर्वपदशक्यत्वे चेत्यर्थः। नन्वर्थग्रहणसामर्थ्येन तद्वारणमिति इष्टापत्तौ नायं दोषोऽत आह किं चैवमिति तस्य पूर्वपदशक्यत्वेचेत्यर्थः। अर्थेति स्ववृत्त्येत्यादिः।

व्यपेक्षावाद्येकदेशिप्रागुक्तनैयायिकादिमतं खण्डयति यत्त्विति प्रत्ययानां संनिहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तेराहोस्विदेति तत्रे-

पूर्वपदस्य सुपो लुगनापत्तेः। उत्तरपदमात्रस्य प्रत्य-
यान्तत्वेन तदसंभवाच्च। पराङ्गवद्भावे तु न समर्थप-
रिभाषोपस्थितिः। आमन्त्रितार्थस्य यन्निमित्तं तदेव
पराङ्गवदित्यर्थकेन तन्निमित्तग्रहणेन कृतेनेत्यादेः परा-
ङ्गत्ववारणात्। अतएव भाष्ये 'क्षत्रेणाग्ने स्वायुः संर-
भस्वे'त्यादौ क्षत्रेणेत्यादेः पराङ्गवत्त्वं माभूदिति तन्नि-
मित्तग्रहणं कर्त्तव्य मित्युक्तं समर्थपरिभाषोपस्थाने
ह्यसामर्थ्यादेवाप्राप्तौ भाष्यासङ्गतिः स्पष्टैव।

क्रियाकारकमत्र व्यपेक्षालक्षणसामर्थ्यमिति कैय-
टोक्तं तु न युक्तम्। परस्परव्यपेक्षाया एव भाष्ये
सामर्थ्यपदार्थत्वेनोक्तत्वात्। किंचैवं सति कृतः सर्वो
मृत्तिकयेत्यादौ समासापत्तिः तादृशसामर्थ्यस्य तत्र
ग्रहणे फलाभावश्च। वेदभाष्यं तु फणिभाष्यविरो-
धादनादेयमेवेति दिक्।

---

त्यर्थः। तदिति प्रातिपदिकसंज्ञेत्यर्थः। ननु सिद्धान्ते परांगवद्भावे
का गतिरत आह परांगेति। यद्यपि भाष्ये वचनान्तरमपि प्रागुक्तं
तथापि तेनैव पक्षान्तरं ततो लाघवादुक्तमाहामंत्रितेति। अतएव
गोषु स्वामिन्नित्यत्रापि पराङ्गवत्त्वसिद्धिः। समर्थपदस्यात्रोपस्थितौ
तस्य वैरूप्यापत्तिरिति भाष्याशयः। मद्राणां राजन् परशुना वृश्च-
नित्यादौ मद्रपरश्वादीत्यर्थः। तत्प्रत्याख्यानं तु न भाष्यसम्मतमि-
त्याहातएवेति। तत्र तदनुपस्थितेरेवेत्यर्थः। आदिश्यां मित्रेणाग्ने
मित्रधेये यतस्वेत्यादौ मित्रेणेत्यादि। तदेवाहसमर्थेति क्षत्रेणे-
त्यादौ [illegible] [illegible]मेति। अनभिधानेन वारणं त्वगतिका
गतिरिति भावः। [illegible] क्रियाकारकस्य तस्य समर्थ इति सूत्रे
इत्यर्थः। वाक्येऽनिष्टाभावादिति भावः। नन्वेवं वेदभाष्य विरोधोऽत
आह वेदेति। एवं कौस्तुभादिकमपि। एवंचेद्गताविति सूत्रभाष्यं व्य-
पेक्षापक्षे [illegible]मयुक्तमुक्तरीत्या तदुपपत्तिरिति बोध्यं त
दाहेति दिगिति।

यत्तु समर्थ सूत्रे इतरनैरपेक्ष्यमपि सामर्थ्यं पदविधिशब्देन पदत्वसंपादको विधिः कर्तृकरणयोरित्यादिश्च । तेन पदविधिविषेय इतरानिरपेक्षस्वार्थबोधक इत्यप्यर्थं आवृत्त्या सूत्रस्य । तेन व्रीहिभिर्यजेतेत्यादावितरानिरपेक्षैर्व्रीहिभिर्यजेतेत्याद्यर्थसिद्धिरितरथासजातीयमेव गृह्यते तेन दण्डेन चक्रेण घटं करोतीत्यादीनां नासाधुतेति ।

तन्न । भाष्यानुक्तेः । पश्य मृगो धावति, पचति भवतीत्यादौ त्वदुक्तसामर्थ्यप्रत्यायकाभावेऽपि विशेषणस्यान्ययोगव्यवच्छेदफलकत्वेन न्यायत एवेतरानिरपेक्षकर्मत्वादिबोधस्येव व्रीहिभिरित्यादावपि तस्य संभवेन फलाभावाच्चेति दिक् ।

नन्वेवं देवदत्तस्य गुरुकुलमित्यादावेकदेशे गुर्वादौ देवदत्ताद्यन्वयो न स्यादितिचेन्न । ससम्बन्धिकपदार्थस्थले चैत्रस्य नप्तेत्यादाविवैकदेशान्वयस्याप्यङ्गीकारात् । नप्तृत्वं हि स्वजन्यजन्यपुंस्त्वन्तदेकदेशे जन्यत्वे चैत्रस्यान्वयात् ।

---

मीमांसकमतं खंडयति यत्त्विति । इष्टसंग्रहायापीति एवमग्रेपि । एवं चोपि अग्रे अतएवावृत्तिः । नन्विदं व्यभिचरितमत आह तच्च जातीति नन्वमुक्तमप्यग्रेति न्यायेनेष्टमेव सर्वसंमतमतः फलाभावमाह पश्येति । दृष्टांतघटकमिदं आवृत्तौ मानाभावाच्च प्रतिनिधेस्तु तद्बुद्ध्यैवोपादानमिति न दोषस्तदाहेति दिगिति ।

अथ सिद्धांते शंकते नन्वेवमिति तत्फलकैकार्थीभावांगीकारे इत्यर्थः । अपिना तदभावः । दृष्टान्ते तदाह नप्तृत्वमिति हिथतस्तदिरथमतस्तत्र तदन्यथा तद्धत्वमित्यर्थः । इदं च विशेषणेविशेषणानन्वयस्य तत्फलत्वस्य खंडकभाष्यानुरोधेनोक्तं ।

यद्वा तत्रापि स्वजन्यजन्यपुंस्त्वसम्बन्धेन नमर्थे- वान्वयः। एवं गुरुद्वारकेण स्वगुरुरूपाश्रयत्वरूपेण स- म्बन्धेन देवदत्तस्य कुले एवान्वयः।

घटादन्य इत्यादावपि स्वप्रतियोगिकभेदसम्बन्धे- नान्यस्मिन्नेवान्वयः। अन्यत्र नेदंप्रकारद्वयमनभिधा- नात्। यत्र नेष्यते। यत्र त्विष्यते शिवभागवतादौ तत्र भवत्येव शिवो भगवान् भक्तिरस्येति तदर्थः।

एवंच सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते।
स्वार्थवत्सा व्यपेक्षा हि वृत्तावपि न हीयते॥
इतरसापेक्षस्वार्थस्यैव तैः प्रतिपादनादित्यर्थः।
समुदायेन संबन्धो येषां गुरुकुलादिना॥
संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह।

इति कारिकायां सम्बन्धिशब्द इत्युपलक्षणम्। तस्माद्गमकत्वे भवति विशेषणसम्बन्धोऽगमकत्वे तु

---

अथ तत्फलत्ववादिभाष्यानुरोधेनाह यद्वेति। दृष्टान्तेपि। दार्ष्टान्तिके आहैवमिति। दृष्टान्तेआदिसंग्राह्यमाह घटादीति। नन्वेवमतिप्रसंगापत्तिरत आहान्यत्र त्विति। तदपि न सार्वत्रिकमिति यथाश्रुतहर्याद्यसंगतये आह यत्रनेष्यते इति। नन्वेवं हरेर्न्यूनताऽतआहैवंचेति। ततोन्यत्रापिक्वचिदिष्टत्वेचेत्यर्थः। तत्राद्यपक्षमाह संबंधीति। स्वार्थवदितिवाक्यवदितिपाठान्तरमित्थमित्यस्य सापेक्ष इत्यत्रान्वयः इत्याह तैरिति तैः सम्बन्धिशब्दैः। द्वितीयपक्षमाह समुदायेनेति इति हरिकारिकायामित्यर्थः। हरितात्पर्यमाह तस्मादिति गमकत्वमपि नान्यत्रैवं ज्ञापकत्वमित्याह गमकत्वमिति। एवं च भगवता तत्खंडकेन गमकत्वस्यैवोक्त्या तदन्यत्र तदन्वयो नतु सर्वत्रेति न भाष्यविरोधो नाप्यतिप्रसंगादिरिति बोध्यम्।

अत्राधिकमन्यत्र स्पष्टं हरिव्याख्यानादिकं एवंचैकार्थीभावस्वसामर्थ्ये तत्रैव तत्पक्षैतत्स्वार्थत्वादितिकैयट हरदत्तादिसामंजस्ये तत्खं-

बोधि तत्त्वं । गमकत्वं तथा बोधजनकत्वमित्यलम् ।

तत्र वृत्तिश्चतुर्धा समासतद्धितकृत्सनाद्यन्तधातुभेदात् । तत्र समासत्वं संकेतविशेषसंबन्धेन समासपदवत्त्वम् ।

यत्त्वर्थबोधायानुसन्धीयमानविभक्तिकपूर्वपदकनामसमुदायत्वं तदिति ।

तन्न । दधि मधुरमित्यादावतिव्याप्तेः । तत्र लुप्तविभक्त्यनुसन्धानेन बोध इति चेद् राजपुरुषादावपि तुल्यम् । लोपमजानतो बोध इत्यप्युभयत्र समम् । श्रुतेरिवार्थमित्येतद्घटके इवार्थमिति समुदायेऽतिव्याप्तेश्च ।

---

उक्तभूषणाद्युक्तिरयुक्तैवेति स्पष्टं गुरुमंजूषायां तदाहेत्यलमिति ।

अथ विशेषजिज्ञासायां प्राचीनाधभागासाङ्गत्याय वृत्तिविभागमाह तत्रेति । समर्थ इति सूत्रविषयभूतायां वृत्त्याश्रयत्वं वृत्तित्वमित्येवं तथोक्त्या निरूपितायां सत्यामित्यर्थः उक्तसूत्रसिद्धक्रमेणाह समासेति तत्र तासां मध्ये संज्ञाशब्दत्वादाह संकेतेति ।

नैयायिकाद्युक्तिं खंडयति यत्त्विति । ननु तत्र लुप्तविभक्त्यनुसंधानाददोषः । अतएव भावनान्वये प्रथमांतपदजन्योपस्थितेर्हेतुत्वं संगच्छते । नीलोत्पलादौ तु नानुसंधानं लोपमजानतोपि बोधात् अतएव षष्ठीतत्पुरुषात्कर्मधारयस्य जायस्त्वं संगच्छते इत्याशयेनाह तत्रेति दधि मधुरमित्यादौ वाक्ये इत्यर्थः । तुल्यमिति तथा च लक्षणावैयर्थ्यं । किंचानंतस्थले तदनुसंधानकल्पने गौरवं तदभिप्रेत्याह लोपमिति । श्रुतेरिवेत्यस्य समस्तत्वादाहेवार्थमिति । तिङ्न्तेति अतएव ।

सुपां सुपा तिङानाम्ना धातुनाऽथ तिङां तिङा ।
सुबन्तेनेति च ज्ञेयः समासः षड्विधो बुधैः ॥

इति वैयाकरणमतोन्मज्जने सूत्रभाष्यादिसिद्धसदर्थप्रतिपादनं दीक्षितैः कृतं । अप्रथमांतपदाभिन्नपदजन्योपस्थितेरेव भावनान्वयहेतुत्वेन न दोषः । वस्तुतः प्रथमात्वाद्यजानत स्तादृशकार्यकारण भावस्य-

पर्यभूषद् पचतभृज्जनेति तिङन्तघटितसमासेऽव्याप्तेश्च।

समासो द्विधा विशेषसंज्ञाविनिर्मुक्तः सुप्सुपेति विहितस्तद्युतश्च। अन्त्यश्चतुर्धा अव्ययीभावतत्पुरुष-बहुव्रीहिद्वन्द्वभेदात्। तत्पुरुषत्वादि संकेतविशेष-सम्बन्धेन तत्पुरुषादिपदवत्त्वम्।

तत्राद्योदाहरणं पूर्वं भूतो भूतपूर्वः सुप्सुपेति समासः। पूर्वमिति क्रियाविशेषणं पूर्वकालवृत्तिपरं भूधातोः सत्तोत्पत्तिर्वार्थः पूर्वकालवृत्तिसत्ताश्रय इत्यादिर्बोधः। द्विबद्धमिति न्यायेन पूर्वशब्देनोक्तेऽपि अतीतत्वे क्तः। एवं विस्पष्टं पटुर्विस्पष्टपटुः विस्पष्टपटुत्ववानिति बोधः। विस्पष्टमिति पटुत्वविशेषणतया नपुंसकम्।

## अथाव्ययीभावः।

हरौ इत्यधिहरि भक्तिः। हर्यधिकरणिका भक्तिरिति बोधः। अधिः सप्तम्यर्थवाचकः। उपकृष्ण-

---

हासम्भवात्तस्यापि बोधात्सत्त्वाच्च तत्तद्वाक्यसमभिव्याहारकारणत्वज्ञानं कारणमित्येवं ज्यायः। किंच नघटोस्तीत्यानुपूर्वीतो-बोधे व्युत्पन्नानां तत एव बोधेन तत्रा तिव्याप्तिः। एतेनानुसंधीयमानविभक्तिकत्वं शाब्दबोधे प्रयोजकानुपूर्व्यां ग्राह्यं तेनात्र नातिव्याप्तिः। घटोनेत्याद्यानुपूर्वीज्ञानत्वेनैव हेतुत्वादित्यपास्तम्।

प्राचामासाङ्गत्याय तद्विभागमाह समास इति। सौत्रक्रमेणाहाव्ययीभावेति। प्राग्वदाह तत्पुरुषत्वादीति। तत्र तयोर्वाक्ययोर्मध्ये काचित्कत्वाशयेनाहोत्पत्तिर्वेति। अस्यै वोदाहरणान्तरमाहैव मिति।

अथाव्ययीभावः।

उद्देशक्रमेणाहार्थेति प्राचामसाङ्गत्य याह तत्रेति। अव्ययीभावे वक्ष्यमाणमभिप्रेत्याहोत्सर्गस्येति एवव्यवच्छेद्यमेवाह (इत्यर्थः)। द्योतेति हि यतः।

मित्यादावुपः समीपवाचकः कृष्णसमीपमित्यर्थः। अत्राव्ययानां वाचकत्वादेव पूर्वपदार्थप्रधानाव्ययीभाव इत्युत्सर्गस्य निर्वाहः। द्योतकत्वे हि द्योत्यार्थस्य विशेषणताया एव न्याय्यत्वात्तद्बाधः स्पष्ट एव। स्पष्टं चेदमत्रैव भाष्ये।

एतेन कुम्भादिपदानां तत्समीपे लक्षणा, उपादि तात्पर्यग्राहकमित्यपास्तम्।

द्योतकस्य प्रजयतीत्यादौ द्योत्यार्थविशेषणकबोधे प्रकृते च तद्विशेष्यकबोधे कारणत्वेन कार्यकारणभावद्वयकल्पने गौरवात्।

निद्रा संप्रति न युज्यते इत्यतिनिद्रं। युज समाधाविति दिवादेरकर्मकस्य युज्यते इति रूपम्। अत्र निद्राकर्तृकवर्त्तमानयुक्तत्वाभाव इति बोधः। अतः संप्रति न युज्यत इत्यर्थः। अतिनिद्रमासीदित्यादौ तथा व्यवहारविषये लक्षणा। इतिहरि हरिशब्दः शब्दस्वरूपपरः इतिः प्रकाशवाची हरिशब्दप्रकाश इति बोधः। रूपस्य योग्यमनुरूपम्। सतृणमत्ति। साहित्यं समभिव्याहृतक्रियाकारकवृत्तिसाकल्यं च सहार्थः। तृणसहितं सकलं भोज्यमत्तीति बोधः। तृणसाहि-

---

नैयायिकाद्युक्तिं खंडयति एतनेति एतेनापीत्यर्थः। तेन पूर्वसमुच्चयः अस्यार्थमाह द्योतकेति। णत्वेन तस्यवाच्यत्वेन बोधानुरोधात्। नायं कर्माणि प्रत्यय इत्याह युजेति वृत्तौ तदुपायमाहातेरिति। एवं सति क्वाचित्कं विरोधं परिहरति अतीति अनुयोग्यार्थक इत्याह रूपस्येति सहार्थस्तत्प्रवृत्तिनिमित्तं अतएवाह तृणेति।

एतेन साहित्यमेवार्थः। उक्तरीत्यैवसाकल्यद्योतकतास्येतिउत्तरपदंसाध्यत्वमात्रार्थे साकल्येनात्तीत्येवं इतिच परास्तं। नन्वेवं सूत्र-

त्यं त्वत्रारोपितं प्रतीयते न वास्तवं शब्दशक्त्यभावात् । सकलभोज्यभोजनप्रतिपादने एव तात्पर्याच्च । सूत्रे साकल्येति प्रवृत्तिनिमित्तनिर्देशः । एवं सादृश्यपदेऽपि ।

साग्नि अधीते । अग्निग्रन्थसहितं तदन्तग्रन्थकर्मकमध्ययनमिति बोधः । यावत् श्लोकमच्युतप्रणामाः परिमाणपरिच्छिन्नत्वं यावदर्थः। श्लोकपरिमाणसंख्यापरिच्छिन्नाः प्रणामा इति बोधः। एकपरि। विपरीतवर्त्तनं परेरर्थः एकहेतुकं विपरीतवर्त्तनं, पराजय इति यावत् । सप्तगङ्गमुन्मत्तगङ्गमित्यादौ सप्तगङ्गासमाहार उन्मत्तगङ्गाधिकरणमित्यादि क्रमेण वा बोधः ।

एतेन पूर्वपदार्थप्रधानत्वमव्ययीभावलक्षणमित्यपास्तम् । उन्मत्तगङ्गमित्यादावव्याप्तेः उत्सर्गश्चाङ्गीक्रियत एव । इत्यव्ययीभावः ।

## अथतत्पुरुषः ।

कृष्णश्रितः कृष्णकर्मकश्रयणकर्त्तेत्यादिरीत्या बोधः। मासप्रमितः प्रतिपच्चन्द्र इत्यत्र माससम्बन्धिप्र-

---

विरोधात आह सूत्रे इति तदेकदेशेत्यर्थः । प्रवृत्तनिमित्तांशे आहैवमिति अंतस्त्वे साहित्यच सहार्थः अग्निशब्दोग्रंथविशेषपरस्तत्राहाग्निग्रंथेति । परिमाणमत्र मानसामान्यं तच्चात्रासंभवान्नान्यदित्याह संख्येति वैपरीत्यं च जयापेक्षया एकस्तत्र हेतुत्वेऽन्वय इत्याहैकेति दिक्संख्येइति समासादाह सप्तगंगेति ।

प्राचीनवैयाकरणानुक्तिं खंडयति एतेनेति। अस्यार्थमाहोन्मत्तेति अन्यथा तस्यासोऽव्याप्तिरुत्सर्ग इति ।

अथतत्पुरुषः ।

अन्याभिप्रायेणाहादीति । कालाध्वनोरिति द्वितीयेत्याह संबंधीति । प्रकृत्यादिस्य इत्यस्य खंडनप्रकारमाह इतावित्ति प्रश्नोप्र

रिच्छेदारम्भकर्त्रीति बोधः । आदिकर्मणि कर्त्तरि क्तः । धान्येनार्थो धान्यार्थः । हेतौ तृतीया । अर्थशब्दो धनवाची धान्यहेतुकं धनमिति बोधः । मासेन पूर्वो मासपूर्वः । अवध्युत्पत्तिकालावधिमदुत्पत्तिकालयोर्मासस्य व्यवधायकत्वेऽयं प्रयोगः । पूर्वसदृशेतिसमासाविधानादूनार्थकलहमिश्रयोग इव पूर्वयोगेऽपि तृतीया । माषोनम् । ऊनशब्दार्थः पूर्णत्वसंपादकवस्त्वभाववान् । कलहः क्रोधपूर्वको व्यापारः । वाक्कलहः । वाग्रूपः स इति बोधः । दध्योदनः दध्युपसिक्त ओदनः । वृत्तिस्वभावलभ्य उपसेकः । यूपदारु । यूपरूपविकारोपकारकं दार्विति बोधः । अश्वघासादयः षष्ठीतत्पुरुषा इत्यन्यत्र विस्तरः ।

पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः स्नानोत्तरकालिकानुलेपनाश्रय इति बोधः । एवमादिः समानाधिकरणपदस्तत्पुरुषः कर्मधारय इत्युच्यते । उ-

---

इति तथाचावध्युत्पत्तिकालप्राग्वर्तिव्यवधायककालप्राग्वर्तिकालोत्पत्तिकः पूर्वशब्दार्थः । प्रकृत्यादिभ्य इत्यस्य खंडनेन लक्षणाभावादाह पूर्वेति । तथाच तृतीया अभेदे । तेषां तत्राभेदेन सर्वत्रान्वयस्तदेवाह माषोनमिति । स्वार्थे तृतीयेत्याह वाग्रूप इति । बोधमाह दध्युपेति तादर्थ्यचतुर्थ्यन्तेन समासादाह पूर्वरूपेति प्रकृतिविकृतिभाव एवायं अन्यत्र चतुर्थ्या नैव समासो लक्षणापि तद्ध्वनयन्नाहाश्वेति । अन्यत्र शेखरादौ ।

अथ समानाधिकरणसमासमाह पूर्वमिति । पूर्वकालैकेत्यनेन वृत्तिबललभ्यमाह स्नातः स्नानोत्तेति । तत एवान्तरसंज्ञामाहैवमादिरिति तत्रबीजमाह समेति । पदयोस्तत्वं वक्ष्यतेऽनुपदमेव । पूर्वमित्यादिरुच्यते इत्यंतः पाठइहैवोचितः सौत्रक्रमात् तस्यागेबीजाभावेचायमाद्रियतेएवेत्यग्रे क्वचिद्दृश्यमानो लेखकप्रमादात् । प्राग्वर्त्तिव्यवधायककालप्राग्वर्ति । घनश्यामः पुरुषव्याघ्र इत्यादौ उपमानान्युपमि-

पमानोपमित समासयोर्द्वन्द्वकथं तन्निपातार्थप्रसङ्गे उ-
क्तम् । प्रसन्नेन दृगब्जेनेत्यादौ मयूरव्यंसकादिसमा-
सः । पूर्वपदार्थप्रधानता परवल्लिङ्गता च तत्र एव ।
राजान्तरमित्यादौ तद्विहितसमासस्यापि पूर्वपदार्थ
प्रधानत्वात् । नतूपमितं व्याघ्रादिभिरिति सामान्य-
धर्मप्रयोगात् । नचानुपात्तधर्मेणात्र सादृश्यम् । धर्मो-
पादाने उपात्तधर्मेणैव सादृश्यमित्यर्थस्य प्रकाशे द-
क्षाम स्फुटत्वात् । पुरेन्दुः सकलकल इत्यादावुपात्त-
धर्मातिरिक्तधर्मेण सादृश्यस्याभावाच्च ।

किंचेदं सूत्र समानलिङ्गवचनत्वे एव प्रवर्त्तते अ-
तएव परवल्लिङ्गमिति सूत्रे 'तत्पुरुषश्चापि कः प्रयोजय-
ति यः पूर्वपदार्थप्रधान एकदेशिसमास' । इति भाष्यं
द्वन्द्वैकदेशिनोरिति न्यासेन तत्पुरुषग्रहणप्रत्याख्यान-
परं भाष्यं च सङ्गच्छते । अन्यथा दृगब्जेत्यादेः पूर्व-
पदार्थप्रधानस्य दृश्यमानपरवल्लिङ्गस्य सत्वेन तद्स-
ङ्गतिः स्पष्टैव । दृगब्जस्य वीक्षणान्वयस्तु तस्य पूर्व-

तमिति सूत्रद्वयविषयं बोधादिकं सर्वं प्राक् निपातार्थवादे निरूपि-
तमित्याहोपमेति ।

यत्तु दृगब्जेनेत्यादौ नोपात्तधर्मेण सादृश्यं किन्त्वनुपात्तेनैव सा-
मान्याप्रयोगादुपमितसमासेनोपमैवेति न दोष इति प्रांचस्तन्नेत्याह
प्रसन्नेनेति । नन्वेवं कथं पूर्वपदार्थप्रधानत्वायत आह पूर्वेति तत्र
समासत्वेवेत्यर्थः । नन्वन्यत्र तद्विषये नेदं दृष्टमतआह राजान्तरमिति
अत्रोपपत्तिरग्रे वक्ष्यते । अपिनोपमितसमासः । तदुक्तेः प्रामाण्यनिरा-
सायाह पुरेन्दुरिति । तस्य विरुद्धधर्मद्वयाक्रांतत्वस्य तत एवेत्यत्र पा-
णिनिसम्मतमप्युपमितसमासा भावस्तत्रेत्याह किंचेदमिति । उप-
मितमितीत्यर्थः । समानाधिकरणाधिकारादन्यत्रोपमाया दुष्टत्वाच्चे-
ति भावः । प्राथमिकभाष्यसम्मतिमप्याहातएवेति तस्य तत्वस्य

रपदार्थप्रधानत्वान्निर्बाधः । मुखचन्द्र इत्यादावपि मयूरव्यंसकादिसमास एव तस्य पूर्वपदार्थप्रधानत्वात् चन्द्ररूपकव्यवहारः परवल्लिङ्गतापि तत एव ।

एतेनोत्तरपदार्थप्रधानत्वं तत्पुरुषलक्षणमित्यपास्तम् । इगञ्जेनेत्यादावव्याप्तेः । सूपप्रतीत्याद्यव्ययीभावेऽतिव्याप्तेश्चोत्सर्गस्त्वाद्रियत एव ।

नीलं च तदुत्पलं च नीलोत्पलम् । अत्र वाक्ये चकारप्रयोगेण प्रवृत्तिनिमित्तोत्पलत्वनीलत्वयोर्वक्ष्यमाणरीत्या नीलोत्पलयोर्वा साहित्यं भासते । अतएवात्र द्वन्द्वमाशङ्क्यानवकाशेन कर्मधारयेण बाधान्नेति भाष्ये उक्तम् । एवंच नीलत्वोत्पलत्वसमूहवन्नीलमुत्पलमिति बोधः । नीलसमानाधिकरणं तदभिन्नमुत्प-

---

तद्विहितसमासत्वादेवेत्यर्थः । तस्योपलक्षणत्वेनाप्युपपत्तेराह द्वंद्वेकेति अन्यथा तस्यतत्वस्य तत्वानंगीकारे । सत्वेनेति तत्त्यागेन तावत्पर्यन्तधावने बीजाभावेन विशिष्याञ्जेदकतादात्म्यप्रतीत्या निर्बाध एवातएवात्र परिणामालंकारः । मुखचन्द्र इत्यादावपि विशेषणसमास एव । चन्द्ररूपकत्वव्यवहारस्तु तद्बोधोत्तरं मनसा चन्द्रप्रतियोगिकाभेदस्यापि सुखेप्रतीतिरुपपद्यत इति ।

तत्रेत्याह इगञ्जस्येत्यादि । व्यवहारे हेतुमाह तस्येति प्राग्वदाह परेति । स्पष्टं चेदं काव्यप्रदीपोद्योतेऽलंकारसुधायां च । प्राचीनवैयाकरणोक्तं खण्डयति एतेनेति अस्यार्थमाह इगिति दोषांतरमाह सूपेति आग्रहाहोत्सर्ग इति ।

विशेषणं विशेष्येणेत्यस्य विषयमाह नीलं चेत्यादिति । अत्र स्वी-अजीर्णनैयायिकादिसकलमतासाङ्कर्यायाहाप्तेति कर्मधारयविशेष इत्यर्थः । एवमग्रेपि । नीलत्वोत्पलत्वयोरिति पाठः । अन्यथा तु अभ्यर्हितत्वविवक्षा बोध्या अत एवाग्निमविरोधो न वक्ष्यति । अतएव साहित्यभानादेव । अज्ञानतः शङ्कायामाहानवेति । आद्ये आह नीलंचोत्पेति । द्वितीये आह नीलेति । नैयायिकाद्युक्तिः खण्डयति एतेनेति

लमिति वा। तत्र वाक्ये इव वृत्तौ चशब्दाप्रयोगायै-कार्थीभावः।

एतेन कर्मधारयेऽवयवशक्त्योपस्थितयोरर्थयोर्विशेष्यविशेषणभावसंभवान्न तत्रैकार्थीभाव इत्यपास्तम्।

केचित्तु पण्डितो ब्राह्मणः दधि रुचिकारीत्यादिवाक्ये इव पण्डितब्राह्मण इत्यादिवृत्तावुद्देश्यविधेयभावेनान्वयवारणायैकोपस्थितये सः। अतएव वषट्कर्तुः प्रथमभक्ष इत्यत्र भक्षान्तरविधिरेव। नतु होतृचमस इतिसमाख्याबलात्प्राप्तवषट्कर्तृसम्बन्धिभक्षानुवादेन प्राथम्यविधिरिति मीमांसकाः।

---

तदर्थं तस्यावश्यकत्वेनेत्यर्थः।

केचिदिति भूषणकारादय इत्यर्थः। तैर्हि बहूनां वृत्तिधर्माणामिति कारिका पक्षांतरतया एव सिद्धान्तत्वेन व्याख्याता। सः एकार्थीभावः। सति हि तस्मिन्घटपदात्घटघटत्वयोरिवेतरसंसृष्टस्वार्थस्यैवोपस्थित्या तथाच नियामिकायाः पृथगुपस्थितेरभावान्न दोषः। नच नामार्थस्य तादात्म्यावच्छिन्नविधेयतया बोधे प्रथमांतपदजन्योपस्थितिर्हेतुरिति न दोष इति वाच्यं दधि द्रव्यमित्यादावपि तथा बोधानापत्तेः। लुप्तप्रथमया प्रथमान्तत्वेनापि समानं।

अत्र संमतिमप्याहातएवेति तत्र तदङ्गीकारादेवेत्यर्थः। नच प्रधानस्य सविशेषणत्वेपि वृत्तिस्वीकारेण वषट्कर्तृविशिष्टभक्षानुवादेन प्राथम्यविधिरिति वाच्यम्। प्रथमभक्ष इति समस्तपदे एकप्रसरत्वेनैकांशेन तदुद्दिश्यापरांशे तेन तद्विध्यसम्भवादन्यथा प्रसरभेदादसामर्थ्यात्समासानापत्तिः। प्रसरेत्यस्योपस्थितिभेदादित्यर्थः। भिन्नोपस्थितिं विना तथान्वयासम्भवात्। एकोपस्थितिविषयार्थकत्वं हि सामर्थ्यं अनुसंहितत्वं विग्रहवाक्यात्तथा बोधसम्भवेपि गौरवमुपात्तस्यावाचकत्वापत्तिश्च। एतेन केवलभक्षानुवादेन प्राथम्यविधिरित्यप्यपास्तम्। तदभिप्रेत्याह भक्षान्तरेति। ननु वचनान्तराभावात्तस्य तत्प्राप्तिरेव कथमतआह होत्रिति। तस्यां भक्षणनि-

यद्वृत्तयोगप्राथम्ये उद्देश्यतानियामके। पश्चात्त्व-त-द्वृत्तयोगौ विधेयतानियामकाविति तु न युक्तम्। प्रथमो भक्षः पण्डितो ब्राह्मण इत्यादौ तथा बोधदर्शनेन तस्य व्यभिचारात्। अपृक्त एकाल् प्रत्यय इत्यादिसूत्रेषु व्यभिचाराच्च। अतएव वृद्धैरपि 'यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षण'मित्यत्रादिपदोपादानेनास्यानियत्यं सूचितम्।

नच विशेष्यतयोपस्थितिर्विधेयतयान्वयनियामिकेति वाच्यम्। पदार्द्विशेष्यतयैवोपस्थितेः। विशेष्यतासमानाधिकरणैव विधेयतेत्यपि न युक्तम्। अज्ञातार्थस्यैव विधेयत्वेन तस्य विशेष्यत्ववद्विशेषणत्वस्यापि संभवेन नियमे मानाभावात्।

नच तथा शाब्दबोधं प्रति उद्देश्यविधेयवाचकघटितैकसमस्तपदभिन्नपदजन्योपस्थितिर्हेतुरिति पूर्वोक्ते पीतवासाश्चतुर्भुज इत्यादौ च न दोष इति वा-

---

मित्तत्वादिति भावः। इदं वषट्काराच्च भक्षयेदिति सूत्रे शेषभक्षणंते रुक्तम्।

नन्वत्रोद्देश्यतागमकस्य यद्वृत्तयोगादेर्विधेयत्वागमकस्य तद्वृत्तयोगादेश्चाभावेन कथं तथान्वयापादनमत आह यद्वृत्तेति। इत्यादौ तत्रापि। क्वचित्तथा पाठ एव। प्राचां ग्रन्थासांगत्याय शास्त्रीयमपि तमाहापृक्तेति आदिनार्धधातुकं शेष इत्यादि। तेषामपीदं सार्वत्रिकतया नेष्टं किंतु तथैवेत्याहातएवेति। तस्य तत्र व्यभिचरितत्वादेवेत्यर्थः। एवं च तथान्वयबोधे उद्देश्यवाचकसमभिव्याहृततदसंसृष्टार्थबोधकविधेयवाचकपदजन्योपस्थितेर्हेतुत्वेऽन्यत्रदोषस्य स्पष्टत्वादाह नच तथेति। पूर्वोक्ते पंडितब्राह्मण इत्यादौ आदिना गङ्गाधरः। सर्वेश्वर इत्यादि।

एतेन प्रकारान्तरं ततो दुर्वचमिति भूषणोक्तमपास्तं। समासच-

च्यम् । सकलवृत्तिभेदघटितगुरुतरकार्यकारणभावकल्पनापेक्षयैकार्थीभावस्वीकारस्य लघुत्वादित्याहुः ।

तन्न । तथान्वयाभिप्रायेण समासप्रयोगे प्राप्तत्वादिपर्यालोचनोत्तरं बोधस्येष्टत्वात् । अतएवालंकारिकैरुद्देश्यानन्तर्याभावेऽपि विधेयाविमर्श उक्तो न्यक्कारो ह्ययमित्यादौ । तत्र विलम्बेन तथा प्रतीतिस्तादृशोत्सर्गपरित्यागात्सहृदयवैमुख्यं वा दुष्टिबीजं । तथा प्रकृतेऽपि विलम्बेन प्रतीतिः । समासे तथाऽप्रतीतिरित्यु-

---

दन्यवृत्तावपि तथाबोधस्य नेष्टत्वादाह सकलवृत्तीति प्रागुक्तमेव दोषमाह तथेति । उद्देश्यविधेयभावेनेत्यर्थः । अनेनातिप्रसङ्गो वारितः । अपिना व्यस्तप्रयोगे । आदिना अप्राप्तस्थले तथाबोधस्येति पाठः । अर्थ उक्त एव । अतएव तदभिप्रयोगेण तदुत्तरं तथा बोधस्येष्टत्वमित्याशयके वाक्यदोषकथनावसरे प्रकाशकारादिभिर्विधेयाविमर्शदोषे इदमुदाहृतम् ।

> न्यक्कारो ह्ययमेव मे यदरय स्तत्राप्यसौ तापसः ।
> सोप्यत्रैव निहंति राक्षसकुलं जीवत्यहो रावणः ॥
> धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा ।
> स्वर्गग्रामटिकाविलुंठनवृथोच्छूनैः किमेतैर्भुजैः ॥

इति रामेण राक्षसक्षये क्रियमाणे क्षुब्धस्वान्तस्य रावणस्य स्वाधिक्षेपोक्तिरियम् । अत्र प्रातारिसत्वमयमित्यनूद्य न्यक्कारत्वस्याप्राप्तस्य विधेयत्वं । तत्र चोद्देश्यविधेयताशालिबोधे विधेयवाचकपदप्रागवृत्ति उद्देश्यवाचकपदजोपस्थितिर्हेतुरिति कार्यकारणभावादयमेव न्यक्कार इत्युचितम् । तस्य चाकरणादविमृष्टविधेयांशत्वं । अत्र शब्दरचनाविपरीता कृतेति वाक्यस्यैवायं दोषो न वाक्यार्थस्य । तथा च तत्र न विधेयत्वाप्रतीति र्दूषकताबीजं तदेतदभिप्रेत्याह तत्रेति । विलम्बेनेति विपरीतानुपूर्वीप्रतिसंधानपूर्वकमित्यादिः । क्वचित्तथा पाठः एवमग्रेऽपि । अविलम्बिता प्रतीतिर्हि उद्देश्या । ध्वनितं चेदं वृद्धिसंज्ञासूत्रस्थभाष्यादिषु ।

पक्षान्तरमाह तादृशोत्सर्गेति । उद्देश्यानन्तर्येत्यर्थः । विलम्बे

त्सर्गपरित्यागेन सहृदयोद्वेगो वा दुष्टिबीजन्तद्वदेव चास्यापि नासाधुता। अपृक्त एकाल्प्रत्ययोऽभ्यासलोपश्चेति सौत्रप्रयोगात्। अतएव सप्तदशारत्निर्वाजपेयस्य यूपो भवति लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यादौ वाजपेययूपारत्न्युष्णीषश्चानूद्य सप्तदशत्वलौहित्यादिविधिरिति मीमांसकाः।

नचात्र यूपारत्न्युष्णीषयोरतिदेशप्राप्ततयातिदेशादुपदेशस्य बलवत्त्वेन पूर्वमेतैरेव विशिष्टविधिरिति वाच्यम्। यूपऋत्विजामप्यतिदेशप्राप्ततया तत्पर्यालोचनोत्तरमेवास्य विधेः प्रवृत्तेः प्रथमतोऽत्र विशिष्टविधिरेव। प्राप्ताप्राप्तविवेके तु विशेषणे पर्यवसानमित्यस्याप्ययमेवार्थः। आपाततः प्रतीतावपि प्राप्तत्वादिपर्यालोचने तथा तात्पर्यग्रहाच्छाब्दबोध इति। उच्चारितशब्दस्य तात्पर्यम्, तत्तात्पर्याद्वाक्येऽपि प्राप्तत्वादिपर्यालोचनमेव तथान्वये तात्पर्यग्राहकम्। अतएव पण्डितो ब्राह्मण इत्यादौ यस्यैवाप्राप्तत्वं तत्रैव विधेयता पर्यायेण दृश्यते। यद्वृत्तयोगादिकमपि प्राप्त-

---

नेति वाक्यानुसंधानपूर्वकमित्यादिः। पक्षान्तरमाह समासे तथाऽप्रतीतिरिति अत्राकारप्रश्लेषः असमासे तथा प्रतीतिपाठान्तरम्। उभयत्र मानद्वयं यथाक्रममाहापृक्त इति। सौत्रेति इदमुपलक्षणं प्रागुक्तवार्त्तिकप्रयोगस्यापि। इदं परसंमतमपीत्याहातएवेति। समासेऽपि तथान्वयांगीकारादेवेत्यर्थः। आदिभ्यां यद्यपि चतुरवत्ती यजमानः पंचावत्तैवइडाकार्येत्यादावत्ताद्यनूद्य पञ्चत्वादिपरिग्रहः। अत्र (सयुतो) स्तद्दोदः पूर्वमिति। तत्प्रवृत्तेरित्यादि

अस्यविधेरुपदेशत्वावच्छिन्नस्य तदीयादिविरुद्धग्रन्थान्तरमपि योजयति प्रथमत इति पदेन तस्य मानसत्वव्यवच्छेदः। इदमर्थमाहापेति। तस्य कारणत्वं न केवलं तत्रैव किंत्वन्यत्रापीत्याह वाक्येपि

त्यादेरेव गमकमेवं च समासे तथान्वये एकप्रसरता-भङ्गेनासामर्थ्यात्समासानापत्तिरिति मीमांसकनव्योक्तमपास्तम्। प्रथमभक्ष इत्यत्र तु समाख्यापेक्षया वाक्यश्रुत्योर्बलवत्त्वेन प्रथमतोऽनेनैव भक्षान्तरविधिरिति नदोषः।

नन्वेवं कटोऽपि कर्म भीष्मादयोऽपीति भाष्योक्तपक्षे परमेण कारकेण कृतं परमकारकेण कृतमित्यादौ तत्पुरुषे तुल्यार्थेति सूत्रभाष्योक्तस्य परिनिष्ठित विभक्त्या समासस्यानुपपत्तिः। विशेषणविशेष्ययोर्द्वयोरपि तत्र पक्षे करणत्वेन क्रियायामन्वयेन सामर्थ्याभावात्।

नच यद्यत्क्रियायाप्तुमिष्टतमं तत्सर्वं कर्म। यद्यत्क्रियायां साधकतमं तत्तत्करणं द्रव्यं गुणश्च। नह्यसौ कटमात्रेण सन्तुष्यति। एवंच सर्वेषां क्रियायां प्रत्येकं कारकत्वात्सर्वेभ्यः कर्मादावेव तत्तद्विभक्तिरिति हि तत्पक्षबीजं। तदयुक्तम्। आसनशयनादिक्रियोपयोगित-

---

ति नन्वेवमभियुक्तोक्त्यसङ्गत्यापत्तिरत आह यद्वेति। एवेन तथान्वयव्यवच्छेदः। एवंच उक्तरीत्या तदुपपत्तौ च नन्वनया रीत्या प्रथमभक्ष इत्यत्रापि तथान्वयसम्भवे भक्षांतरविधिर्मीमांसकोक्तो दुःसङ्गतः प्रागुक्तः स्यादत आहप्रथमेति। समाख्येति होतृचमस इतीत्यर्थः। प्रबलक्रमेणाह वाक्येति एवं उक्तरीत्या कर्मधारयेऽप्येकार्थीभावाङ्गीकारेण पक्षान्तरे शङ्कानुदयादेवाह कटोऽपीति। निर्मूलत्वं निराचष्टे तत्पुरुष इति तत्र हि तदतिप्रसङ्गमाशङ्क्य प्रतिपदोक्तपरिभाषया समाहितम्। तत्र पक्षे कटोपीति भाष्योक्तपक्षे।

कैयटोक्तिं दूषयति नचेति। भाष्याशयं तदुक्तमाह यद्यदिति प्रकृतशङ्कास्थल आह यद्यदेति बीजं वाच्यं तदयुक्तमिति पाठः।

था द्रव्यस्योत्कर्षातिशयत्वेऽपि गुणादेस्तत्त्वाभावादिति वाच्यम् । कारकान्तरापेक्षयैव प्रकर्षस्य विवक्षणात् । न तु स्वकक्षायामपि । अन्यथाऽश्वेन पथा दीपिकया व्रजतीत्यादौ सर्वेषां करणत्वानापत्तेः ।

नच पार्ष्णिकपरस्परान्वयेन सामर्थ्यमिति वाच्यम् । तस्य दुर्वचत्वात् । तथाहि स न शाब्दः, शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात् ।

नच गुणादेः परिच्छेद्याकाङ्क्षासत्त्वेन द्रव्यस्य च परिच्छेदकाकाङ्क्षासत्त्वेन प्रथमं द्रव्यगुणयोः श्रौतक्रियासम्बन्धेऽपि पश्चादुक्ताकाङ्क्षावशात्परस्परं विशेषणविशेष्यभावेन विशिष्टस्य क्रियासम्बन्धविषयो बोधः। आकाङ्क्षावशादेव पुनरनुसन्धानं शब्दस्य । कारकस्य क्रियान्वय इति च श्रौतप्रथमबोधेनोपपन्नम् । द्वितीयमादाय च सामर्थ्यमिति वाच्यम् । एवं हि श्रौतसम्बन्धस्य बलवत्त्वात्तत्रच प्रत्येकं साधुत्वबोधाच्च श्वेतं छागमालभेतेत्यादिविषये श्वेतच्छागाभावे कृष्णच्छागेनैव येन केनचित् श्वेतेनापि यागस्य साङ्गत्वापत्तेः ।

---

एवार्थमेवाह नत्विति । कैयटप्रयोगमेवाहाश्वेनेति । ननु स किं शाब्द उत आर्थस्तत्र नाद्य इत्याह स नेति । सत्त्वेनेत्यस्याग्रेऽन्वयः । उक्तरीत्या आह प्रथममिति । उक्तेति उभयाकांक्षेत्यर्थः । अस्याव्यवहितान्वयः । पश्चादित्यस्य बोधेऽन्वयः । अतएव सम्बन्धेत्यस्य तद्बोधेपीत्यर्थो बोध्यः । तस्यापि शाब्दत्वमाहाकांक्षेति उभयाकांक्षेत्यर्थः । पन्नमिति एतदप्यपोद्धारनुद्धयाथर्येण कल्पनमिति बोध्यम् ।

ननु पुनरनुसंधानमपि किं प्रत्येकं विभक्त्यन्तस्योत तद्रहितस्य

किंच तत्तद्विभक्त्यन्तस्यानुसन्धाने कारकत्वेन द्रव्यान्वयायोगात् । नच विभक्तिरहितस्यानुसन्धानं तस्याबोधकत्वात् । न केवला प्रकृतिरिति निषेधाच्च । नच समस्तपदानुसंधानम् । यत्र समासात्प्राक्परस्परान्वयस्तत्रैव समासाभ्युपगमेन तदनुसन्धानासम्भवात् ।

किंच समस्तपदानुसन्धानेन सामर्थ्यवर्णनं सामर्थ्यज्ञानाधीनश्च समास इत्यन्योन्याश्रयापत्तिः । किंचैवं सति वाक्ये परस्परमुद्देश्यविधेयभावेन परस्परान्वयस्य दौर्लभ्यापत्तिः । समस्तपदे परैस्तथान्वयास्वीकारात् ।

नच

यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् ॥

इत्यभियुक्तवाक्ये प्रथमं क्रियान्वयरूपमेव प्राथम्यमन्यादृशस्यातिप्रसक्तत्वात् । एवंच तयोरुद्देश्यविधेयत्वाभ्यां क्रियान्वय आवश्यकः । नहि समासपदैकदेशस्याख्यातेनान्वयसंभवः । आदौ समासघटकपदार्थान्वये एव तस्य साधुत्वाङ्गीकारादयमेव समासादावेकार्थीभावो नामातो न समस्तपदे तथान्वयः । प्रकृते

---

समस्तपदस्य वा । तत्र नाद्य इत्याह किञ्चेति । कारक इत्यधिकारबलेन कर्मादिविभक्तीनां क्रियान्वयौचित्यात् इति भावः । न द्वितीय इत्याह नचेति । अन्त्ये दोषान्तरमाह किञ्चेति । एवमग्रेऽपि एवं सति समस्तपदानुसन्धाने सति । वाक्ये इत्यस्यान्वये ऽन्वयः । दौर्लभ्यं चानुसंहितसमस्तपदे तदाह समस्ते इति ।

नायं स्वपक्षे दोष इति सूचयन्नाह परैरिति । ननु समस्तपदे तथानन्वयेऽन्यदेव बीजं, न प्रागुक्तमिति नायं पररीत्यापि दोष इत्याशयेनाह नचेति वाच्यमित्यत्रान्वयः । अतीति अपृक्त एकालित्यादाविति भावः । तयोः उद्देश्यविधेययोः । इदं तत्र नास्तीत्याह नहीति आख्यातेन पदान्तरेण । तस्य समासस्य । एवेन विशिष्टैकोपस्थिति

तु आदावुपात्तासमस्तपदयोः क्रियान्वयसम्भवेन पश्चा-दनुसंहितसमस्तपदेऽपि तथान्वयसंम्भव इति वाच्यम्।

पूर्वमनुसंहितासमस्तपदे तथान्वयसंभवेनोपात्त-समस्तपदेऽपि तथान्वयापत्तेः। किंचोद्देश्यत्वविधेयत्वाभ्यां तयोः क्रियान्वय इत्युक्तिमात्रं रमणीयम्। तयोः परस्परनिरूपितत्वेनोद्देश्यविधेययोरेव तद्रूपेणान्वयात्। किंच नीलमुत्पलमस्तीत्यादौ सत्तायामुत्पलस्योद्देश्यत्वेनान्वये तस्या विधेयत्वं वाच्यं, नीलस्य विधेयत्वेनान्वये च तस्या उद्देश्यत्वं वाच्यम्। न चेदमावृत्तिं विना संभवति वैरूप्यात्, वाक्यभेदश्च नैवंविधे विषयेऽनुभवसिद्धः। किंचाभियुक्तोक्तित उद्देश्यस्य प्राथम्यलाभेऽपि विधेयस्य न तल्लाभः।

तद्वृत्तयोगः पश्चात्त्वं स्याद्विधेयस्य लक्षणम्।

इति तच्छेषात्। किंचेको यणित्यादाविक इति षष्ठ्यन्तस्यादौ क्रियान्वयासंभवः। स्थान्यादेशभावसंम्बन्धस्य षष्ठ्यर्थत्वेन तस्य क्रियायामभावात्। एवं राज्ञः पुरुष इत्यादौ स्वस्वामिभावसम्बन्धाद्यर्थकषष्ठ्यामपि तथान्वयासम्भवः। किंच भवदुक्तं प्राथम्य-

---

जनकत्वव्यवच्छेदः। विशिष्टविषयवृत्त्यभावात्। एवमप्यत्र न दोष उक्त इत्याहप्रकृते त्विति। परमकारकेण कृतमित्यादावित्यर्थः। प्रकृतविरुद्धस्थले दोषं तावदाह पूर्वमिति तथान्वयेति। तयोस्ताभ्यां तदन्वयेत्यर्थः। अभ्युपेत्य वादोऽयं वस्तुतस्तदयुक्तमेवेत्याह किंचोद्देश्येति। तयोः उद्देश्यत्वविधेयत्वयोः।

अभ्युपेत्य वादेनैवाह किंच नीलमिति। सत्तायां एकपदार्थोपस्थितायां। तस्याः सत्तायाः। तथैवाह किंश्चेति। प्राथम्येति प्रथमं क्रियान्वयित्वरूपेत्यर्थः। तथाचैवंचेत्याद्युक्तिरसंगतैवेति भावः। तथैवाह किंचेकइति। तथैवाह किञ्च भेति। शेषेति तद्वृत्वयोग इत्यादी·

म्प्यसङ्गतम् । अभिशुक्लोक्तवाक्यशेषविरोधात् । न्यक्कारो ह्ययमित्यादावुद्देश्यस्य प्राथम्याभावेनाविस्पष्टविधेयांशतेति प्रकाशोक्तेरसङ्गतेश्च ।

अपिच वृद्धिरादैच्सूत्रभाष्ये पूर्वोच्चारितः संज्ञी परोच्चारिता संज्ञेत्यादिग्रन्थेन पूर्वोच्चारितत्वरूपप्राथम्यस्यैवोक्तत्वात् । उक्त एकार्थीभावोऽपि निर्मूलः तत्तत्प्रत्ययविधायकशास्त्रीयप्रत्यासत्तिन्यायमूलिकया प्रकृतिप्रत्ययौ सहार्थं ब्रूत इति भाष्यसंमतव्युत्पत्त्यैव प्रकृतिप्रत्यययोस्तल्लाभेन तद्धितविधौ समर्थपरिभाषोपस्थितेर्भाष्योक्ताया वैयर्थ्यापत्तेः । अस्मदुक्तैकार्थीभावस्यैव समर्थ(पदार्थ)पदार्थताया भाष्ये उक्तेश्च ।

नच मानसः पार्ष्णिकबोध इति वाच्यम् । शब्दयोरर्थद्वारकपरस्परान्वयाभावेनासामर्थ्यस्य तदवस्थत्वात् । किंच नीलमुत्पलं पश्येत्यादौ दर्शनकर्मत्वस्य साक्षादेव गुणे सत्वेनाकाङ्क्षाभावेन पार्ष्णिकबोधे मानाभावात्तत्र समासानापत्तिः । यत्र गुणवाचकानां स्वपरिच्छेद्यद्रव्यद्वारा क्रियाकारकत्वं तत्र परिच्छेद्यं द्रव्यं किमित्याकाङ्क्षायामुपात्तमेवेत्यरुणाधिकरणवार्त्तिकोक्तेः ।

---

त्यर्थः । किंचेत्युक्तावेव भाष्यविरोधरूपदोषमाहापिचेति । उक्त इति अयमवेत्यादिना समासे दोषाभावादाह तत्तदिति एकोपस्थितिजनकरूपेत्यर्थः । एवं तस्य शाब्दत्वं निरस्यांत्यपक्षं निराचष्टे नचेति मानसत्वादेवाह शब्दयोरिति । तथाचोक्तस्थले समासानापत्तिः ।

अभ्युपेत्य दोषांतरमत्राह किञ्चेति । भावात् असामर्थ्यादिति शेषः तत्र नीलोत्पलं पश्येत्यादौ । यत्र अरुणया पिंगाक्ष्येत्यत्र गुणिनि नैत्र-

किंच नीलादिपदार्थानां परिच्छेद्याकाङ्क्षायां द्रव्यस्योपात्तगुणवदेव, गुण उपात्तद्रव्यवृत्तिरेवेति भेदसंसर्गविषयकस्यापि पार्ष्णिकस्य लाभेन नियमतोऽभेदविषयकपार्ष्णिकबोधालाभेन सामानाधिकरण्यनिमित्तसमासानापत्तिस्तन्निमित्तपुंवत्त्वानापत्तिश्च। दर्शनीयमातेत्यादौ तद्वारणाय वृत्तौ वृत्तेः प्राक्च यत्र सामानाधिकरण्यं तत्रैव पुंवत्त्वप्रवृत्तेः। एतच्च बहुव्रीहिप्रकरणे स्फुटीभविष्यति। एतेन समासघटकीभूतं गुणिपरमित्यपास्तमिति चेत्।

अत्राहुः। भीष्मं कटं कुर्वित्यादौ भीष्मादिगुणविशिष्टकटस्य करोतिक्रिययेप्सितत्वात्कर्मत्वं तच्च कटपदोत्तरद्वितीयया विशिष्टस्य प्रधानानतिरिक्ततया प्रधानगतस्य तस्योक्तौ विशिष्टगतं तदभिहितमेवेति भीष्मादिभ्यो द्वितीया न स्यादित्याशङ्क्य भाष्ये विशिष्टकर्मत्वस्य समानविभक्तिकाविशेषणं विना प्रत्यायायितुमशक्यत्वेन भीष्मादीनामपि कर्मत्वशक्तिमत्त्वादु-

---

लक्षणेति भावः। उपात्तमेवेति पार्ष्णिकमानसबोधेनेति भावः। एवंच तद्गीत्यायं दोष इति बोध्यम्। तद्रीत्यैव दोषान्तरं तत्राह किञ्चेति। च्छेद्येति द्रव्येत्यर्थः। कस्य बोधस्य। ननु समासघटकीभूतस्य गुणिपरत्वान्नायं दोषः समासे भिन्नव्युत्पत्तिस्वीकारादत आह तन्निमित्तेति बहुव्रीहिः। उक्तरीत्या नात्र निर्वाह इत्याह दर्शेति। आदिना कुमारीपुरुष इत्यादि। तत्र पुंवत्वं। वृत्तेः स्वीकारात्। अन्यथाषष्ठीसमासेऽपि तत्सम्बन्धिबोधेन वृत्तौ सामानाधिकरण्याविघातेन तदापत्तिरेव तदाहैतच्चेति।

एतेन पुंवत्वानापत्तिरूपद्वितीयदोषेण। तावताप्यनिर्वाहादितिभावः। तत्वात् तत्तमत्त्वात्। तत्रकटेति पाठः तत्रकटेत्यपाठः। असं

क्तत्वेऽपि द्वितीयेत्येकं समाधानं कृतं।

तस्यायं भावः—विशिष्टस्य कर्मत्वे विशेषणस्यापि तत्त्वमन्यथा विशिष्टं कर्मेत्युक्तिव्याघातः। कुण्डली पण्डित इत्यादौ कुण्डलादेः पण्डितत्वप्रमा तु न। शिखी ध्वस्त इत्यादौ विशेष्ये बाधे विशेषणगतस्य तत्रारोपेण प्रतीतिवत् अत्र विशेषणे बाधे विशेष्यगतस्यारोपेणोपपत्तेः। एवंच तदंशे भ्रमत्वं ज्ञानस्य, यत्र त्वबाधस्तत्र नांशेऽपि तत्त्वम्। विशिष्टगतैककर्मत्वप्रतिपादनं च नोभयत्र द्वितीयां विनेति विशेषणादपि सा। प्रत्ययानां प्रकृत्यर्थान्वयित्वमिव विशेषणविशिष्टस्वप्रकृत्यर्थान्वयित्वमपि। अत्र विशेषणपदात्कर्मत्वाद्यनालिङ्गितैव तदुपस्थितिर्विशेष्यस्य तु तद्विशिष्टे प्रतीतेर्विशिष्टस्यैककर्मत्वबोधः। तथा बोधे विशेषणोत्तरद्वितीयापि सहकारिणीत्यत्र सामर्थ्यं नानुपपन्नम्।

ततः 'अथवा कटोऽपि कर्म भीष्मादयोऽपी'त्युक्तम्।

---

स्वद्वत्वात् विशेषणभेदेऽप्याह प्रधानेति। उक्तत्वेऽपि कटपदोत्तरद्वितीयया एवं सत्यतिप्रसङ्गं निराचष्टे कुंडलीति। प्रवृत्तेरिष्टत्वादाह प्रमेति तत्र विशिष्टे प्रमेत्युक्तफलमाहैवंचेति तत्र तदारोपेत्यर्थः अत्र तु कुण्डली सुन्दर इत्यादौ। प्रकृतमाह विशिष्टेति। नन्वेवमपि प्रत्ययानामिति व्युत्पत्तिविरोध एव शुद्धप्रकृत्यर्थान्वयित्वस्य काप्यभावादत आह प्रत्ययानामिति। तत्र व्युत्पत्तिभेदाङ्गीकारादिति भावः।

नन्वेवं बोधद्वयापत्तिरत आहात्रेति एवं सति तद्वैयर्थ्यं परिहरति तथा बोधे इति। इतिर्भावसमासौ। अत्र पक्षे शंकां निराचष्टे त्यत्रेति। इति हेतोरत्र पक्षे परमकारकेण कृतमित्यादौ सामर्थ्यं मि-

तस्यायं भावः-उभयोरपि कर्मत्वात्कटपदोत्तरद्वितीया कटगतकर्मत्वोक्तावपि विशेषणगतकर्मत्वप्रतिपादनाय विशेषणादपि द्वितीया। तत्रोत्पत्तिरपि गुणस्य द्रव्यद्वारैव वाच्या दानादिकर्मता च द्रव्यद्वारैवेति साक्षात्फलाश्रयादेरिव द्रव्यद्वारा फलाश्रयादेरपि कर्मत्वादिकम्। एवंच विशेषणं पृथक्कर्मादिशक्तिवैशिष्ट्येनैव बोधकम्। द्रव्येणाभेदात्तु तस्याः शक्तेर्वाक्यार्थबोधे विशिष्याग्रहः। अत्रापि पक्षे विशेषणविशेष्ययोः परस्परान्वयपूर्वकमेव क्रियान्वयः। न च कारकाणां भावनान्वयनियमहानिः, साक्षात् क्रियाजनकानां साक्षादेव तदन्वयः। इतरद्वारा कारकाणां तु तदन्वयद्वारक एव क्रियान्वय इति नियमेन तदहानेः।

एतेन 'गुणानां च परार्थत्वादसंबन्धः समत्वात्स्या'दिति न्यायविरोधः परस्परान्वये इत्यपास्तम्। उक्तरीत्या समत्वाभावात्। एवमेव युक्तं ज्ञानद्वयकल्पने गौरवात्। अननुभवाच्च।

---

त्यर्थः विशिष्टस्यैव क्रियान्वयादिति भावः।

ननु स्वतः कथं भीष्मादेः करणत्वमत आह तत्रोत्पत्तिरपीति। उक्तवाक्ये कटमित्यादावित्यर्थः। अपिना कर्मत्वं न केवलमत्रैवास्य किंत्वन्यत्रापीत्याह दानादीति। कृष्णां गां दद्यादित्यादौ आदिश्यामाधारपरिग्रहः। एवंच उभयोः कर्मत्वे च। एवे नोक्तव्यवच्छेदः। नन्वेवं शक्तिद्वयबोधापत्तिरत आह द्रव्येणेति एवं तदाशयमुक्त्वा सामर्थ्यमत्राप्यस्तीत्याहात्रापीति अपिना पूर्वः। इतरद्वारेति अत एव कर्तृकर्मद्वारा क्रियाजनकस्याधिकरणस्य तद्द्वारैव क्रियान्वयः। अतएवाक्षप्रवीण इत्यादौ समास इत्युक्तं।

एतेनेत्यस्यार्थमाशङ्केति साक्षात्परंपरारूपेत्यर्थः। ननु शंक-

किंच कारकविभक्तिसाधुत्वाय प्रथमं क्रियान्वयः समासस्य पार्ष्णिकान्वयमादाय साधुत्वम्, उत समासस्यैव प्राथमिकपरस्परान्वयेन साधुत्वं, विभक्तेस्तु पार्ष्णिकेनेत्यत्र विनिगमनाविरहात्। द्वितीयोपपत्त्यर्थमेवैषा कल्पना भाष्यकृतः, सूत्रकृतः प्रकृत्यादिविभागकल्पनावत्, नत्वत्र बोधे विशेषः। कैयटस्याप्यत्रैव तात्पर्यमिति निरूपितं भाष्यप्रदीपोद्योते एवं चात्रापि सामर्थ्याविघातः स्पष्ट एव।

नच तवापि श्वेतं छागमित्यादौ श्वेतच्छागाभावे येन केनचिच्छ्वेतेनापि यागसाङ्गता कुतो नेति वाच्यम्। जातेः शब्देन कथमपि भेदास्पर्शेन द्रव्यात्मकत्वान्न तत्त्यागः। नहि भवति शाबलेयस्य गौरिति। गुणस्य तु पटस्य शुक्ल इति भेदेन प्रतीत्या द्रव्ये सत्येव

---

कोक्तमेव कुतो नात आहैवमेवेति। प्रामाणिकगौरवस्यातत्त्वादाह—नत्विति। तदनुभवसत्त्वादाह किंचेति। भाष्यसंमतमपीदमित्याह द्वितीयोपपत्तीति तावता अवास्तवत्वायाह सूत्रकृत इति। एवञ्चच्छेद्यमेवाह न तत्रेति।

नन्वेवं करोतिक्रियायाः पृथक् सर्वेषां कर्मत्वे प्रत्येकं द्वितीयोत्पत्तिः। पश्चादेकवाक्यतया विशेषणविशेष्यभाव इति कैयटविरोधोऽत आह कैयटेति। करोतिक्रियायां तदर्थोत्पत्तौ पृथक् सर्वेषां साक्षात्परंपरया वोद्देश्यत्वेन कर्मत्वे तत्संज्ञकत्वे द्वितीयोत्पत्तिः। पश्चात् द्वितीयोत्पत्त्यनन्तरमेकवाक्यतया विशेषणविशेष्यभावस्तेनान्वयः इति तदर्थं तु इति भावः। एवञ्च परस्परान्वयपूर्वकमेव क्रियान्वये च। अत्रापि इतिशब्दसमाप्तौ। परमते प्रागुक्तदोषोऽत्रापि पक्षे तदवस्थ इत्याह नच तवापीति। एवं भाष्याशयं वर्णयतः सिद्धान्तिनोऽपीत्यर्थः। अपिना परः। हेतुमाह जातेरित्यादि त्यागादि

गुणापगमेन च विप्रकृष्टत्वेन तस्य त्यागात् । जातेस्त्यागे सर्वथैव साधनभेदात् क्रियान्तरमेव स्यात् । मन्मते तु सादृश्यात् खदिरबुद्धेरनपगम इत्यदोषात् ।

अतएव न ङिसंबुद्ध्योरिति सूत्रे भाष्ये संबुद्ध्य-न्तानां राजवृन्दारकेत्यादौ न समासः । इह तावत्स-मानार्थेन वाक्येन भवितव्यं समासेन च यश्चेहार्थो वाक्येन गम्यते, नासौ जातुचित्समासेन गम्यते । अव-यवसंबोधनं वाक्येन गम्यते समुदायसंबोधनं समासे-नेत्युक्तम् । पृथगवयवार्थयोरभिमुखीकरणे परस्परस्यै-कार्थीभावलक्षणसामर्थ्यायोगादिति कैयटः । संबोधन-विभक्त्यर्थस्यानुवाद्यतया विधेयान्वयित्वेनोभयो-रपि क्रियान्वयित्वेन परस्परान्वयाभावान्नैकार्थीभाव इति तद्भावः ।

तत्र तु नीलमुत्पलमित्यादौ पार्ष्णिकान्वयेन साम-र्थ्यवदत्रापि वक्तुं शक्यत्वेन भाष्याद्यसङ्गतिः स्पष्टैव । तस्मान्मदुक्तरीत्या नीलमुत्पलमित्यादौ प्रत्येकं कर्मत्वे-ऽपि विशिष्टस्यैवेतरान्वयादस्ति सामर्थ्यं, संबोधनस्थले

---

न । युक्त्यन्तरमाह द्रव्ये सत्येवेति । दोषान्तरमाह जातेरिति । किञ्च यत इत्यादिः । नन्वेवं प्रतिनियमोच्छेदापत्तिस्तत्र जातिभेदस्य आह मन्मते त्विति । तथाच साधनभेदे इति तत्र तथा सत्त्वेऽपि प्रकृते वैष-म्यमिति न दोष इति भावः ।

भाष्यस्योक्त एवाशयो न कैयटाद्युक्त इति द्रढयति अतएवेत्या-दिना विभावयंस्त्वित्यन्तेन । अतएव भाष्यस्य तथाशयकत्वाभावादे-व सामान्येनोक्तं विशिष्याहावयवेति । पृथगिति वाक्येनेत्यादि । पर-स्परस्येति अन्वयाभावे इति शेषः । तदाह सम्बोधनेति । तद्भावः भा-ष्यकैयटाशयः । अतएवेति सूचितं विशदयति तत्र त्वित्यादिना । तत्र तु वस्तुगत्युक्तभाष्याद्यपवादिनस्तु । उपसंहरन्नाह तस्मादिति म-

प्रत्येकमभिमुखीभावे एवोभयत्र संबोधनविभक्तिरि-ति न तस्याः विशेषणविभक्तितुल्यत्वमिति न त-त्रान्त्यप्रकारत्रयसंभवः। प्रत्येकं संबोधनविभक्तौ क-दापि विशिष्टसंबोधनाप्रतीतेः। यश्चेहार्थ इत्यादिना भाष्येण स्पष्टमेवास्य वाक्यस्य विशिष्टाबोधकत्वमु-क्तमिहेत्यनेन च अन्यत्र वाक्यस्य समाससमानार्थ-बोधने सामर्थ्यं च दर्शितमिति भाष्यविदो विभाव-यन्तु।

कट एव कर्म तत्सामानाधिकरण्याद्भीष्मादिभ्यो द्वितीयेति तृतीयपक्षे तु तस्य कर्मत्वाभावेऽपि स्ववि-शेष्यगतकर्मत्वेन तत्र द्वितीया। यथेश्वरसुहृदः स्वयं निर्धना अपि तद्धनेनैव धनफलभाजस्तद्वत्तदेकयोगक्षे-मत्वादिति कैयटः।

अयंभावः—सामानाधिकरण्यं नानैकार्थबोधकत्वं यदि भिन्नशक्तित्वं स्यात्तदा शक्तिभेदेनार्थभेदादेका-र्थत्वभङ्गस्तस्माद्विशेष्यसमानशक्तिकत्वं तदभिन्नवि-शेषणानामिति तत्समानविभक्तिकत्वमेव फलाश्रय-त्वादेव। तद्वत्समानाधिकरणत्वमपि तत्तच्छक्तौ नि-

---

म्भवेऽन्वयः स्थले तत्रतु। तस्याः सम्बोधनविभक्तेः।

प्रसङ्गादाह प्रकारेति। अत्र हेतुमाह प्रत्येकमिति। अस्य भाष्यारू-ढत्वमाह यश्चेहेति। विशिष्टेति विशिष्टसम्बोधनेत्यर्थः। (वक्ष्यमाणं गा-दाहेहेत्येति) चस्त्वर्थे। दर्शितं च तस्य विशेषणस्य। कैयटमाह यथे-श्वरेति ईश्वरो राजा। ननु दृष्टान्ते तथा सत्वेऽपि नात्र तथा वक्तुं श-क्यं तस्य फलानाश्रयत्वादत आहायं भाव इति। प्रवृत्तिनिमितस्या-न्यत्र दूषितत्वादा हैकार्थेति। शक्तिः कर्मत्वादिः बहुव्रीहिः। अनतिप्रस-ङ्गायाह तदभिन्नेति। ननु उक्तरीत्यासम्भवोऽत आह फलेति। आदि-ना साधकतमत्वादि। तद्वदिति फलाश्रयत्वविशिष्टसमेत्यर्थः॥

यामकमिति । एवंच पूर्वोत्तरपक्षैकवाक्यतया मध्यमपक्षेऽप्युक्तरीत्यैव बोध उचितः ।

अरुणाधिकरणसिद्धान्तोऽप्येवमेव 'अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्या'दिति जैमिनेः सिद्धान्तसूत्रात् । द्रव्यगुणवाचकशब्दयोरर्थैकत्वे परस्परमभेदान्वयेनैकार्थबोधकत्वे सति ऐककर्म्याद्विशिष्टैकस्यैकक्रियासंबन्धान्नियमः परस्परावच्छेदरूप इति तदर्थात् । लोकसिद्धाया आरुण्यविशिष्टैकहायन्याः क्रियानुवादेन विधानान्न वाक्यभेदः । गुणवचनानां सन्निहितविशेषपरत्वं तद्गतलिङ्गादिग्राहित्वं चेत्येष ह्येतदधिकरणसिद्धान्त इत्यलम् ।

नन्वेवं रीत्या नीलघटमानयेत्यादौ समासे कृते नीलादिपदोत्तरद्वितीयाद्यापत्तिरुक्तरीत्या कर्मत्वसत्वाद् इति चेन्न । जातविभक्तेः सुपो धात्विति लुको-

---

शङ्कोक्तं न युक्तमित्युपसंहरति एवञ्चेति । भाष्योक्तपक्षत्रयोपपत्तौ चेत्यर्थः । एवेन तदुक्तव्यवच्छेदः । स्वोक्ते परसंमतिमप्याहारुणयेति शङ्कोक्तिनिरासायाह सिद्धान्तेति । सूत्रतः स्पष्टं तदप्रतीतेराह द्रव्येति । तत्रास्य लक्षणेति भावः । तत एवास्यार्थमाह परस्परमिति । एवमग्रेऽपि । नन्वेवं वाक्यभेदापत्तिरत आह लोकेति तदंशे विधेरनुपयोग इति भावः । क्रियेति क्रयेत्यर्थः । क्वचित्तथैव पाठः । तस्या वाक्यान्तरेण प्राप्तत्वात् । तस्य परमतात्पर्यमाह गुणीति विशेषेति विशेष्येत्यर्थः ।

एतेनान्यथा सूत्रार्थवर्णनेनान्यथामीमांसकोक्तमत एवं तदधिकरणविरुद्धं च कर्मधारये एकार्थीभावकल्पनादिकं प्राचीनोक्तं चापास्तं तदाहेत्यलमिति ॥

एवं रीत्येति परमकारकेण कृतमित्यत्रोक्तप्रकारेणेत्यर्थः । समासे कृते इत्यत्रान्वयः । स्वरं स्वरमपि । कर्मत्वेति तदादावित्यर्थः । सर्वत्र तेन

ऽक्षतेः। समासादिविशिष्टस्यैवोपस्थित्या विशिष्टोत्तरवि-भक्त्यैव तद्धितस्य तस्योक्तत्वाच्चेत्याहुः।

अभेदान्वये च समानविभक्तिकत्वमेव साधु-त्वमिति सर्वादिसूत्रे भाष्ये स्पष्टम्। नामपदेन च विभ-क्त्यन्तमिति निरूपितं। तद्दधि पश्येत्यादावपि लुप्त-विभक्त्या तत्त्वम्। विभक्तिलोपमजानतस्तद्व्युत्पत्त्य-ज्ञता च। उपदेशात उभयज्ञानमपि सुलभं। राजपुरुष इत्यादौ लुप्तविभक्त्यैव विरुद्धविभक्तित्वम्। विशेषण विभक्तिरभेदार्थेति तु न युक्तं मानाभावाल्लक्षणाया विभक्तावभावाच्च। विशेषणविभक्तिः साधुत्वार्थेत्यपि चिन्त्यमेव तथानुशासनाभावात्। समानविभक्तिक त्वं समानार्थकविभक्तिमत्त्वं, तेन राज्ञः सुतस्य धनमि त्यादौ न दोषः, एकत्र षष्ठ्या जन्यत्वार्थत्वेनापरत्र स्वत्वार्थत्वेन तत्त्वाभावात्।

---

तस्य ग्रहणं। लुकेति एवं च प्रत्ययान्तत्वेनाप्रातिपदिकत्वान्न तदाप-त्तिः। तेन तत्त्वे तदप्रवृत्तावप्याह समेति। आहुरित्यरुचिबीजं तु पर-रीत्येदं नतु सिद्धान्तमतेन तस्य तत्रातत्त्वादेव तदप्राप्तेरिति।

यत्तु नैयायिकादयः भूषणकृदादयश्च विशेषणविभक्तिः साधु-त्वार्था अभेदार्था वा। प्रागुक्तभाष्यीयतृतीयपक्षोऽत्र मूलं अन्यथा त-दसङ्गतिः स्पष्टैवेति तत्खण्डयितुं पररीत्यैवाहाभेदेति। प्रागुक्तपरम-तासाङ्गत्यं स्मारयति नामेति। नन्विदमपि व्यभिचरितमत आह त-द्धीति आदिना तदधितिष्ठतीत्यादि। तत्त्वं समानविभक्तिकत्वमत्वं। न-न्वेवं तत्रास्य बोधानापत्तिरिति चेदिष्टापत्तिरित्याह विभक्तीति। स-मानविभक्तिराहित्यरूपमिति वदतां मते तद्धीत्यादावदोषवत् राजपु-रुषादावप्यदोषं तुल्ययुक्त्यैवाह राजेति। तदेवाह विशेषणेत्यादिना-मान्तेति शास्त्रेत्यर्थः। उक्तव्युत्पत्तौ शब्दसः समानपदग्रहणे समावि-भक्तिकत्वविरहात्वाह समानेति तत्प्रयोगोपपत्तिरस्त्येव।

समानवचनत्वसमानलिङ्गत्वे च नाभेदान्वये तन्त्रे । वेदाः प्रमाणं, गोदौ ग्रामः, तेन तुल्यं क्रिया चेत् , शैत्यं हि यत्सा प्रकृतिर्जलस्येत्यादौ व्यभिचारात् । मुख्यं सामानाधिकरण्यं तु वचनलिङ्गैक्य एवेत्याहुः ।

कर्मधारयविधायके विशेषणं विशेष्येण बहुलमिति सूत्रे विशेषणविशेष्यत्वे विषयताविशेषरूपे निविष्टे नतु परिच्छेद्यत्वपरिच्छेदकत्वे । तथा सति सामान्योपक्रमे उत्पलस्य परिच्छेदकत्वेन विशेषणत्वादुत्पलनीलमित्याद्यापत्तेः । अतएवेतरस्य प्रधानत्वादितरस्य विशेषणत्वादिति प्रधानशब्देन विशेष्यं भाष्ये व्यवहृतं, तत्र विशेष्यभूतेनाप्युत्पलेन नीलस्याश्रयान्तरव्यवच्छेदः क्रियते, यथा राजपुरुष इत्यत्र विशेष्यभूतोऽपि पुरुषो राजानं स्वान्तरेभ्यो व्यवच्छिनत्ति । एतेन परिच्छेदकत्वरूपं भेदकत्वं विषयताविशेषरूपविशेषणतासमनियतमित्यपास्तम् ।

अत्र सामानाधिकरण्यं विशेषणविशेष्यत्वे चार्थयोरेव । सूत्रे तु तत्प्रतिपादकशब्दे लक्षणा विशेषणादिशब्दानां । नचोभाभ्यामेकद्रव्यस्यैवाभिधानाद्भेदाश्रयविशेषणविशेष्यभावानुपपत्तिरिति वाच्यम् । धर्मभेदेन द्रव्यभेदात् । निरुपाधिकं द्रव्यं वाधिष्ठानं चैतन्यरूपन्तयोराश्रय इति सामानाधिकरण्यमप्युपपन्नं वि-

यद्वा निरुद्धार्थैकविभक्तिराहित्यमेव समानविभक्तिकत्वमित्यपि बोध्यम् । नाम्नोरेवेत्येवव्यवच्छेद्यमाह समानेति । तत्रापि विशेषमाह मुख्यमिति । अभ्यर्हितत्वादाह वचनेति । इदमपि सर्वं प्रक्रियाश्रितं न सिद्धान्तभूतमिति प्राक् प्रतिपादितमित्यरुचिराहुरित्यनेन सूचिता । विशेषान्तरमाह तत्रेति जातिशब्दादीनां मध्ये इत्यर्थः । गुणपदेनात्र

शिष्टशक्तिग्रहकाले तदुपलक्षित शुद्धेऽपि शक्तिग्रहः। अतएव कर्मधारयविषये भाष्योक्तं द्वन्द्वापादनं सङ्गच्छते नीलसमानाधिकरणं नीलमुत्पलमिति बोधः। उक्तं च हरिणा।

द्रव्यात्मानस्त्रयस्तस्माद्बुद्धौ नाना व्यवस्थिताः।
आश्रयाश्रयिभावेनेत्ययं पूर्वस्य आगमः। इति॥

यत्तु प्रवृत्तिनिमित्तयोरेकद्रव्यवृत्तित्वं सामानाधिकरण्यम्। विशेष्यविशेषणभावस्तु प्राग्वदेवेति। तन्न विशेषणेन समानाधिकरणेनेति सूत्रविरोधात्।

अन्ये तु शब्दयोरेवैकाविशेष्यभूतार्थप्रतिपादकत्वरूपं सामानाधिकरण्यं, विशेषणविशेष्यत्वमपि तद्रूपार्थप्रतिपादकत्वरूपं तयोरेवेत्याहुः।

तत्र जातिशब्दसंज्ञाशब्दार्थस्य गुणक्रियासमभिव्याहारे विशेष्यतैव स्वभावात्। यद्वा जातिसंज्ञाशब्दघटित वाक्ये कृष्णादयो द्रव्यवचना अपि समासे गुणादिमात्रबोधकाः, तादात्म्येन गुणादिविशिष्टद्रव्यप्रतीतेश्च गुणादयो विशेषणं। स्पष्टं चेदं हरिग्रन्थे। गुणयोः क्रिययोर्गुणक्रिययोश्चानियम एवातो नीलोत्पलमिति व्यवस्थित एव प्रयोगः।

खञ्जकुब्जः कुब्जखञ्ज इत्यादावव्यवस्थित एव। व्याप्यव्यापकभावानापन्नजात्योरनियम एव। यथा भूतमूर्त्तयोः। व्याप्यव्यापकभावापन्नयोस्तु व्यापकस्य विशेष्यतैव तेन शिंशपावृक्ष इत्येव। 'नैतयोरावश्यकः स-

---

जातिसंज्ञाक्रियाभिन्नं धर्ममात्रं। कल्पयुक्त्यैव निर्वाहे स्वभावादरो न युक्त इत्याह यद्वेति। नन्वेवमपि कथं नियमासिद्धिरत आह तादात्म्येने

मावेश' इति भाष्यादेतत्प्रयोगाभाव एवेत्यन्ये। एवंच डित्थसोमयाजीत्याद्यसाध्वेव। क्वचिदन्यदेवेत्यर्थका-द्बहुलग्रहणाद्वा साधु। सर्वं चेदम्भाष्ये स्पष्टमित्यलम्।

अन्यो राजा राजान्तरं मयूरव्यंसकादिसमासस्त-त एव परवल्लिङ्गता भिन्नवाच्यन्तरशब्दस्य नपुंसकत्वा-त्। तदर्थश्च पूर्वपदार्थे विशेषणम्। अत्र पूर्वपदजन्यबोध-प्रकाराश्रयबुद्धिस्थयत्किंचित्प्रतियोगिकत्वं च तदर्थे भेदे व्युत्पत्तिविशेषलभ्यम्। पूर्वकायोऽर्धपिप्पलीत्यादौ कायसम्बन्धी पूर्वो भाग इत्यादिप्रकारेण बोधः। एक-देशिसमासप्रत्याख्यातृभाष्यमते कायादिशब्दानां-तदवयवपरतया कायावयवरूपः पूर्वो भाग इत्यादि-क्रमेण बोधः।

मासो जातस्य मासजातः। अत्र विग्रहे वृत्तौ चोत्त-रपदार्थप्रधानत्वम्। नच विग्रहे तत्त्वे जातात्षष्ठ्यनु-पपत्तिः। विशेषणादेव तद्विधानादिति वाच्यम्। तस्य वृत्त्यर्थबोधकत्वाविवक्षापाताद्यत्यासेऽपि पूर्वजा-तसंस्कारानिवृत्तेरित्यग्रे निरूपयिष्यामः। मासपरि-

---

ति। चस्त्वर्थे अत इत्यस्योभयत्रान्वयः। आदिना पाचकपाठकादि। मतांतरमाह नैतयोरिति एवञ्चान्यथा प्राचामुक्त्यादिकं चिन्त्यमेव तदाहेत्यलमिति।

पूर्वं प्रासङ्गिकमुक्तमतस्तद्विषयमाहान्य इति तद्विहितसमासस्य पूर्वपदार्थप्रधानत्वध्वननायैतावत्पर्यन्तधावनं। घटाय इत्यादौ क्लृप्त-व्युत्पत्त्या निर्वाहादाहात्रेति यत्किञ्चित् ( प्रयाद्यभिन्नराजा )।

एकदेशिसमासस्थले क्रमप्राप्ते आह पूर्वेति। समुदाये दृष्टाः शब्दा इति न्यायेनाह कायादीति।

कालाः परीत्यस्य विषयमाह मास इति। यत्तु प्राञ्चः यद्यपि वा-क्ये समासः प्रधानं तथापि वृत्तौ मासजातो दृश्यतामित्यादौ

च्छेद्यो जात इति बोधः । जातस्य परिच्छेद्यत्वं तु परिच्छेद्यजननाश्रयत्वेन । अस्य जातस्य कियान्काल इति प्रश्ने मासजात इत्यस्यार्थमुत्तरत्वं बोध्यम् ।

नञ्समासे बोधस्तु नञर्थनिर्णये निरूपितः । कर्मधारयान्नञ्तत्पुरुषाच्च न मत्वर्थीयः । मत्वर्थीयान्तेन च न तौ । वृत्तिद्वयकल्पने गौरवेण तत्र बहुव्रीहेरेव साधुत्वात् । क्वचित्तु शिष्टप्रयोगानुरोधेन लाघवानादराद्भवत्येव यथाऽदण्डी अपुच्छी अवारमी एकदेशिन इत्यादि ।

प्रगत आचार्यः प्राचार्यो, निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिरित्यादौ प्रनिरादीनां गतक्रान्ताद्यर्थे वृत्तिः ।

इति तत्पुरुषः ।

---

जातस्यैव दर्शने कर्मत्वप्रतीतेरिति तत्रेति ध्वनयन्नाहात्रेति । कत्येति तद्रूपविग्रहत्वेत्यर्थः । तदर्थो विशेषणविशेष्यभावः । अग्रे बहुव्रीहिप्रकरणे । ननु कालस्य क्रियामात्रपरिच्छेदकत्वेनायुक्तमिदमत आह जातस्येति । नन्वेवं प्रश्नोत्तरभावासङ्गतिरत आहास्येति । न कर्मेत्यनुशासनमिति । नैयायिकाद्युक्तेरसाङ्गत्यायाह कर्मेति । आदिनाअलुब्नञ इत्यादि ।

कुगतीत्यस्य विषयमाह प्रगत इति ॥

इति तत्पुरुषः ।

# अथ बहुव्रीहिः

चित्रगुः चित्रा गावो यस्येति विग्रहः। चित्रगोसम्बन्धीति समासार्थः। यत्संबन्धिन्यश्चित्रा गाव इति विग्रहे बोधः। वृत्तौ विशेष्यविशेषणभावव्यत्यासः। यत्तु बहुव्रीहावन्यपदार्थे उत्तरपदस्य लक्षणा, नच गोपदेनैव गोस्वामिलक्षणायां तत्र चित्रपदार्थानन्वयः एकदेशत्वादिति वाच्यम्। चित्रपदस्य तात्पर्यग्राहकतया गोपदेनैव चित्रगोस्वामिलक्षणान्न दोषः।

एवं प्राप्तोदको ग्राम इत्यादौ उदककर्तृकप्राप्तिकर्मीभूतो लक्ष्यते, प्राप्तपदं तात्पर्यग्राहकम्। प्राप्तिकर्मभिन्नमुदकमिति बोधोत्तरं स्वकर्तृकप्राप्तिकर्मत्वसम्बन्धेन तत्संबन्धिग्रामे लक्षणेति तु न युक्तम्। उदककर्तृकप्राप्तिकर्म ग्राम इति विवक्षितार्थानिर्वाहात्। प्राप्तेति क्तस्य कर्त्रर्थकस्य कर्मणि लक्षणाप्राप्तौ चोदकस्य कर्तृतासम्बन्धेनान्वय इत्यपि न युक्तम्। उदकरूपकर्तुरनुक्तत्वेन ततस्तृतीयायां वैयधिकरण्याद्बहुव्रीह्यनापत्तेः। उदककर्तृकप्राप्तिरिति बोधोत्तरं तत्कर्म ग्रामो लक्ष्यते इत्यपि न युक्तम्। प्रत्ययार्थप्राधान्यस्य नाम्नः सख-

---

अथ बहुव्रीहिः

अथ क्रमप्राप्तं बहुव्रीहिमाह चित्रगुरिति। चित्रगवीसम्बन्धीति पाठः। तत्रादौ दीक्षितादिसकलप्राचां मतमाह यदिति। नव्यनैयायिकमतं खण्डयति यत्त्विति। वक्ष्यमाणाशयेनाहोत्तरेति। तत्र गवि। चित्रेति यत इत्यादिः। चित्रगवीस्वामीति पाठः। षष्ठ्यर्थबहुव्रीहावुक्त्वाऽषष्ठ्यर्थबहुव्रीहावाहैवमिति।

स एव स्वैकदेशिमतानि क्रमेण खण्डयति प्राप्तेत्यादिना। तदिति प्राप्तिकर्मभिन्नोदकेत्यर्थः। उक्तरीत्यैवेति भावः। अतएवाहोदकेति-

प्राधान्यस्य च भङ्गापत्तेः। विशेषणे कर्त्तरि एकदेशत्वेनोदकान्वयासम्भवाच्चेति नव्यन्यायविदः।

तन्न। उत्तरपदे एव लक्षणायां विनिगमकाभावात्। नच प्रत्ययानां संनिहितपूर्वपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिरुत्तरपदे तत्करणे विनिगमिका, राज्ञः पुरुष इत्यादौ षष्ठ्यर्थस्य पुरुषेऽन्वयवारणाय 'पूर्वपदार्थे'ति, वाच्यम्। सर्वक इत्यादौ व्यभिचारात्। दधीयद्ददातीत्यादौ दध्नि वत्वर्थान्वयापत्तेश्च। दधि बहुपटुर्ददातीत्यादौ दध्नि बहुजर्थान्वयापत्तिः। पटावनन्वयापत्तिश्च। किंचैवमन्यपदार्थे वर्त्तमानानेकसुबन्ताभावेन बहुव्रीहेरेवानापत्तिः। अपिचैवं घटादिपदेष्वपि चरमवर्णस्याच्प्रत्ययरूपस्य लक्षणयैवोपपत्तौ विशिष्टशक्तिकथोच्छेदापत्तिः। अवयवतल्लक्षणाद्यजानतामपि बोधात्तत्र सा चेत्प्रकृतेऽपि तुल्यम्। कस्यचिदवयवलक्षणाज्ञानाद्बोधेऽपि न तत्तत्साधुत्वं सूत्रविरोधात्। सूत्रे लाक्षणिकार्थान्वाख्यानस्यादृष्टत्वात्। व्याकरणस्य शक्तिग्राहकत्वभङ्गापत्तेश्च।

---

तदिति उदकप्राप्तीत्यर्थः। उक्तरीत्यैवेति भावः। तमाशयमाह नचेति। पदे तत्रैव। सन्निहितार्थेत्येव तु नोक्तमित्याह राज्ञ इति। सर्वक इति। अत्र पूर्वस्यासुबन्तत्वेनापदत्वं। शक्तस्वरूपपदत्वमपि अकारान्ते न हलन्त इति भावः।

अभ्युपेत्य दोषान्तरमाह दधीति। तृतीयदोषमाह किञ्चेति। यत इति शेषः। एवमग्रेऽपि। एवं तत्पदे लक्षणाङ्गीकारे एवमग्रेऽपि। तस्य निरर्थकत्वात्तदसम्भवनिरासायाह तत्रेति। बोधस्य व्युत्पत्त्यधीनत्वेनानिवार्यत्वादाह कस्यचिदिति तयोर्ज्ञानादित्यर्थः। विरोधमेवाह सूत्रे इति। तदभ्युपगम आह व्याकेति। इति शास्त्रत इति इत्यर्थकविहि

किंचैवं प्रातिपदिकात्कर्मत्वादौ स्वादय इति शास्त्रतः प्रत्यासत्त्या लब्धायाः प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेस्तल्लब्धस्य परस्परं प्रकृतिप्रत्ययार्थान्वये एव तयोः साधुत्वस्य च भङ्गः उत्तरपदमात्रस्याप्रकृतित्वात् । प्रकृतित्वं च प्रत्ययविधानावधित्वम् । तज्जन्यज्ञानविशेष्यत्वं च प्रकृत्यर्थत्वं । एतेन प्राप्तोदको ग्राम इत्यादौ यदुक्तन्तदप्यपास्तम् । किंच स्ववाच्यार्थघटितलक्षणायान्तात्पर्यग्राहकत्वस्य चित्रगुरित्यादौ क्लृप्तस्य भङ्गापत्तिः । व्युत्पत्त्यन्तरस्वीकारे विशिष्टशक्तिरेवोचिता, एवमूढरथादावपि । वि-

---

ष्टशास्त्रत इत्यर्थः । तदिति उक्तशास्त्रेत्यर्थः । तयोः प्रकृतिप्रत्ययोः । नच प्रकृतित्वं न तत्तात्पर्याप्त्यधिकरणत्वं किंतु तदाश्रयत्वमात्रं तच्चावयवमात्रेऽपीति वाच्यं चित्रगुमानय दंडिनं पश्येत्यादौ सति तात्पर्ये विना लक्षणां चित्रगोदंडादावानयनकर्मतान्वयापत्तेः । नच दण्डादीनां पदार्थैकदेशत्वान्न तत्रान्वयः, ऋद्धस्य राज्ञः पुरुष इत्यादौ राजादीनामपि स्वातन्त्र्यस्याबाधात् ।

एतेन संनिहितार्थगतव्युत्पत्तिः सनिधानं चानुशासनिकमित्यप्यपास्तं । नच दण्डिनमित्यादावपि न स्वतंत्रत्वादेवान्वयः नहि पदाव्यवधानमासत्तिः गिरिरग्निमान्भुक्तं देवदत्तेनेत्यर्थे तात्पर्यग्रहवतः पुंसो गिरिर्भुक्तमग्निमान्देवदत्तेनेत्यतो वाक्याद्बोधानापत्तेः । किंतु पदजन्यपदार्थोपस्थितिमात्रं सा च समूहालम्बनादिरूपास्त्येव अत एव भजे सरोरुहसदृशं भगवतश्चरणारविंदमित्यादितः शाब्दबोधः संगच्छते ।

एतेन प्रत्ययाव्यवहितप्राग्वर्तिपदजन्योपस्थितिविशेष्यत्वं प्रकृत्यर्थत्वं तच्च द्वंद्वादौउभयोरव्ययीभावादौ पूर्वपदार्थस्यैव अव्यवधानांशनिवेशाद्दण्डिनमित्यत्र प्राग्वर्तिदंडपदजन्यबोधविशेष्यदंडेनातिप्रसङ्ग इति परास्तं । बहुपटुः सर्वक इत्यादावव्याप्तेः । दधीयद्दातीत्यादौ दध्नि वत्वर्थान्वयापत्तेश्च तदेतदभिप्रेत्याह प्रकृतित्वं चे-

शिष्टशक्तिवादिनान्तु न कश्चिद् व्युत्पत्तिविरोधः। सर्वव्युत्पत्तीनां भिन्नोपस्थितिजनकशब्दाविषयत्वात्। तत्र विशेष्यविशेषणभाववैपरीत्यान्तर्भावेणैव संसर्गेऽन्यपदार्थे च शक्तिकल्पना चित्रगुरित्यादौ स्वस्वामिभावादिसम्बन्धेन चित्रगोविशिष्टः समासार्थस्तत्राश्रयः स्वस्वामिभावादिः सम्बन्धश्चेत्युभयं समासार्थः।

यद्वा संसर्गरूपो विभक्त्यर्थ एव बहुव्रीहिशाक्यः। नच विभक्त्यर्थस्यासत्वरूपतया लिङ्गसंख्याकार्यानुपपत्तिरिति वाच्यं। गुणवचनवत् यत् द्रव्याश्रितोऽसौ संबन्धस्तल्लिङ्गसंख्याभ्यान्तस्य योगाङ्गीकारात्। एवं च समासेनाभिधीयमानः संबन्धः संबन्धितादात्म्येनैवाभिधीयते, तत्र द्विष्ठत्वेऽपि सम्बन्धस्य संबन्ध्यन्तरस्य विशेषणतया शब्देनैवोपात्तत्वात् प्राधान्याच्च स्वामिन एवाश्रयत्वं व्यवस्थाप्यते इति तद्गतलिङ्गसंख्ये भवतः, संबन्धसंबन्धिनोः स्वरूपातिरिक्तसंबन्धाभावेन संबन्धितादात्म्ये एव पर्यवसानं बोध्यम्। शब्दश-

---

ति। सिद्धांते तु न कोप इत्याह विशिष्टेति। इदमुपपादयन् प्रागुक्तरीत्या प्रागुक्तं विशदयति तत्रेति। विशिष्टशक्तिवादिमते इत्यर्थः वृत्तावितिभावः। इदमपिपर्यवसितमित्याह चित्रगुरिति। तत्रविशिष्टमध्ये, आश्रयः संबन्धानुयोगी। कारकप्रकरणोक्तरीत्येदं लाघवादेकरूपत्वात्तथैव लाभाच्चाह—

यद्वेति। एवेनाश्रयव्यवच्छेदः। ननु सम्बन्धस्योभयाश्रितत्वेन वर्त्तिपदार्थगतलिंगकार्यादेरप्यापत्तिरत आह तत्रेति तथासतीत्यर्थः। सम्बध्यंतरस्य गवादेः शब्दशक्त्या आह व्यवेति। नन्वेवं कथं तादात्म्यलाभोऽत आह सम्बन्धेति। नन्वेवमपि भेदविवक्षायां दोष

क्तिस्वभावाच्च पदस्य शुक्ल इत्यत्रेव न भेदेनात्र विवक्षा, वाक्ये तु भेदेनैव विवक्षेत्यन्यत्। पक्षद्वयमपीदं भाष्ये स्पष्टमिति बहवः।

परे तु एवं सति प्राप्तादिपदेऽपि विशेषणविशेष्यभावव्यत्यासकल्पने गौरवं बहुव्रीह्युपजीव्यस्यैकधर्मिबोधकत्वरूपसामानाधिकरण्यस्य भङ्गश्च। प्राप्तभार्य इत्यादौ पूर्वोत्तरपदयोरेकविशेष्यकप्रतीतिजनकत्वरूपसामानाधिकरण्याभावात्पुंवद्भावानापत्तिश्च। किंचालौकिकविग्रह एकार्थीभावरूपसामर्थ्यकल्पनया तत्र तन्मूलके विशेषणत्वव्यत्यासे पदयोः सामानाधिकरण्याभावेन समासशास्त्राप्राप्तिः। स्वशक्यार्थघटितैकार्थीभावस्य चित्रग्वादौ क्लृप्तस्य भङ्गश्च।

तस्मात्प्राप्तिकर्तृदककर्मेत्यादिप्रकारेण बोधः। उदके तन्निरूपकत्वभावेन तु विशेषणभूतप्राप्तौ तत्पर्यवसानम्। स्वर्गी ध्वस्त इतिवत्। अतएव विशेष्यविशेषणभावव्यत्यासस्यैकार्थीभावकृतविशेषेऽनुक्तिर्भाष्ये। विभक्त्यर्थस्य प्राधान्येऽपि धर्मिबोधकत्वमुक्तरीत्यैव।

---

यवेत्यत आह शब्देति चस्त्वर्थे। नन्वेवं वाक्येऽपि षष्ठ्याद्यनापत्तिरत आह वाक्ये त्विति। बहवः दीक्षितभूषणकृदादयः।

एवं दूषयन् सिद्धान्तमाह परेत्वित्यादिना आहुरित्यन्तेन। एवं सति तद्वैपरीत्यांतर्भावे सति। विवक्षितार्थनिर्वाहायाह प्राप्तादीति तदभ्युपगमे आह बह्विति। तत्र तस्यैव निमित्तत्वादाहैकेति। वृत्तौ वृत्तेः प्राक् च सामानाधिकरण्ये एव तत्प्रवृत्तेरिति भावः। सिद्धान्तमाह तस्मादिति। तद कर्म। तत् तन्निरूपकत्वं। इदमेव भाष्यसंमतमित्याहातएवेति ईदृशबोधांगीकारादेवेत्यर्थः। प्रागुक्तपक्षद्वय-

यत्तु मीमांसकाः। बहुव्रीहौ चित्राणां गवामय-मिति विग्रह उचितो नतु चित्रा गावोऽस्येति। वृत्ति-विग्रहयोर्भिन्नार्थत्वस्यानौचित्यात् प्राप्तोदक इत्यादेर-पि प्राप्तस्योदकस्यायमिति विग्रहः। प्राप्तोदकसम्बन्धी-ति बोधः। सम्बन्धश्च स्वकर्तृकप्राप्तिकर्मत्वादिरिति।

तन्न। एवं विधविग्रहस्य मत्वर्थे बहुव्रीहिः, कर्तृ-कर्मवचनेनाप्रथमायाः, अप्रथमाविभक्त्यर्थे बहुव्रीहिः, शेषो बहुव्रीहि, त्रिकतः शेष इत्यादिमुनित्रयवचनविरुद्ध-त्वात्। नचालौकिके प्रथमान्तानामेव प्रवेशेन न तद्वि-रोध इति वाच्यम्। अलौकिके प्रविष्टानामेव पक्षा-न्तरे समासाभावे परिनिष्ठितानां तदर्थबोधनाय प्र-योगसंभवे उपस्थितपरित्यागेनानुपस्थितपदघटितलौ-किकविग्रहवाक्यकल्पनाया अनौचित्यात्।

किंच न केवलमर्थबोधनायैव तद्वाक्यप्रयोगः। किंतु समासादेर्वैकल्पिकत्वप्रदर्शनायापि तद्दर्शकं चो-क्तरीत्या चित्रा गावो यस्येत्याद्येव न त्वदीयमतएवा-विग्रहो नित्यसमास इति वृद्धाः। अन्यथा कुम्भकार इत्येतत्समानार्थकस्य कुम्भस्य कर्त्तेत्यस्य संभवेन तस्य नित्यसमासत्वं भज्येत। कर्तृपदस्य न समा-

---

मध्येऽपि द्वितीयपक्ष एव युक्त इत्याह विभक्त्यर्थेति। इत्यादि विग्रह इति पाठः।

मत्वर्थे इति वार्त्तिकं। षष्ठ्यर्थः सप्तम्यर्थश्च मत्वर्थः। वार्त्तिका-न्तरमाह कर्तृकर्मेति। अप्रथमाया इत्यस्य व्याख्या अप्रथमेति। सूत्र-माह शेष इति। भाष्यमाह त्रिकत इति। आदिग्रहणं चिन्त्यं। अनौ-चित्यादिति चित्रा अस् गो अस् इत्यादिस्थितौ विभाषा समाससंज्ञा-यां यदा सा जाता तदा प्रातिपदिकत्वे विभक्तिलुक्। यदा तु सा न

समासघटकतेति चेदलौकिकसमासवृत्त्या चित्राणामित्यादेरपि तदघटकत्वं तुल्यम्।

नच चित्रा गावो यस्येत्यपि विग्रहोऽस्तु तद्वैकल्पिकत्वबोधकः। अर्थनिर्णयार्थं तु मदुक्तोऽपि समासघटकपदघटितवाक्यासंभव एव नित्यसमासत्वमिति न बहुव्रीहेस्तत्त्वमिति वाच्यम्। फलद्वयार्थं युगपद्वाक्यद्वयप्रयोगापत्तेः। किंच समसनमेकीभाव इत्यर्थकसमासे पदप्रतिद्वन्द्विविग्रहपदस्य समासघटकपदानां विभिन्नत्वेन ग्रह इत्यर्थकस्य त्वदुक्ते प्रयोगासंभवात्। अनेन हि वृत्तिघटकपदानां भेदेन स्वरूपज्ञापकस्य विग्रहत्वं लभ्यते। नच त्वदुक्ते तदस्तीत्यलम्।

वृत्त्यर्थप्रदर्शनार्थं कल्पिते चित्रा गावो यस्येत्यादावपि विशेष्यविशेषणभावव्यत्यासाच्चित्रगोसम्बन्धीत्येव बोधः। व्यत्यासबोधनायैव चित्रा गावो यस्य स चित्रगुरिति प्रदर्श्यते वृद्धैः। सर्वनामसंज्ञासूत्रभा-

---

तदातस्याः तदेति(?)एतेन षष्ठीतत्पुरुषादावपि राज्ञा चासौ पुरुष इति विगृह्णन्तः परास्ताः। वैकल्पिकेति तन्मात्रेत्यर्थः। अतएवाहार्थेति। अन्यथा विग्रहाच्छक्तिनिर्णयो न स्यात् इति भावः।

ननु समस्यमानपदे विवरणाभावाद्बहुव्रीहेर्नित्यसमासत्वापत्तिरत आह समासेति। फलेति समासार्थबोधनार्थं तद्वैकल्पिकत्वबोधनार्थं चेत्यर्थः। न तथा प्रयुञ्जते सचेतस इति भावः। अनेन तत्प्रतिद्वन्द्विनातेन। किंच सूत्रकृता दीव्यतिखनतीत्यादिशब्दैः प्रत्ययार्थविवरणाद्यथाऽक्षकरणकभावनाश्रय इत्यर्थकाक्षिक इत्यस्याक्षनिष्ठव्यापारजन्यभावनेत्यर्थकाक्षैर्दीव्यतीत्येतद्विशेषणविशेष्यभावांशे समानार्थत्वविरहेऽपि विवरणं शक्तिनिर्णायकं च। तथा प्रकृतेऽपि स्यादिति क्लिष्टकल्पनाश्रयणं व्यर्थमेव तदाहेत्यलमिति।

सकलप्राचां ग्रन्थासांगत्याय सिद्धांतमाह वृत्त्यर्थेत्यादिना कृ-

ष्येऽपि सर्वं आदिर्येषां तानीति विग्रहो दर्शितः। स-र्वनाम्नामुत्सर्गतःप्रधानपरामर्शित्वात्स चित्रगुरित्यनेन स्वामिप्राधान्यं प्रदर्श्यत इति कैयटः।

अत एव मासजात इत्यादेर्मासो जातस्य यस्य स इति विग्रहं प्रदर्शयन्ति। चित्रा गावो यस्य स चित्रगुरिति वाक्ये चित्रगुपदं तत्पदबोध्यपरं चि-त्रगोसम्बन्धी यो भवति स चित्रगुपदबोध्य इति बोधः। पचतीति पाचक इत्यादेः पाचकपदं प-चतीत्येतत्समानार्थमिति बोधः। पचति पाकं करोतीत्यतोऽपि पचतिपदमेककर्तृकपाकक्रियाबोधक-मिति बोधः। एवमन्यत्रापि। एवं च वृत्तिविग्रहयोः समानार्थता स्पष्टैव। विग्रहश्च वृत्त्यर्थवृत्तित्वैकलिपकत्व-वृत्तिघटकपदस्वरूपबोधनोद्देशेन प्रवृत्तं वाक्यम्। ते-न लोके स्वातन्त्र्येणार्थबोधार्थं प्रयुक्ते यथास्थित एव विशेष्यविशेषणभावः। तदुक्तं हरिणा।

क्व चिद्गुणप्रधानत्वमर्थानामाविवक्षितम्
इत्युपक्रम्य
आख्यातं तद्धितार्थस्य यत्किंचिदुपदर्शकम्।
गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः

---

लिपते वाक्ये चित्रगवीसम्बन्धीति पाठः। एवमग्रेऽपि व्यत्यासेति तदित्यादिः। अतएव तत्र तथाबोधादेव। तदुपपादयति चित्रा गा-व इति लक्षणया आह परमिति। तथैवाह पदमिति। अतो विवरण-वाक्यघटितादपि। वृत्त्यर्थेति वृत्त्यर्थश्च वृत्तिवैकल्पिकत्वं च वृ-त्तिघटकपदस्वरूपं च एतत्त्रितयबोधनोद्देशेनेत्यर्थः। अतएव परो-क्षस्य कुंभं करोति कुंभस्य कर्तेत्यादेर्न विग्रहत्वं। तेन तत्रैव तत्कल्प-नेन। तदुक्तमिति तदेतदभिप्रेत्योपक्रमेत्युक्तं तेनेत्यर्थः। दीव्यती-

इति। दीव्यतीत्याद्यर्थविहिततद्धितानां साधनप्रधानत्वेन सूत्रस्थे दीव्यतीत्यादौ विग्रहवाक्यस्थे च गुणप्रधानभावो विपरीतो दृष्टोऽन्यथावृत्तिविग्रहयोः समानार्थत्वं भज्येतेति तदर्थः।

यत्तु तत्र तद्धिते विपर्ययो दृष्ट इत्यर्थवर्णनं भावप्रधानम्, अतिङन्तार्थविहितस्यापि सत्त्वप्रधानतेत्याशय इति।

तन्न अक्षरस्वारस्यानुगुणं, यत्पदपरामृष्टस्य प्रधानस्यैव तच्छब्देन परामर्शात्। एकत्राधिकरणे पूर्वदृष्टगुणत्यागपूर्वकं गुणान्तराङ्गीकारस्यैव विपर्ययपदार्थत्वाच्च। अतएवैतद्व्याख्यायां तेन दीव्यतीत्यादौ निर्देशे गुणप्रधानभावो न विवक्षित इत्याह पुञ्जराजः।

अनेन तुल्यन्यायात्सर्वत्र वृत्त्यर्थप्रदर्शनाय प्रवृत्ते वाक्ये वृत्तिवाक्ययोः समानार्थत्वाय विशेषणत्वादिव्यत्यास इति सूचितम्। तथाच तद्वहतीति सूत्रे भाष्यं 'वहत्यर्थे रथादिभ्यः प्रत्ययविधिरनर्थकस्तस्येदमिति विहितत्वादि'त्युक्त्वा वहतीत्यस्य क्रियाप्रधानत्वेन वोढेत्यस्य सत्त्वप्रधानत्वेन 'शब्दभेदान्न प्राप्नोत्यन्यः शब्दो रथं वहति अन्यो रथस्य वोढे'तीत्याशङ्क्य 'र्थसामान्यात्सिद्धं य एवार्थो रथं वहति स एवार्थो रथस्य वोढे'तीति तद्वैयर्थ्यं दृढं कृत्वा द्विरभ्य इत्यादौ यतो लुगभावार्थं तदिति सिद्धान्तितम्।

---

त्वस्य मध्यमणिन्यायेनान्वयः।

प्राचोक्तं खण्डयति यत्त्विति। तत्रेत्यस्यार्थस्तद्धित इति। अतएव तदर्थाभावादेव। निर्देशे सौत्रे; अनेन तत्र तथा वदता पुंजराजेन। अत्र भाष्यसंमतिमप्याह तथाचेति। आदिना युगादि। तदस्या

'य एवार्थ' इत्यादेः रथ्य इत्यस्य विग्रहभूते रथं वहतीत्यत्र योऽर्थः स एव तद्विग्रहभूते रथस्य वोढेत्यत्रेत्यर्थः। एवंच तद्व्यत्यासस्तत्रैव स्पष्टमुक्तः। एवंच वृत्तिविग्रहयोर्विषयतापि समाना।

अतएव समर्थ सूत्रे भाष्ये महत्कष्टं श्रित इति विग्रहे कष्टश्रितयोः समासः कुतो नेत्याशङ्क्य इह समानार्थेन वाक्येन भवितव्यं यश्चेहार्थो वाक्येन गम्यते महत्कष्टं श्रित इति न जातुचित्समासेनासौ गम्यते इत्युक्तम्।

तत्र पदार्थानां वाक्ये समासे च प्रतीतिस्तुल्यैव तथापि महत्कष्टं श्रित इति वाक्ये कष्टपदार्थो विशेषणत्वानाक्रान्तस्वनिष्ठविशेष्यतया बुध्यते। समासे तु श्रितनिरूपितविशेषणत्वाक्रान्ततयैवेति न महत्पदार्थस्य तत्र विशेषणत्वम्। एवंच विषयताविशेषस्य वाक्ये भासमानस्य समासे न कथमपि भानमिति तदर्थः। एतदेवाभिप्रेत्य कैयटः। यः कष्टं श्रितः स महत्कर्म करोति इत्यादि प्रतीयेत न तु महतः कष्टविशेषणत्वमिति। एवंचालौकिक इव वृत्तिविग्रहभूते लौकिके एकार्थीभावारोप एतद्भाष्येण बो-

---

विग्रहणं। असार्वत्रिकत्वादाह य एवेति तत्रेत्यादिः। क्वचित्तथा पाठ एव तदेवाहैवंचेति। विशेष्यविशेषणव्यत्यासो विग्रहवाक्यस्य सौत्रोक्तेत्येत्यर्थः। एवेन स्वातन्त्र्यव्यवच्छेदः, एवंच तत्र तद्व्यत्यासे च।

भाष्य[illegible]एवेति। तस्याः समानत्वादेवेत्यर्थः। महदिति भिन्नं पदं। जातुचित् कदाचित्। तदर्थमाह तत्रेति उक्तविषय इत्यर्थः। आक्रान्तत्वादि च तद्वैशिष्ट्यादि। तत्र कष्टपदार्थे य इति

श्रित इत्यपि केचित् ।

युक्तं चैतत् । अन्यथा कष्टं श्रित इत्यस्यापि विग्रहत्वं न स्यात् तद्वदेव विषयताभेदात् । विशेषणसमभिव्याहारे तु तत्संबन्धानुपपत्त्या न श्रितादिरूपप्रधाननिरूपितविशेषणत्वोपस्थितिस्तदसमभिव्याहारे तु तथैवोपस्थितिः । एवं सर्वत्र द्रष्टव्यम् । समासतद्घटकपदमात्रघटितविग्रहयोः समानार्थत्वे एतद्भाष्यतात्पर्यम् ।

अतएव कालाः परिमाणिनेति सूत्रे किंप्रधानोऽयं समास, उत्तरपदार्थप्रधान इत्युक्तं, नायं प्रश्नः समासमात्रविषय उचितः, तत्पुरुषस्योत्तरपदार्थप्रधानताया अव्ययं विभक्तीत्यादिसूत्रेषु भाष्ये उक्तत्वेन मासजातो द्व्यहजातमित्यादौ जातस्यैव कार्यसम्बन्धदर्शनात्प्राधान्यनिश्चयेन च तन्मात्रविषयप्रश्नानुपपत्तेः ।

तस्माद्वृत्तिविग्रहयोः समानार्थत्वनिर्वाहमपश्यतो विग्रहसमासोभयविषयः प्रश्न उत्तरं चेति भाति । समासपदं च समासविग्रहोभयपरम् । नच विग्रहेऽपि जातस्य प्राधान्ये जातस्य मास इति षष्ठ्यनुपपत्तिः विशेषणादेव षष्ठीविधानादिति वाच्यम् । वृत्तिविग्रहयोः समानार्थत्वानुरोधेन तस्य वाक्यस्य वृ-

---

तत्र समासे सतीति भावः । प्राग्वदाह वृत्तीति । तत्समर्थयते युक्तमिति । अन्यथा तत्साम्यानंगीकारे । तत्-महदित्यादि । नन्वेवं कथमुक्तातिप्रसंगनिरासोऽत आह विशेषणेति । फलितमाह समासेति मात्रपदेनान्यव्यवच्छेदः ।

भाष्यांतरमाहात एवेति । तयोस्तत्वादेवेत्यर्थः । मात्रपदेन विग्रहव्यवच्छेदः । विशेषसाधकमाह मासेति । नन्वेवं कथं समास इत्यु-

त्यर्थबोधकत्वरूपविग्रहत्वविवक्षायां विशेषणविशे-
ष्यभाववैपरीत्येऽपि पूर्वजातसंस्कारानिवृत्तेः ।

एवंच विग्रहे तदुत्तरषष्ठ्येव मासविशेषणक-
सम्बन्धप्रतीतिवत्समासेऽपि विशिष्टोत्तरषष्ठ्या तत्प्र-
तीतिसंभव इत्याशयेन यथैवमन्येषूत्तरपदार्थप्रधानेषु
यैवासावुत्तरपदे प्रधानेऽन्तर्वर्तिनी विभक्तिस्तस्याः स-
मासे श्रवणं भवति, यथा राज्ञः पुरुषो राजपुरुष इति ।
इह पुनर्वाक्ये षष्ठीसमासे प्रथमा केनैतदेवं भवति
इत्याशङ्क्य योऽसौ मासजातयोरभिसंबन्धः स समा-
से निवर्त्तते। अभिहितः सोऽर्थो न्तर्भूतः प्रातिपदिका-
र्थःसंपन्न इति प्रातिपदिकार्थे प्रथमेति अन्यथा वि-
शेषणविभक्तेः षष्ठ्याः प्रधानबोधकसमासादापत्त्य-
सङ्गतेः ।

कैयटोऽपि वृत्तिविग्रहयोः समानार्थत्वं न्याय्यम्
अत्र तु वाक्ये जातो विशेषणं समासे तु मासजातो
दृश्यतामित्यादौ जातस्यैव कार्यसम्बन्धावगमात्प्रा-
धान्यमन्योत्तरपदार्थप्रधानवैधर्म्यं च लक्ष्यते इति म-
त्वा पृच्छतीति प्रश्नद्वयाशयं वदन्नुत्तरेण तयोः स-
मानार्थत्वमभिप्रैति । तत्र सम्बन्धस्य समासे निवृ-

---

त्तिरत आह समासेति ॥ एवंच उक्तरीत्या पूर्वजातसंस्कारानिवृत्तौ-
च । तद्विति जातपदेत्यर्थः । येनेत्यस्याशंकायामन्वयः । एवं उत्तर-
पदार्थप्रधानत्वे । पुनस्तु । मेतीत्यस्याग्रे उक्तमिति शेषः । अन्यथा उक्त-
रीत्या तस्य तत्र प्राधान्याभावे । प्राधान्यामित्यन्तेन किंप्रधानोऽयमि-
तिपूर्वप्रश्नाशयः । अग्रिमेण केनैतदेवमिति द्वितीयप्रश्नाशयः ।

ननु तत्रापि सम्बन्धभानसत्वेन कथं तन्निवृत्तिरत उत्तराशयमाह
तत्रेति उत्तरे इत्यर्थः । यत इति शेषेणानुषंगेण चासम्बद्धत्वं निराचष्टे

त्तिः। षष्ठ्यर्थनिमित्तत्वेन तत्र हेतुः अभिहितः समासेनात एवान्तर्भूतः। सम्बन्धिविषयकोपस्थितिविषयत्वमन्तर्भावः।

अत एव प्रातिपदिकार्थः संपन्न इति प्रथमोत्पत्तिनिमित्तकथनं षष्ठ्यभावनिमित्तकथनं च। कारकप्रातिपदिकार्थव्यतिरिक्तस्य शेषत्वात्। नच मासस्य जात इत्येव विग्रहोऽस्तु एवं च वृत्तिवाक्ययोः समानार्थतापि भवति षष्ठीप्रसक्तिश्च न। षष्ठीतिसूत्रेण सिद्धे कालाः परिमाणिनेत्येतत्तु कालाः परिमाणिना समस्यन्ते, नतु परिमाणं कालेनेत्यर्थेन जातमास इत्येतन्निवृत्त्यर्थमिति वाच्यम्। एतद्भाष्यप्रामाण्येन परिच्छेद्यपरिच्छेदकसमभिव्याहारे परिच्छेद्यादेव षष्ठीस्वीकारेण तथा विग्रहासंभवात्। एवमवयवावयविसमभिव्याहारेऽवयवत्वादिसम्बन्धेऽवयविवाचकादेव षष्ठीति बोध्यम्।

तन्तूनां पट इत्यादौ तु जन्यजनकभावसम्बन्धे षष्ठी विशेषणत्वादिव्यत्यासे च शब्दस्वभाव एव बीजम्। यत्त्वेकार्थीभावबलाद् वृत्तौ विशेषणत्वादिव्य-

---

तत्र हेतुरिति। अपौनरुक्त्यायाह सम्बन्धीति। अस्य फलमाह प्रथेति उक्तभाष्यशङ्काया असङ्गतिमाशङ्कते नचेति। एवेनोक्तव्यवच्छेदः। नन्वेवं षष्ठीतिसिद्धसूत्रवैयर्थ्यमत आह षष्ठीति। नियमार्थमितिभावः। अन्यथोपपत्तेरभावादाहैतदिति। द्वितीयशङ्कादिपरेत्यर्थः। प्रसङ्गादाहैवमिति वृक्षे शाखेत्यादौ तदभावायाहावयवत्वादीति। नन्वेवं लक्ष्यविरोधोऽत आह तंतूनामिति नियमार्थमिति भावः। अन्यथोपपत्तेरभावादाहैतदिति द्वितीयशङ्कादिपरेत्यर्थः। प्रसङ्गादाहैवमिति वृक्षे शाखेत्यादौ तदभावायाहावयवत्वादीति। नन्वेवं लक्ष्यविरोधोऽत आह तन्तूनामिति।

त्यास इति तन्न । एकार्थीभावफलेषु भाष्येऽस्याग्रहणात् । वृत्तिविग्रहयोः समानार्थत्वभङ्गापत्तेश्च । एवमेव बहुव्रीहिवाक्येऽपि षष्ठीस्थितिर्बहुव्रीहौ प्रथमादीत्यपि बोध्यमित्यत्र विस्तर इत्याहुः ।

बहुव्रीहिर्द्विधा तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानश्च । लम्बकर्णमानयेत्यादावाद्यः । तस्यान्यपदार्थस्य गुणानां विशेषणानां कार्यान्वयितया संविज्ञानं यत्रेत्यर्थात् । चित्रगुमानयेत्यादावन्त्यः । विधेयानन्वयित्वघटकावयवार्थकत्वं च तत्त्वम् । लम्बकर्णं भोजयेत्यादावप्ययमेव । यदि विधेयान्वयित्वमिव विधेयक्रियाकाले संनिहितत्वमपि तद्गुणसंविज्ञानत्वमित्युच्यते तदा लम्बकर्णं भोजयेत्यादावप्याद्य एव । संयोगसमवायान्यतरसम्बन्धेन सम्बन्धी यत्रान्यपदार्थ-

भूषणकाराद्युक्तिं खण्डयति एवमेव मासजातवदेव । एवं वृत्तिविग्रहयोः समानार्थत्वाय मीमांसकानां दुरभिनिवेशोऽयुक्त एव समासार्थबोधरूपस्य विग्रहप्रदर्शनफलस्य तेषां सिद्धावपि समस्यमानपदस्वरूपबोधनरूपतत्फलस्यासिद्धिर्मम तु सर्वेष्टसिद्धिस्तदाहान्यत्रेति गुरुमञ्जूषादावित्यर्थः ।

तं विभजते बहुिति ॥ तत्र योग्यार्थमाह तस्येति विशेषणेति । वर्तिपदार्थरूपाणामित्यर्थः । कौस्तुभादिरीत्येदं । कर्मणि ल्युटा तद्गुणानां संविज्ञानं यत्रेति तत्वं । अयमेव अंत्य एव । यदीति । तथाच न प्रागुक्तं लक्षणं, किंतु विधेयक्रियान्वयितत्संनिहितान्यतरत्वघटकावयवार्थक आद्यस्तद्भिन्नोऽन्त्य इति । तथाच कार्यित्वतत्संनिहितत्वान्यतरधर्मेणेति फलितं । एवं योगार्थमुक्त्वा कैयटाद्युक्तं पारिभाषिकं तल्लक्षणमाह संयोगेति । दण्डी विषाणी चानीयतामिति लक्ष्ये अस्यापि दण्डी विषाणी च भोज्यतामित्यादौ व्यभिचारादाह प्राय इति तथाचौत्सर्गिकोऽयं नियम इति भावः । एवंच सामान्यतस्तदुक्तं चिन्त्यमेव । इदंच भेदद्वयमनेकेति विहितबहुव्रीहेः । अधिकंभावप्रकाशे

स्तत्र तद्गुणत्वं प्रायोऽन्यत्रान्य इत्यलम् ।

बहुव्रीहौ विशिष्टशक्तिस्वीकारादेवारुणाधिकरणमुपपद्यते । तत्र ह्यरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीति वाक्ये ज्योतिष्टोमप्रकरणपठिते किमरुणिमा वाक्याद्भित्वा प्रकरणे सर्वद्रव्येषु निविशते उत क्रीणातिना सम्बध्य तदङ्गमेकहायन्यां निविशत इति संशयः ।

तत्र गुणस्यामूर्त्तत्वात्क्रयरूपक्रियासाधनत्वासंभवेन पृथग्भूतोऽविशेषात्प्राकरणिकद्रव्यमात्रे निविशते । अरुणादिशब्दाश्च गुणवचना एव । ननु तदाक्षिप्तद्रव्यस्य क्रयसाधनत्वसंभवोऽन्यथा प्रकरणेऽपि निवेशो न स्यात् । अमूर्त्तत्वात्क्रियाभिः, कारकत्वाच्च द्रव्यैः सम्बन्धासंभवादितिचेन्न । श्रौतैकहायन्यवरोधेन क्रये तदन्वयासंभवात् । नच सत्यपि बलाबले

व्यक्तं तदाहेत्यलमिति ।

कल्पतरुकृता तु तस्यान्यपदार्थस्य गुणत्वेन विशेषणत्वेन संविज्ञानं यत्रेत्यक्षरार्थः । अत्र सर्वस्य तस्य विशेषणत्वे समासासम्भवात्तदेकदेशो विशेषणमिति लभ्यते इति जन्मादिसूत्रे उक्तं ।

स्वोक्ते परसम्मतिमप्याह बहीति तत्र हीत्यस्य संशयाद्यावन्वयः । अंगमिति क्रियाविशेषणं । तत्र तयोर्मध्ये पूर्वपक्षेऽन्वयोऽस्य । मात्रं कात्स्न्र्ये । आकृत्यधिकरणन्यायेनाहारुणादीति । नच गुणस्य स्वाश्रयवृत्तित्वरूपपरंपरया करणत्वेनान्वयः । नामार्थविभक्त्यर्थयोः साक्षात्सम्बन्धेनैवान्वयस्य क्लृप्तत्वात् । अन्यथा गङ्गायां घोष इत्यादावपि लक्षणानापत्तिः ।

असम्भवादिति नच करणतृतीयया करणद्रव्याणि प्राकरणिकान्यनूद्य गुणविधिरस्तु । विभक्तीनां निष्कृष्टशक्तिमात्राभिधायकत्वमिति मीमांसकसिद्धान्तात् सुप्विभक्तौ लक्षणाभावाच्च । तस्मात्प्रकरणे निवेशवादिनाप्यरुणपदाल्लक्षणया आक्षेपेण वोपस्थितैनि

द्रव्यस्य वस्तुत एकत्वेन विरोधाभावादयुक्तमेतत्। अन्तरङ्गबहिरङ्गभावेन क्रयेणान्वये द्रव्यैक्यस्यैवाभावात्। एवंचाविशेषादरुणापदलक्षितन्तदर्थाक्षिप्तं वा द्रव्यं प्राकरणिकं सर्वमेवेति पूर्वपक्षः।

सोऽयुक्तः स्यात्। एकहायनीति समस्तस्यापि लाक्षणिकत्वेन श्रौतत्वाभावात्। निरपेक्षो हि रवः श्रुतिः। इतरपदार्थान्वयानुपपत्तिज्ञानसापेक्षप्रतीतिकं हि लाक्षणिकमन्यथारुणापदलक्षितं द्रव्यमपि श्रौतमेव स्यात्।

नच लक्षणादिकं विनैव प्रकरणकल्पितश्रुतानुमितैकदेशानिष्पन्नेनारुणया ज्योतिष्टोमापूर्वसाधनीभूतद्रव्यपरिच्छेदं भावयेदित्याकारेण वाक्येन प्राकरणिकसर्वद्रव्याङ्गत्वमिति वाच्यम्।

---

तृतीयासंयोगात्करणत्वविशिष्टानि प्राकरणिकद्रव्याण्यनूद्य गुणो विधेयः। नचैकप्रसरताभङ्गः एकोपस्थितिविषये एव तन्न्यायप्रवृत्तेः। इहतु शक्तिलक्षणाभ्यां भिन्नोपस्थितिविषयत्वान्न दोषः। समासादिवृत्तौ तु शक्तिलक्षणाभ्यां वा समासादिरूपोद्बोधकवशात् विग्रहवाक्यानुभूतविशिष्टार्थस्यैकैवोपस्थितिरिति न तत्र तथाऽन्वयः। अयमेव चैकार्थीभावो नाम। इत्थं हि वचनव्यक्तिः यत्किंचिद्यया कयाचिद्व्यक्त्या क्रियते तदरुणगुणिकयेति। अतएव स्त्रीलिङ्गनिर्देश इति वक्तव्यं। एवंच क्रये एवान्वयसम्भव इति भावः।

बलेति समाहारद्वंद्वः। अभावादिति गवा क्रीणातीति क्रमप्राप्तं मंत्रे गवेति जातावेकवचनमिति भावः। एवंच श्रौतैकहायन्यवरोधेन क्रये तदन्वयासम्भवे च। प्रोक्तदोषाभावायाहारुणापदेति तदस्वीकारे आह सोऽयुक्त इति।

कैश्चिदनयैवानुपपत्त्याऽरुणयेति भित्वाऽन्यथा पूर्वपक्षो वर्णितस्तत् खण्डयति नचेति। आदिना आक्षेपः। यथाक्रममेवाहारुणेति ननु तद्वत् तृतीयया तस्यापि श्रौतत्वमत आहारुणयेतीति। ननु तथा-

द्रव्यपरिच्छेदं भावयेदित्यंशस्य प्रकरणतोऽप्यलाभात् । तस्माल्लक्षणया प्रकरणे निवेश इति वृद्धोक्तमेव ज्यायस्तत्र चानुपपत्तिरेव । अरुणयेति टाब्निर्देशस्तु च्छान्दस इति पूर्वपक्षी मन्यते । आश्रयलिङ्गग्राहित्वादि च गुणवचनानां पूर्वपक्षी न जानीते । आश्रयानिर्णयाच्च । नच स्त्रीद्रव्यलक्षणायां टाप् । अरुणापदलक्षितन्द्रव्यमित्यस्यासङ्गतेः । प्राकरणिकद्रव्यमात्रे निवेश इत्यसङ्गतेश्च ।

यत्तु टाप् साधुत्वार्थ इति तन्न । एकवचनात्यन्तस्वार्थिकप्रत्ययातिरिक्तप्रत्ययानां साधुत्वमात्रार्थताया भाष्यकारादिभिरनभ्युपगमात् । किंच समासशक्त्यनङ्गीकारे एकहायनीपिङ्गाक्षीपदयोरप्यरुणापदतुल्यतया तत्र पूर्वपक्षात्प्रकरणे बीजाभावश्चेति । मीमांसावार्त्तिककृतोऽप्येवमेव—

सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते ।
नहि सम्बन्धवाचित्वं सम्भवत्यगतित्वात् ॥

इति तदुक्तेः तन्मात्रवाचित्वमित्यर्थः । सम्बन्धस्य सांसर्गिकविषयतयैव वाच्यत्वे तस्य सम्बन्ध्यन्तरभानं विना भानायोगात् ।

विशेषणं च गावोऽत्र न सम्बन्धः कथंचन ।

इति तदुक्तेः । अत्र चित्रगुरित्यादौ सम्बन्धस्य स-

---

पि गुणवचनानामिति न्यायेन तस्य तत्त्वमत आह अयेति । अज्ञानं न केवलं तन्त्रान्तरस्थत्वमूलकं किंत्वन्यथापीत्याहाश्रयेति ।

तदुक्तिमेव खण्डयति यत्त्विति पूर्वपक्षानुरोधेनाहैकेति सम्बन्धमात्रेत्यर्थः । तत्र हेतुमाह सम्बन्धस्येति । वाच्यत्वे सति । अयोगात् अभानात् । ननु विशेषणतयैव तद्भानं कुतो नात आह विशेषणं

खण्डत्वेन तत्र वाच्यत्वं कल्प्यं, संबन्धिनश्चाक्षेपाद्ज्ञानं स्वीकार्यमित्यर्थोऽतिगौरवादित्यस्य। शक्तिमदवयवकत्वे सति संसर्गबोधकशब्दत्वं यौगिकशब्दत्वम्। शक्तिमदवयवत्वं च राजपुरुषादौ लोकसिद्धं, पाचकादौ शास्त्रसिद्धं। जातेस्तु व्यक्त्यभेदेन गोपदादिभ्यो भानमिति अजेत्यादौ टाप्सिद्धिः। अतएव शाबलेयस्य गौरिति कदापि न।

सिद्धान्तस्त्वस्य गुणितादात्म्येन गुणबोधकत्वम्। गुणिद्रव्यं च वाक्ये श्रुतत्वेन सन्निहितत्वादेकहायन्येवेति विशिष्टविधिरयम्। अतएवं टाप् न्यायेन तस्मिन्संभवति छान्दसत्वकल्पनाया अयुक्तत्वात्।
अतएव—

गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति।

इतिकोशः सङ्गच्छते। भेदेन भानेऽप्याश्रयलिङ्गग्राहिता वा, गुणवचनानामाश्रयतो लिङ्गवचनानीत्युक्तेः। एकहायनी च गौरेव क्रमप्राप्तत्वात्। गवा ते क्रीणानीति मन्त्रलिङ्गात्।

---

चेति। नन्वेवं गौरवमेवेति आद्यदोष एवात आह सम्बन्धस्येति। अनतिप्रसङ्गायाह शक्तिमदिति। सत्यंतमपि सर्वत्र न निर्मूलमित्याह शक्तीति। नचैवमतत्वादजेत्यादौ द्रव्यानभिधानात्कथं टाबत आह जातेस्त्विति। अतएव अभेदेनैव भानादेव। अस्य अरुणयेत्यस्य। तद्वदेवाह गुणीति विशिंष्टति गुणविशिष्टद्रव्येत्यर्थः। अत एव तस्य तद्रूपत्वादेव पूर्वपक्षयुक्तिं खण्डयति न्यायेनेति। तस्मिन् टापि। तत्र कोशविरोधमपि सूचयन्नाहात एवेति। तथा गुणिबोधकत्वादेवेत्यर्थः। आदिना एतेऽपि न रूपादयः। जातिशब्दतोऽत्रवैलक्षण्यमाह भेदेनेति गुणिभेदेनेत्यर्थः। उभयथाप्यत्र प्रयोगदर्शनात् गुणवचनत्वं हि गुणोपसर्जनगुणिबोधकत्वम्।

एतदभिप्रायेणैव वार्त्तिके उक्तं गुणस्यैवास्य द्रव्यपरिच्छेदद्वारा क्रयसाधनत्वमित्यरुणादीनां योग्यत्वाद्द्रव्यपरिच्छेद एव व्यापारस्तत्रैषां कर्तृत्वादितरत्र करणत्वं भविष्यति । तत्रारुणापदादेतदवगतम्, किंचिद्द्रव्यं परिच्छिन्दतारुणगुणेन क्रयः साधयितव्य इति, एकहायन्यपि केनाचिद्गुणेन मे परिच्छेदः कार्य इत्येतावदपेक्षते, उभयथापेक्षालक्षणश्च सम्बन्धः शीघ्रतरं निवर्त्तते तेन नष्टाश्वदग्धरथवत्तयोरेव विनापि षष्ठीं सम्बन्ध इति संनिहितातिक्रमे कारणाभावाच्चैवमेव ज्ञायते इति । परिच्छेदश्च स्वतादात्म्येन ग्रहणं स्वाश्रयत्वेन ग्रहणं वा एतदधिकरणसिद्धान्तसूत्रमपि कष्टं भीष्मं कुर्विंत्येतद्व्युत्पादनावसरे तत्पुरुषप्रकरणे उक्तं व्याख्यातं चेति दिक् ।

---

यत्तु स्वशक्यार्थविशिष्टव्यक्तिविषयकप्रसिद्धलक्षणावृत्तियोग्यं यत्प्रकारतया व्यक्त्यनन्वय्यर्थकंपदं तत्वं गुणवचनत्वं । अजायाः शुक्ल इत्यादौ टाप्वारणायांत्यरूपम् । अस्तीत्यादावपि प्रकारतया व्यक्त्यन्वयादाद्यमिति । तत्र शुक्लस्याश्रय इयमजेत्यादावेवमप्यतिव्याप्तेः ।

नन्वेवमप्यतिप्रसङ्ग एवात आहैकेति । उक्तमित्यस्यैतावित्यन्तेनान्वयः । अस्यआरुण्यस्य । तत्र परिच्छेदे । इतरत्र क्रये । तदेवाह तत्रेति वाक्ये इत्यर्थः ।

युक्त्यंतरमप्याह संनीति प्रागुक्तपक्षद्वयमेवाह परीति । तत्र विनापि षष्ठीमित्यनेन भेदेनैव सम्बन्धो दर्शितः । अस्य निर्मूलत्वं निराचष्टे एतादिति पिङ्गाक्ष्यैकहायन्योस्तु सन्निधानात्प्रत्यासत्त्या एकद्रव्यावगमः । अतएव पाचकपाठकेन कृतमित्यादौ समासोपपत्तिरेवञ्च वाक्यभेदे मानाभावेन न प्रकरणे निवेशः । एवं च यदैवैकहायन्यन्वयस्तदैवारुण्यस्याप्यन्वय इति न श्रौतकहायन्यवरोधयंकेति बोध्यं तद्वदेति दिगिति ।

अतएवेन्द्रपीताधिकरणं सङ्गच्छते । तथाहि-प्रातः सवनस्य गायत्रच्छन्दस इन्द्रपीतस्योपहूतस्योपहूतो भक्षयामीति मन्त्र इन्द्रदेवत्यसोमभक्षण एव नान्यदेवत्यसोमभक्षणे । इन्द्रपीतस्येति लिङ्गात् । नचै'न्द्राग्ने तु लिङ्गात्स्या'दिति सूत्रात् डित्थकपित्थयोर्मातरि डित्थमातृत्ववदिन्द्राग्निपीते इन्द्रपीतत्वरूपलिङ्गस्य सत्त्वेनेन्द्राग्निदेवत्यसोमभक्षणे मन्त्रापत्तिरिति वाच्यम् । अग्नौ भस्मीकृतस्य पानासंभवेनेन्द्रपीतशब्दस्य तृतीयातत्पुरुषेण सोमपरत्वस्यायुक्तत्वेन दानलक्षणया साधनं कृतेति चतुर्थीतत्पुरुषेण सोमपरस्येन्द्रोद्देशेन दत्तस्येत्यर्थकतयेन्द्राग्न्युद्देश्यकस्येन्द्रोद्देश्यकत्वाभावेनादोषात् ।

यत्तु इन्द्राग्निविषये इन्द्रस्याग्निसापेक्षत्वेनासामर्थ्यादिन्द्रपीत इति समासो न स्यादिति शबरस्वामिनोक्तं तत्प्रौढ्या । उपात्तपदजप्रतीतिविषयसापेक्ष एव सापेक्षमसमर्थवदित्यस्य प्रवृत्तेः पतञ्जलिनोक्तत्वा-

---

अत एव बहुव्रीहौ विशिष्टशक्तिस्वीकारादेव । रणं तदपि । दशइन्द्रपीतस्योपहूत इति पाठः । नान्येति तस्य त्वमन्त्रकमेव भक्षणमिति भावः । लिङ्गादिति तृतीयातत्पुरुषेण तस्य तदीयसोमपत्वादितिभावः । लिङ्गातिप्रसंगादतिप्रसङ्गं शङ्कते नचेति । सूत्रात् अनेन निर्मूलत्वं तत्र निरस्तं । एवमग्रेऽपि । तदर्थं सूचयन्नाहडित्थेति भक्षणं तत्रापि यद्वापत्तिः सैव ।

यद्यपि देवताधिकरणन्यायेनाचेतनदेवतायाः पानासम्भव एव तथापि चैतन्यपक्षेऽप्याहाग्नाविति दानेति पिबतेरित्यादिः । परस्य इन्द्रपीतशब्दस्य विषये मन्त्रप्रवृत्ताविति शेषः । उक्तदोषपरिहाराय तदुक्तिरियं प्रतीति सेति पाठः । विषयेति तेन सापेक्ष एवेत्यर्थः ।

त् । विशेषणस्यायोगान्ययोगव्यवच्छेदफलकत्वेन व्रीहिभिर्यजेतेत्यादाविवेन्द्रायैव दत्त इत्यर्थेनेन्द्राग्निदेवत्ये मन्त्राप्रवृत्तेश्च ।

तथा च सूत्र 'मेकस्मिन्वा देवतान्तराद्विभागव' दिति । एकेन्द्रदैवत्य एवायं मन्त्रः यथा देवतान्तरसोमादस्य विभागोऽसंबन्धस्तद्वदित्यर्थ इति पूर्वपक्षे सोमपरत्वे हुतशिष्टस्य भक्षणार्थमुपहूतस्येन्द्रपीतत्वाभावेन तत्संबन्धिलक्षणा सोमपरोपहूतशब्देन व्यधिकरणान्वयो वा स्यात् । एतच्चावन्तस्यैव देवतायै दानेन सर्वस्येति भाष्यमते स्पष्टमेव । इन्द्राय वसुमते गृह्णामीति मन्त्रलिङ्गादिन्द्रस्य समुदायसंबन्धबोधनात्सर्वस्यैव दानं प्रक्षेपस्त्वंशस्यांशान्तरस्येत्यन्यो विनियोगो वचनबलादिति ।

वार्त्तिकमतेऽप्येतदावश्यकम् । अवशिष्टमात्रस्य तद्दत्तत्वाभावात् । नच समुदायदानेऽवयवस्यापि दानान्न लक्षणादि अन्यथा समुदायदाने ततः पुनर्दातुरेकदेशस्वीकारे प्रत्यवायो न स्यादिति वाच्यम् । इन्द्रा-

शङ्कायां दोषान्तरमाह विशेषणेति विनिगमनाविरहादाहायोगेति । अस्याद्दष्टत्वनिरासायाह व्रीहिभिरिति । देवत्यसोमभक्षणे एवमग्रेपि ।

वार्थमाहैवेति । अस्य इन्द्रस्य । इतिपूर्वेति इत्येवं प्रकारेण पूर्वपक्षविषय भूत इन्द्रपीतशब्दस्य सोमपरत्वे इत्यर्थः । ननु वक्ष्यमाणप्रकारेणेति भावः । तदवयवत्वस्य दुरुपपादत्वादवयवे लक्षणेत्ययुक्तमिति सूचयन्नाह तत्सम्बन्धीति तदभावजलाघवादाह सोमपरेति षष्ठ्यन्तेत्यर्थः । नन्विदं न भाष्यादिसम्मतमत आहैतच्चेति तिङन्तसम्बन्धि लक्षणादिकञ्चेत्यर्थः । एवमग्रेऽपि । नसर्वेति यावतो दानं तावतः एव प्रक्षेप इति भावः । मतान्तरमाहेन्द्रायेति मात्रमवधारणे वार्त्तिकमतेन चेति । आदिना तथान्वयः समुदायेति धान्यराश्यादी-

ग्न्यादौ दानोद्देश्यत्वस्य समुदाये पर्याप्तिवत्तत्कर्मत्वस्यापि समुदाये एव सत्त्वात्। स्वस्वत्वध्वंसपरस्वत्वोत्पत्त्याश्रयत्वेन क्रियोद्देश्यतायाः समुदाये एव सत्त्वात्। नान्तरीयके पुनः स्वत्वनिवृत्तिस्वत्वोत्पत्ती अवयवेष्वपीत्येकदेशस्वीकारे प्रत्यवायोपपत्तिः। नान्तरीयकमादाय औतव्यवहारस्तु न। नान्तरीयकदानोद्देश्यत्वस्यापि प्रत्येकं सत्त्वेनेन्द्राग्निदेवत्ये सोमभक्षणे तव मन्त्रापत्तेः।

यत्तु स्वीकारे पाधातोर्लक्षणा सच लाघवादैन्द्राग्न्यादिविषये उभयनिरूपित एक एव न प्रत्येकनिरूपित इति। तन्न। इदं ममेत्याद्याकारकबुद्धिविषयत्वरूपस्य तस्य बुद्धेः प्रत्येकवृत्तिनयोभयनिरूप्यत्वाभावात्। निर्वापप्रभृतिप्रतिपत्तिपर्यन्तममुकदेवतासंबन्धीदमिति याज्ञिकव्यवहारस्तु देवतोद्देशेनोपकल्पितत्वमात्रेण। उपकल्पननिरूपितोद्देश्यता च प्रतिपत्तिनाश्येति न तदुत्तरन्तथा व्यवहारः।

तस्माद्बहुव्रीहिरिन्द्रेण पीतो यस्मिन्निति। प्रातः

---

त्यर्थः। ततः समुदायात् कर्त्तुरिति सूत्रात्तथैव लाभ इति सूचयन् पदार्थमाह स्वत्वेति। नन्वेवमुक्तदोषपवातआह नान्तेति पुनस्त्वर्थे।

एतद्दोषपरिहारकृतन्मतं निराचष्टे यत्त्विति। तस्य स्वीकारस्य अग्रेऽन्वयः। अचेतनदेवतापक्षे स्वीकारासम्भवाच्च। चेतनत्वसविग्रहत्वपक्षेऽपि अहं ममेत्याद्यभिमानरहितानां शिवादीनां तदुपपादनासम्भवो निष्प्रमाणकश्च। देवस्वं नगृह्णीयादित्यादेश्च देवतोद्देशेन त्यक्तं न गृह्णीयादित्यादौ ददातिर्भाक्त इति बोध्यम्।

नचैवमपि याज्ञिकव्यवहारबलेनातिरिक्तसम्बन्धकल्पनाऽस्तु आह-निर्वापेति। इदं हविः। मात्रपदेन दानव्यवच्छेदः। एवंसति तदतिप्रसङ्गप्राप्तं निराचष्टे उपेति। एवं प्राप्ते सिद्धांतमाह तस्मादिति।

सवनस्येत्यधिकृतं प्रातः सवनमन्यपदार्थः। नच कर्मसमुदायाधारकालरूपस्य तस्य भक्षणासंभव इति वाच्यम्। तेन तत्संबन्धिहविषो लक्षणाया उपहूतस्येस्याद्यन्वयाय तत्राप्यावश्यकत्वात्।

सवनीयं हविरन्यपदार्थ इति तु न युक्तम्। तस्मिन् हुतशिष्टे इन्द्रपीतस्याभावेन तस्य तदधिकरणत्वाभावात्। अतीतासु गोषु चित्रगुरिति व्यवहाराभाववदिन्द्रेण पीतस्य नष्टत्वेन तमादाय हविःषु इन्द्रपीत इति बहुव्रीहिणाऽव्यवहाराच्च।

नच पूर्वपदप्रकृतिस्वरेणैव बहुव्रीहित्वनिर्णय इति तदर्थमधिकरणारम्भो वृथेति वाच्यम्। इन्द्रेण पीत इति तृतीयातत्पुरुषेऽपि 'तृतीया कर्मणी'त्यनेन पूर्वपदप्रकृतिस्वरस्यैव सत्त्वात्। देवानामग्निमुखत्वेनेन्द्राय स्वाहेत्यादिमन्त्रेणाग्नौ दाहस्यैवेन्द्रकर्तृकपानत्वान्न तदनुपपत्तिः। अतः पाधातोर्दानं न लक्षणेत्याशयात्। पूर्वपक्षे दानलक्षणायामपि चतुर्थ्यर्थे बहुलं छन्दसी-

---

अधिकृतं उपक्रान्तं। न च कर्मेति कर्मसमुदायश्च तदाधारकालश्चैतदुभयरूपस्य सवनस्यचेत्यर्थः। भक्षणेति भक्षयामिपदोपात्तेत्यर्थः। तेनेति तत्परेन्द्रपीतशब्देन कर्मसम्बन्धीत्यर्थः। हविष इत्यधिकरणस्य सम्बन्धित्वविवक्षया षष्ठी। आदिना भक्षणं तथा च तत्तत्सम्बन्धि भक्षणमात्रऽयमिति सिद्धान्ताशयः। तस्मिन् हविषि। केचिवं मास्तु सप्तम्यर्थे बहुव्रीहिरपि तु षष्ठ्यर्थे एवास्त्वत आहातीतास्विति तत्तत्रास्तीत्युक्तेरिति भावः। इन्द्रपीतेति षष्ठ्यर्थबहुव्रीहिणेति पाठः।

कौस्तुभाद्युक्तिं खण्डयति नचेति। ननु तेषां मते तत्कर्तृकपानासम्भवेन पूर्वपक्ष एवायुक्तोऽतआह देवानामिति तदेति तृतीयातत्पु-

ति तृतीयान्तेनैव समासाच्च। प्रकारान्तरेणापि पूर्वपक्षोपपादनस्य कृतत्वाच्च।

किंच दानलक्षणायामपन्द्रिाय पीत इति चतुर्थीसमासो दुर्लभः। चतुर्थी तदर्थेति समासस्य प्रतिपदोक्ततादर्थ्यचतुर्थ्यैव प्रकृतिविकृतिभाव एव च प्रवृत्तेर्भाष्यसंमतत्वात्। साधनं कृतेत्यपि न, चतुर्थीतदर्थेतिसूत्रे रक्षितग्रहणेन चतुर्थ्यन्तस्य तेन समासाभावबोधनात्। तादर्थ्यचतुर्थ्या कारकविभक्तित्वाभावेन तत्र तेन समासस्य दुर्लभत्वाच्च।

किंच तेन समासे पूर्वपदप्रकृतिस्वरेणैव बहुव्रीहित्वनिर्णयेऽधिकरणोच्छेदः। नच चतुर्थी तदर्थ इत्यनेन तत्रापि पूर्वपदप्रकृतिस्वर इति वाच्यम्। तस्य स्वरस्यापि प्रकृतिविकृतिभाव एव प्रवृत्तेर्भाष्यसंमतत्वात्। प्रतिपदोक्ततादर्थ्यचतुर्थ्यन्तसमास एव तत्प्र-

---

रुषेत्यर्थः। नन्वेवं प्रागुक्तलक्षणं किमर्थमत आहात इति आशयः। परेषां स्वोपपादितरीत्यापि ततो अनिर्णयमाह पूर्वेति स्वोपपादिते इत्यर्थः। स्तीति इति विहिततृतीयान्तेनेत्यर्थः। अभ्युपेत्याप्याह प्रकारान्तरेति। स्वोपपादितपूर्वपक्षे लक्षणादिदोषान्तर माह किञ्चेति नन्विदंमत एव नोक्तमपि तु साधनं कृतेति त्यत आह साधनमिति हितादियोगे विधिसत्त्वादाह रक्षितेति। ननु गोबलिरितिवत्तादर्थ्यचतुर्थ्यन्तेन समासोऽतआह तादर्थ्येति तच्च देवानामपीत्युक्तरीत्योपपाद्यं।

यद्यपि रक्षितग्रहणवत् बलिग्रहणं ज्ञापकं सम्भवति तथापि मूले एव कुठारमाह कारकेति। तत्र तस्यां सत्यां। तेन वार्तिकोक्तं अभ्युपेत्याह किञ्चेति सम्प्रदानचतुर्थ्यंतेनेत्यर्थः। प्राग्वदुभयं तुल्यमिति अपिना तत्समासः। आद्यस्य स्पष्टत्वाद्द्वितीयमुपपादयति प्रकृतेस्त्विति।

भृत्तेश्च । प्रकृते तु न तादर्थ्ये चतुर्थी उपपदविभक्तेरितिन्यायात् । क्ते चेत्यत्रापि तदर्थ इत्यनुवर्त्तते गोरक्षितमित्येव तदुदाहरणं नतु गोहितमित्यन्यत्र निरूपितम् ।

अतएव चतुर्थी तदर्थे इत्यस्य प्रकृतिविकृतिभाव एव प्रवृत्तौ क्तेचेति ज्ञापकं भाष्योक्तं सङ्गच्छते । समासे शक्तिमनङ्गीकुर्वतां बहुव्रीहावन्यपदार्थे लक्षणा व्याधिकरणत्वात् । त्वंद्रीत्या पूर्वपदस्य विभक्त्यर्थान्तर्भावेण लक्षणेति तत्पुरुषादविशेषः । नच दानार्थकपाधातोर्भावक्तान्तादर्श आद्यचि पीत इन्द्रो यस्येति बहुव्रीहिर्दानसम्बन्धीन्द्रसम्बन्धिन इति बोधः । आहिताग्न्यादित्वात्पीतशब्दस्य परानिपात इति न बहुव्रीहौ लक्षणाद्वयमिति वाच्यम् । धातोः सकर्मकतया भावे क्तस्यासम्भवात् । अनुपपत्तिप्रतिसंधान-

---

नन्वेव मपि अर्थे इत्यस्याविषयत्वेऽपि तदग्रिमेण क्तेचेत्येनेन विधीयमानः पूर्वपदप्रकृतिस्वरः सिद्ध एवेति आह क्तेचेत्यत्रेति । एवंच तादर्थ्यचतुर्थ्यामेव तदप्रवृत्तिरिति नात्र तदपीति भावः ।

नन्वेवं गोहितमिति वृत्युक्ततदुदाहरणासङ्गतिरत आह गोरक्षितमिति अन्यत्र उद्योतादौ । अतएव तत्र तदनुवृत्त्या तत्रैव तत्प्रवृत्तेरेव । तत्र हि अश्वघासादिषु चतुर्थी समासोपसंख्यानं षष्ठीसमासेन प्रत्याख्याय तत्रारम्भे चतुर्थी तदर्थे इति प्रकृतेः स्वरः स्यात् षष्ठीसमासे त्वंतोदात्तत्वमिति स्वरभेदमाशङ्क्यक्तेचेति ज्ञापकाच्चतुर्थी इत्यस्य प्रकृतिविकृतिभावे एव प्रवृत्त्या न स्वरे विशेष इत्युक्तं । त्वद्रीत्याऽत्र तादर्थ्यचतुर्थ्यभावेन तदप्राप्तौ विध्यर्थत्वेनास्य सार्थक्याच्चदसङ्गतिः स्पष्टैव । तस्मात्स्वरेणानिर्णय इति तदारम्भः सफल एवेति सिद्धम् ।

अतएवेत्युक्त्या सूचितामन्यथानुपपत्तिमाह समासे इति । ननु

मूलकत्वस्यैवंविधे वृत्तिद्वयकल्पनाया लक्षणातोऽपि दुष्टत्वाच्च ।

तदुक्तं जैमिनिना—'सर्वेषां चैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात्सवनाधिकारो ही'ति भक्तिपानत्वादित्यनेन तत्पुरुषनिराकरणं दानलक्षणानिराकरणं च । सवनाधिकारो हीत्यन्यपदार्थप्रदर्शनमतस्तत्सवनसम्बन्धिनां सर्वेषामैन्द्राणां अनैन्द्राणां च हविषां समन्त्रकं भक्षणं यथाम्नानामेक एव च मन्त्रः सर्वत्रेति त-

---

तत्पुरुषे लक्षणाद्वयं पूर्वपदसमासे बहुव्रीहौ त्वेकैवेति न तदसंगतिरत आह वह्नीति । अपिना तत्पुरुषः व्यधिकरणबहुव्रीहित्वेन नामार्थधात्वर्थयोर्विभक्त्यर्थमद्वारीकृत्य साक्षाद्भेदेनान्वयाव्युत्पत्त्या पूर्वपदस्य तृतीयार्थलक्षकत्वं समुदायादेश्चान्यपदार्थलक्षकत्वमिति साम्यमिति भावः । बह्वीति समानाधिकरणेत्यादि । इति इतिच । त्वात् त्वाच्च । ननु नपुंसके भावे इत्यनेन सम्भवत्यत आहानुपेति अत्रान्यपदार्थे लक्षणाया अपि सत्वादाह लक्षणातोऽपीति तत्पुषीयलक्षणातोऽपीत्यर्थः । एतदग्रे गुरुत्वाच्च एतन्मूलक एव नकर्मधारयान्मत्वर्थीयइत्युद्घोषः । निषादस्थपत्यधिकरणोक्तरीत्या तत्पुरुषेऽप्यवांतरलक्षणाया अभावेन तयोः समत्वाच्चेति क्वचित्पाठो दृश्यते ।

उक्तसिद्धान्तं समूलयति तदुक्तमिति सिद्धान्ते यत्रेन्द्रेण पीतं तत्सवनमिन्द्रपीतं प्रातः सवनसामानाधिकरण्यात् तथाचानैन्द्रोऽपि इन्द्रपीतसवनांतर्भवतीति मन्त्रेण वदितुं शक्यत्वात्समानविधाने कथं मन्त्रो न भवेत् भक्त्या ह्यपीतः पीत इत्युच्यते । इत्यैतिशायन आचार्यो मन्यते तत्कीर्तनं पुजार्थत्वेन स्वसंमत्यर्थमिति भाष्यकृत्तदाह भक्तीति । व्यधिकरणबहुव्रीहिणा पानपदार्थकथनं अतएवोभयं व्यवच्छेद्यमाह तत्पूर्वीति । हिसूचितमाहात इति तत् प्रातः यथाम्नानमित्यनेनोहनिरासः । आदिना वार्त्तिकादि ।

एतेन यदत्र कौस्तुभकृतोक्तं यच्च तत्समर्थनाय भूषणकृतोक्तं यच्च मीमांसकैकदेशिभिः स्वरेणैव बहुव्रीहिनिर्णय इत्युक्तं तत्सर्वमपास्तम् । गर्भशंकादि तु कृत्वाचिन्त्यायेनात्रानेकविधमिति स्पष्टमन्यत्र तदा-

र्थ इति तद्व्याख्यादौ स्पष्टमित्यलम् ।

उपदशाः । दशानां समीपे ये सन्तीति विग्रहः । अत्रायं समीपसंख्यावत्परः । दशपदार्थस्य स्ववृत्तिदशत्वसमीपसंख्यासम्बन्धेनान्वयः । दशसमीपसंख्यावन्त इति बोधः । ईदृशसम्बन्ध एवास्य साधुत्वं शब्दशक्तिस्वभावात् । संख्ययाऽव्ययेत्यादिसूत्रबलाच्च । अत एव नवैकादश वाऽनेन प्रत्याय्यन्ते, नतु दशानां वृक्षादीनां समीपे ये गवादयस्ते प्रत्याय्यन्ते । एतेनासन्नविंशा अदूरत्रिंशा इति व्याख्यातम् ।

द्वौ वा त्रयो वा द्वित्राः । अत्र वाशब्दो विकल्पार्थकः । अत्र कार्ये विकल्पो नतु शब्दबोधेऽतः शब्दान्नियमेन बहूनामुपस्थितेर्नित्यबहुवचनान्तता । अत्रापि एककालं समभिव्याहृतान्वयिपदार्थासम्बन्धत्वरूपो विरोधो भासते, प्रायोऽयमेव सर्वत्र विरोधो वार्थः । क्वचिदेकाधिकरणावृत्तित्वरूपः यथा शब्दो नित्यो न-

---

हेत्यलमिति ।

अथ संख्ययाऽव्ययेत्यस्य विषयं क्रमेणाहोपदशा इत्यादिना सामीप्यपरत्वनिरासायाहात्रेति समीपेति शेषः । क्वचित्तथा पाठ एव । एकार्थीभावविशेषेऽव्ययीभाववदाह शब्दशक्तीति । अतएव सामान्यतोऽन्वयादेव एतद्व्यवच्छेद्यमाह नत्विति । एतेन उक्तप्रकारेण इतीति इत्यपि व्याख्यातप्रायमित्यर्थः । अधिकचत्वारिंशा इत्यस्य चत्वारिंशतोऽधिका इत्यर्थः । स्पष्टत्वादाह द्वौ वेति अत्र विग्रहे । नन्वेवमन्यतरबोधे पक्षे द्विवचनापत्तिरत आहात्रेति वृत्तावित्यर्थः । अत्रापि विकल्पार्थकत्वेऽपि । अपिना वक्ष्यमाणसमुच्चयः । एककालिकैकाधिकरणावृत्तित्वरूपविरोधमेव कोट्योः शब्दान्तरेणाहैकेति अन्वयी कार्यरूपः ।

मतान्तरमाह प्रायोऽयमिति एवेन विकल्पव्यवच्छेदे अयं विरोध

वेति विप्रतिपन्निवाक्ये । तस्य शब्दो नित्यत्वविरु-द्धानित्यत्ववानित्यर्थः ।

क्वचिदेककालावृत्तित्वरूपो विरोधो यथा व्रीहिभि-र्यजेत यवैर्यजेतेत्यादौ वाशब्दं विनापि तात्पर्यवशा-द्देवदत्तो वामेनाक्ष्णा पश्यतीतिवदेकविशेषविधेर्वि-शेषान्तरनिषेधफलकत्वान्निरपेक्षत्वलाभेन समुच्चया-सम्भवाद्विकल्पो बुध्यते। स च समभिव्याहृतका-रकविशिष्टाक्षेपायां भिन्नकालिकत्वरूपः। अत्र व्री-हिभिर्यवैर्वा यष्टव्यमिति प्रश्नवाक्यं यागत्वाव-च्छेदेन यवनिरपेक्षव्रीहिकरणकत्वव्रीहिनिरपेक्षयवक-रणकत्वसंशयपरम् । उत्तरमपि तथैव, परन्तु तद्या-गत्वसामानाधिकरण्येन तत्परमित्याहुः ।

अन्ये तूत्तरे वा शब्दोऽन्यतरार्थः। एवं च द्वयोरपि यागसाधनत्वादिच्छयैकतरग्रहणादैच्छिको विकल्पः। इदमेवाभिप्रेत्य प्रश्ने वा शब्दः सर्वात्मना पक्षान्तर-प्रतिक्षेपार्थः। उत्तरे तु स्वप्राप्तिपक्षे तत्प्रतिक्षेपार्थ

---

एव सर्वत्र वार्थ इत्यर्थः। सर्वत्रेत्यस्योक्ते तद्भिन्ने चेत्यर्थः। प्रायः पदं सफलयति क्वचिदित्यादिना। वृत्तित्वेति तन्मात्रेत्यर्थः। तेनै-ककालावृत्तित्वव्यवच्छेदः। एवमग्रेऽपि। सः विरोधः। नन्वत्र वाशब्द एव नेति कथं सोऽत आहात्रेति सच नोक्त इत्याह सचेति। तथाच वाशब्दप्रयोगे इदं तद्द्योत्यं तदभावे तात्पर्यं मिति बोध्यम्। तदुभ-यत्राप्याहात्रेति उक्तोक्तविषय इत्यर्थः। अतएवाहोत्तरमपीति व्रीहि-भिर्यजेतेत्याद्युक्तरूपमित्यर्थः। तथैव संशयपरमेव तत्परं निरपेक्षव्री-हिसाधनत्वनिरपेक्षयवसाधनत्वसंशयपरं।

एके इति सूचितारुचिस्तु निश्चायकस्यैवोत्तरत्वेन तस्य संशय-परत्व उत्तरत्वानुपपत्तिरिति अतएवाह अन्येत्विति। स्वार्थे तरप् एवशब्दो-ऽवधारणार्थः तेन परिगृहीतात्यागः सूचितः। उत्तरविषयेऽन्यत्रा-

इति प्रवादः। द्वित्रा इत्यत्रापि द्वित्र्यन्यतर इत्यर्थः। अन्यतरत्वमुपास्तेतरव्यावृत्तैकत्वरूपं, तच्च क्वचिद्व्यक्तिगतं क्वचिद्धर्मगतं तात्पर्यवशात्।

यत्तु स्वभिन्नभेद एवान्यतरत्वमिति तन्न। घटपटान्यतरमानयेत्यादितः कदाचिदुभयस्याप्यानयनापत्तेः। तद्भिन्नभेदस्य प्रत्येकं घटपटयोरिव समुदितयोरपि सत्त्वादित्याहुः। तन्न धर्मगतमेकत्वमिति पदार्थः पदार्थेनेति न्यायविरुद्धमिति द्वित्र्यन्यतरेत्यर्थकथनमसङ्गतम्। किञ्च द्वित्रा इत्यादौ नित्यबहुवचनान्ततानापत्तिः। अन्यतरत्वेमानेकबोधे तु घटपटान्यतरमानयेत्यादौ द्विवचनाद्यापत्तिरित्यन्ये।

केचित्तूद्देश्यतावच्छेदकावच्छेदेन पाक्षिकः समभिव्याहृतार्थप्रतियोगिकाभावोऽपि वार्थः। यथा दीर्घात्पदान्ताद्वेत्यादौ। शास्त्रीयव्यवस्थितविकल्पे तु उद्देश्यतावच्छेदकसामानाधिकरण्येन भावाभावबोधो लक्ष्यानुसाराच्च व्यवस्था॥

स्थाणुर्नरेत्यादौ संशयात्मकज्ञानजनके एकाधि-

---

घ्येवामित्याह द्वित्रा इति तर इत्यर्थ इति पाठः। एवमग्रेऽपि सर्वत्र क्वचित्पाठः।

नैयायिकाद्युक्तिं खण्डयति यत्त्विति स्वमुभयं तयोः सत्त्वादिति। अतएवान्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावात् द्विबहुविषयनिर्धारणे वर्तेते इत्याकरः संगच्छते। इदमंशे दूषयति तन्नेति तयोर्मध्ये इत्यर्थः। ननु तत्र तद्विरोधेऽपि व्यक्त्याशयेन तदर्थकथनमत आह किंचेति। अत्राप्यरुचिरन्ये इत्यनेन सूचिता। अन्यतरत्वमपि कार्ये न तु बोधे इति प्रागुक्तरूपशास्त्रीयेति व्याकरणेत्यादिः चस्त्वर्थे। प्राग्वदाह स्थाणुरिति। रूपः रूप एव। ननु तदुपस्थापकशब्दाभावे

करणावृत्तित्वरूपो विरोधो वार्थः । अन्यतरकोटेः सर्वथा बाध्यत्वात् । अनेककोट्युपस्थितिरपि वाशब्दसमभिव्याहारादेव । स्थाणुर्नेत्युक्ते स्थाणुभिन्न इत्येव प्रतीतेः । क्वचित्त्वेकाधेयानाधिकरणत्वरूपो विरोधो वार्थः । यथा घटे पटे वा सौन्दर्यमित्यत्र ।

केचित्तु द्वित्रा इत्यादौ संशयविषयत्वं वार्थः । संदेहविषयद्वित्वत्रित्ववन्त इति बोधः । त्रित्वेनापि संदेहविषयत्वादु बहुवचनं । शब्दो नित्यो नवेत्यस्यापि नित्यत्वादिसंदेहविषय इत्यर्थः । स्वसंशयज्ञापनाय च तथोक्तिरित्याहुः ।

परे तु वाशब्दसमभिव्याहारे परस्परप्रतिक्षेपकानेकधर्मवत्वं धर्मिणि गृह्यते तदेव विषयनिष्ठं संशयत्वं, तदेव वाशब्दवाच्यम् । इदमेव विकल्पितरूपं तद्विषयकत्वाच्च ज्ञानं संशयः । एवंच स्थाणुर्नवेत्यादौ स्थाणुतदभावरूपः संशय इति बोध्यम् ।

द्वित्रा इत्यादौ द्वित्रिरूपसंशयसाधनिका क्रियेत्यादिरीत्या बोधः । अतएव भवेद्यदा बहूनामानयनं

---

कथमिदमत आहानेकेति एवव्यवच्छेद्यमाह स्थाणुरिति णत्वं तद्रूपविरोधः । नन्वेवं कथं नित्यबहुवचनं ततोऽत आह त्रित्वेनापीति नित्यत्वादीति नित्यत्वादिः सन्देहविषयो यत्रेत्यर्थः । तथाच सन्देहविषयनित्यत्वतदभाववान् शब्द इति बोधः । तस्य तत्वे बीजमाह स्वसंशयेति चो ह्यर्थे ।

अत्रारुचिवीजं तु प्रश्नवाक्ये एवं सुवचत्वेपि नोत्तरवाक्ये प्रोक्तरीत्या तथा वक्तुं शक्यमिति बीजान्तरमपि सूचयन्नाह—

परेत्विति प्रामाणिका अतिप्राचस्त्वित्यर्थः । असमभिव्याहारे नैवमित्याह वाशब्देति सर्वत्रैवाऽन्यव्यवच्छेदे ज्ञाने तु नस्वतस्तत्वमित्याह तद्विषयेति । अतएव तस्य वार्थत्वादेव । अनेन सिद्धान्ताशय-

तदा बहुवचनमुपपन्नम् । यदा द्वावानीयेते तदा न सि-ध्यतीत्याशङ्क्य द्वौ वेत्युक्ते त्रयो चेति गम्यते । त्रयो वेत्युक्ते द्वौ वेति गम्यते सैषा पञ्चाधिष्ठाना वागिति भाष्ये उक्तम् । अन्यतरार्थो वाशब्द इत्याशङ्काशयः ।

कैयटोऽपि विकल्पो वार्थ इति द्वित्रशब्दः कदाचि-दुभयोर्वाचक इति शङ्काशयमुक्त्वा संशयोऽत्र वार्थः । ननु विकल्पः विरुद्धानेकविषयत्वाद्विमर्शस्य पर्याय-स्थितद्वित्वत्रित्वाधारवस्तुसंकलनया पञ्चाधिष्ठानत्वमु-च्यत इति आह । अनेकविषयत्वाद् अनेकविषयरू-पत्वात् विमर्शस्य संशयस्येत्यर्थः । तत्र क्वचिद्ब-लवत्प्रमाणेनैका कोटिर्बाध्यैव यत्र तु नतथा बाध-कन्तत्रैच्छिकं पाक्षिकानुष्ठानं क्वचित् । यथा व्री-हियवविषये । क्वचिद्व्यवस्थयेत्यूह्यं ।

संशयत्वस्य विषयनिष्ठत्वादेव संशयलक्षणपरे गौतमीये सूत्रे तद्वार्त्तिककृता संशयपदे विरुद्धत्वात् संशय्यते विषयोऽनेनेति करणव्युत्पत्तिर्दर्शिता विष-योऽत्र विशेष्यभूतः । अतएव प्रमाणप्रमेयेति सूत्रे वि-षयभूतपदार्थेषु संशयस्य पाठः । अतएव प्रमादयो ज्ञानभेदा न तत्रोक्ताः ।

---

स्योक्तत्वादाहान्यतरेति । टापीत्यस्याहेत्यत्रान्वयः । तदाशयवर्णन-मेवेदं तत्र शङ्कांशो भेदमात्रमित्याह विकल्प इति । संशयत्वस्य ज्ञाना-वृत्तित्वाद्भ्रमायाहानेकेति । विशेषमाह तत्रेति तदर्थकतत्समभिव्याहारे इत्यर्थः । एवमन्यत्रापि इत्याह ऊह्यमिति । अत्र परसंमतिमप्याह सं-शयत्वेति । सूत्र इति । समानानेकधर्मोपपत्तेरुपलब्ध्यनुपलब्धिव्यव-स्थातश्च विशेषापेक्षो विमर्शः संशय इत्यत्रेत्यर्थः । विरुद्धत्वात् सं-शयत्वस्य विषयनिष्ठत्वात् ज्ञानलक्षणपरं हीदं सूत्रं विशेषणभू-

मात्सर्यमुत्सार्य विचार्य कार्य-
मार्याः समर्याद मुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणां
किंवा स्मरस्मेरविलासिनीनाम् ॥

इति पद्ये च संशयो वाच्यो निश्चयो व्यङ्ग्य इति प्रकाशे उक्तम् । संदेहालङ्काराद्विकल्पालङ्कारश्च न तेन पृथगुक्तः । निश्चयान्तससंदेहालङ्कारेण गतार्थत्वादित्याहुः ।

द्विरावृत्ता दश द्विदशाः । अत्र सुजर्थान्तर्भावे गावृत्तिक्रियान्तर्भावेण च द्विशब्दस्यावृत्तिविषये वृत्तिः । आवृत्तिजन्मगणने च द्विशब्दो, द्वित्वसंख्याविशिष्टोत्पत्तिकावृत्तिविषया दशेति बोधः । अन्यथा द्वित्वान्वयो न स्यात् । दशत्वसंख्यायाः संख्येयं प्रत्युपसर्जनत्वादेकत्वाच्च न तदन्वयः । संख्येयेष्वपि न । विरोधात् नहि दश द्वौ भवन्ति । तदुक्तं हरिणा—

न संख्यायां न संख्येये द्वौ दशेत्यस्ति सम्भवः ॥
भेदाभावान्न संख्यायां न विरोधात्तदाश्रये । इति ।

---

तत्र दशसंशयत्वाभावादाह विषयोऽत्रेति । अत एव तस्य विषयनिष्ठत्वादेव तदन्यपरसंमतिमप्याह मात्सर्येति संशयत्वस्य विषयनिष्ठत्वादेवेत्यस्यानुषङ्गः । भर्तृहरिपद्यमिदं चो व्युत्क्रमे उक्तं च एवमग्रेऽपि ।

इदमेवेत्युक्तं सफलयति सन्देहेति । तेन प्रकाशकृता एतेन नव्यालंकारिकोक्तिरपास्ता । तद्विशेषेषु अस्याभावादाहात्रेति तदेवाहावृत्तीति । अन्यथा तस्य तदनर्थकत्वे तदभावमेव धर्मधर्मिभेदेन त्रेधोपपादयति दशत्वेति । द्वितोऽन्यत्रानियमादाह भवन्तीति । क्रमेण तत्र हेतुद्वयमाह भेदेति ।

केशेषु केशेषु गृहीत्वेदं युद्धं केशाकेशि । अत्र क्त्वाप्रत्ययोऽध्याहृतास्थित्यादिक्रियामादाय बोध्यः । ग्रहणकर्मत्वं च प्रत्यासत्त्या केशादिविशिष्टपुरुषयोरेव । परस्परग्रहणादिरूपः कर्मव्यतिहारः समुदायशक्यो युद्धादिरूपक्रिया च । एवंच परस्परकेशाधिकरणकतत्पुरुषकर्मकग्रहणोत्तरकालिकस्थितिकर्तृपुरुषकर्तृका क्रियेति बोधः । क्रिया युद्धादिरूपेति क्वचित्प्रकरणात्क्वचिद्युद्धादिवाचकपदसमभिव्याहारान्निर्णेयम् । यथा

मृधं किमच्छत्रकदण्डताण्डवं ।
भुजाभुजि क्षोणिभृतां दिदृक्षवः ॥

इत्यादौ । एतेन कर्णाकर्णि प्रथितमयश इति व्याख्यानम् । कर्णाभ्यां कर्णाभ्यामाकर्ण्येदं प्रथितमित्यर्थः । एतेनायं समासो युद्धक्रियायामेवेत्यपास्तम् ।

इति बहुव्रीहिः

---

तत्र तेनेदमित्यस्य विषयमाह केशेष्विति । ग्रहणस्य प्रवृत्तिवैयधिकरण्यादाहाग्रेति विग्रहे इत्यर्थः । न्यूनतां निराचष्टे ग्रहणेति । अत्रैकार्थीभावकृतविशेषमाह परस्परेति । अन्यसङ्ग्रहायाह युद्धादीति । परस्परेत्यादिविशेषणत्रयं ग्रहणान्वयि । क्त्वार्थमाहोत्तरेति तत्राद्योदाहरणमुक्तमेवेति द्वितीयमाह यथेति । एतेन प्रकारेण । अनेनादिसंग्राहं सूचितं इत्यपि प्रथितं प्रथनं प्रवृत्तं क्रियाविशेषणमेतत् । अनेन ग्रहोऽपि बोधितः ।

एवं-हस्ताहास्तिमिषात्स्पृशनूकुचतटीमित्यत्रापि बोध्यम् ।

कैयटादिसकलग्रन्थकारोक्तिं खण्डयति एतेनेति । उक्तप्रयोगदर्शनेनेत्यर्थः ।

इति बहुव्रीहिः ।

---

## अथ द्वन्द्वः

धवखदिरावित्यादावितरेतरयोगद्वन्द्वे उद्भूतावयवभेदः समूहः समासार्थः। अतएव चार्थे द्वन्द्व इति सूत्रे भाष्ये चार्थे विधीयमानस्य द्वन्द्वस्य तद्वदेवालिङ्गसंख्यतामाशङ्क्य शब्दशक्तिस्वभावेन गुणवचनानामिवाश्रयतो लिङ्गवचनानीत्यनेन वा परिहृतम्। बहुव्रीहावन्यपदार्थस्येवात्रापि चार्थस्यैव प्राधान्यौचित्यात्। अतएव गोस्त्रियोरिति सूत्रभाष्ये कुक्कुटमयूर्यावित्यत्र ह्रस्वमाशङ्क्य 'द्वन्द्वे प्रतिषेधो वक्तव्य' इत्युक्तं समासार्थेऽवयवार्थस्याप्राधान्यात्प्रथमानिर्दिष्टत्वाच्चोपसर्जनत्वमिति कैयटेनोक्तं। प्रमाणप्रमेयेत्याद्यसूत्रे न्यायभाष्यकारोऽपि चार्थे द्वन्द्वः समास इति। अतः सर्वे एते प्रमाणादयो विज्ञेया इति सिद्धमिति वार्त्तिकं च। तेन हि समासस्य चार्थे वृत्तिः स्पष्टमुक्ता। तेनच समूहस्य ज्ञेयत्वला-

---

अथ द्वन्द्वः।

प्राचीनादिसकलग्रन्थासांगत्यं प्रतिपादयितुमादौ सविवादस्थलसिद्धान्तमाह धवेति। द्विवचनाद्यर्थमाहोद्भूतेति। तत्त्वाभावादेकाहेवेति। नेदं भाष्यं समाहारविषयं तस्य वाचनिकलिंगैकवचनयोः सत्वात्। आश्रयलिंगवचनाग्राहित्वाच्च इतरेतरयोगपदेन तादृशः समूह एवोच्यते इति भावः। ननु चार्थवृत्त्यनेकसुबंतानां द्वन्द्व इत्यर्थेन तस्य प्राधान्यमत आह व्रीहाविति। भाष्यान्तरसंमतिमप्याहातएवेति तस्य प्राधान्यादेवचेत्यर्थः। लौकिकं पारिभाषिकं चोपसर्जनत्वमस्तीत्याह समेति। परसंमतमपीदमित्याह प्रमाणेति। इति प्रथमसूत्रे इत्यर्थः। वार्त्तिकग्रन्थमाहात इति। चार्थे द्वन्द्वसमासादित्यर्थः। तेन हि तत्सूभाष्यकृता हि। तेनच तस्य तद्वृत्तित्वेन च। अतएव

भः । अन्यथा समासान्तरे इव चकाराघटितवाक्ये इव चात्रापि समासे कथं सर्वेषां ज्ञेयत्वलाभः स्यात् । एवंच पदाबोध्येऽर्थे समासस्य शक्तिरित्युक्तमेवेति दिक् ॥

पाणिपादमित्यादि समाहारे त्वनुद्भूतावयवभेदः समूहो विशेष्य इति बोध्यम् । उद्भूतावयवभेदत्वं चावयवगतसंख्याद्यारोपवत्त्वं तद्विपरीतमनुद्भूतावयवभेदत्वमुभयत्रापि द्वन्द्वे समूहो नावयवव्यतिरिक्तः । धवखदिरौ धवखदिराविति स्वशब्देरेवाभिधानात् अवयवातिरिक्तस्तु यूथं वनमिति शब्दान्तरेणैवोच्यते । एतेनेतरेतरयोगे तदनतिरेकेण भानं समाहारे तु तदतिरेकेणेति भेद इत्यपास्तम् ।

यत्त्वितरेतरयोगे साहित्यं विशेषणं तच्च समुदायशक्त्यं । उत्तरपदलक्ष्यमिति तु बहुव्रीह्युक्तरीत्या निरसनीयम् । समुदायलक्ष्यमिति तु न युक्तम् । अनुपपत्तिप्रतिसंधानं विनापि प्रतीतेः । समाहारे तु तद्विशे-

---

षणपदं तदेवाहान्यथेति तथानंगीकारे इत्यर्थः । आदिना समुच्चयादिपदं । अत्रापि द्वन्द्वेऽपि । तेषां परमतात्पर्यमाहैवञ्चेति । तथोक्त्या तथासिद्धेरित्यर्थः । अर्थे वृत्तिपदाबोध्ये चार्थे । एतेन तत्र सा नेति व्युदस्तोऽन्ये सर्वनैयायिकमन्याः परास्ताः मूलविरोधात्तदाहेति दिगिति

समाहारे य त्कृतो भेदस्तमाह पाणीति । अस्य भासमानयथाश्रुतार्थनिरासायाहोद्भूतेति भेदपदं भेदसहचरितद्वित्वादिपरमत एव तद्भानलिंगादि ग्राहित्वमेवोक्तमिति भावः । आदिना लिंगं । तदर्थमेवोभयत्र सिद्धान्तमाहोभेति । इति इत्यादि । परमतमेव खण्डयति एतेनेति उक्तहेतुनेत्यर्थः । अयं हि तदाशयः तस्याश्रयलिंगादि ग्राहित्वोक्त्याऽवयवतादात्म्येन भानमिति स्पष्टमेवोक्तं । समाहारे तु न तथा एतावतैवोभयपदार्थप्रधानो द्वंद्व इति व्यवहारः । समूहस्येतरेतरयोगे गुणत्वमिति च सिद्धान्ते इव समूहस्य सर्वथाऽवयवेभ्यो

षयं। साहित्यस्येतरेतरयोगद्वन्द्वेऽभाने तु द्वित्वाद्यन्वयेयोग्यताबच्छेदकसाहित्यमन्तरा तदन्वयो दुर्लभः स्यात्।

ननूपस्थिते योग्य एव तदन्वयनियमो न तु योग्यतावच्छेदकोपस्थित्यपेक्षा। अतएव घटेन जलमाहरेत्यादौ छिद्रेतरस्यैव योग्यतयान्वयो नतु छिद्रेतरत्वप्रकारको बोधः।

नच घटाकाशद्वित्वादेः प्रत्येकावृत्तेः समुदायावृत्तित्वेनाकाशेऽपि सत्वेनाकाशपदाद् द्विवचनाद्यापत्तिवारणाय संख्याया अन्वयितावच्छेदकव्यापत्वविशिष्टसमवायसम्बन्धेन प्रकृत्यर्थेऽन्वये तेषां साधुत्वमवश्यं वाच्यम्। अतएवैको न द्वावित्याद्युपपद्यते। द्वित्वान्वययोग्यतावच्छेदकोभयवृत्तिधर्मव्याप्यसमवायस्य प्रतियोगितावच्छेदकसम्बन्धत्वात्। अन्यथा

---

भेदाभावात् इति दीक्षितभूषणकृदादिसकलप्राचीनतन्त्रान्तरमतं खण्डयति यत्त्वित्यादिना। तत्साहित्यं।

नव्यनैयायिकोक्तिं खण्डयति उत्तरेति। तज्जीर्णोक्तिं खण्डयति समुदेति। तत्रैकत्वार्थमाह समेति। नन्वितरेतरयोगे तस्य श्रवणफलाभावादिति किमिति तथा विशेषोऽस्त आह साहीति।

यत्तु नव्यतराः नेतरेतरयोगे शक्तिर्नवा लक्षणा एकस्मृत्युपारूढपदद्वयात्स्वस्वशक्यार्थयोरेकदा स्मृतिसम्भवात् उपस्थिते तत्र द्वित्वान्वयसम्भवाच्च। साहित्यमप्येकक्रियान्वयित्वमेवेति न तदर्थमपि ते। समस्यमानपदार्थगतस्वार्थबोधकत्वस्यैव स्वीकारान्न प्रकृत्यर्थान्वयानुपपत्तिरिति तन्मतं खण्डयितुमनुवदति नन्वित्यादि चेन्नेत्यंतेन। त्यपेक्षेति तथाहि सति द्वित्वाद्यन्वयेति भवदुक्तं सम्भाव्येत तदेव नेति भावः।

प्रकारान्तरेण तज्ज्ञानावश्यकत्वमाह नचेत्यादि पपत्तिरिति वाक्यमित्यंतेन। द्वित्वादेरित्यस्य सत्वेनेत्यत्रान्वयः। तत्र हेतुमाह प्र

केवलसमवायस्यैकस्मिन्नपि सत्त्वेन तदनुपपत्तिः। समवायस्तु नाना तस्यैकत्वे तु तद्व्याप्यत्वविशिष्टा पर्याप्तिः सम्बन्धोऽस्तु। एवंच धवखदिरावित्यादौ साहित्यभानमावश्यकम्। अन्यथान्वयितावच्छेदकधवत्वखदिरत्वादिव्याप्यद्वित्वद्वयादिप्रतीत्यापत्तिस्तथाचैकैकखदिरादितात्पर्येण तथाप्रयोगानुपपत्तिरिति वाच्यम्।

घटद्वयवृत्तिद्वित्वस्य घटत्वव्याप्यसम्बन्धेनान्वये एकघटाभिप्रायेणापि घटावित्यापत्तेः। तस्माद् द्वित्वं द्वयोरेव पर्याप्तमेको न द्वावित्यादिप्रतीतिबलात्पर्याप्तेः प्रत्येकावृत्तेरपि समुदायवृत्तित्वं स्वीकार्यं प्रत्येकावृत्तेरपि वनत्वादेः समुदाये वृत्तित्ववत्। अन्तः करणविशिष्टब्रह्मरूपजीववृत्तिजीवत्वस्य प्रत्येकावृत्तेरेव विशिष्टवृत्तित्ववच्च।

यद्वा द्वित्वादिसमवायस्यैव तादृशत्वमेको नद्वाविति प्रतीतेः। समवायविषयताया एवानुभवाद् द्वित्वादिसमवायस्यैव च पर्याप्तिरिति नामान्तरम्।

---

त्येकेति। तेषां द्विवचनादीनां अस्य फलान्तरमाहातएवेति। अस्यार्थमाह द्वित्वेति। अन्यथा तस्य तत्वानङ्गीकारे। अपिनोभयं। नन्वेवमपि विशेषस्य समवायस्यैकत्वादुक्तदोष एवात आह समेति। लाघवात्सिद्धान्तविरोधाच्चाहतस्यैकेति। रिक्तस्तद्रूपः सम्बन्ध इत्यर्थः।

नन्वेतावतापि किं प्रकृतेऽत आह एवंचेति तथाङ्गीकारेचेत्यर्थः। इदमेव विशदयति अन्यथेति तदभाने इत्यर्थः। इष्टापत्तावाह तथाचेति। तत्सिद्धांतमाह तस्मादिति। तदीय युक्तिं खण्डयति एक इति तत्रादृष्टचरत्वनिरासायाह प्रत्येकेति पर्याप्तेरतिरिक्तसम्बन्धत्वं न। गौरवादाह यद्वेति। एवेनातिरिक्तपर्याप्तिव्यवच्छेदः। एवमग्रेपि। ता-

अन्यथा साहित्यभानाङ्गीकारेऽपि तत्र प्रत्येकधर्मयोरेव सम्बन्धितावच्छेदकतया साहित्यद्वयबोधापत्तिरिति चेन्न ।

घट इत्यादौ विभक्त्युपस्थाप्यसंख्यायाः प्रकृत्यर्थतावच्छेदकव्याप्यत्वदर्शनात्तदुपस्थाप्यसंख्यात्वावच्छेदेनैव तत्त्वकल्पनेन द्वन्द्वे तद्व्यापकस्य पदार्थतावच्छेदकस्य साहित्यस्यावश्याभ्युपेयत्वात् ।

किंचान्वययोग्यतावच्छेदकधर्मवत्त्वेनोपस्थित एव द्वित्वादेः साकाङ्क्षत्वात्तद्भानमावश्यकम् ।

किंच दत्तचैत्रौ पचत इत्यादावाख्यातोपात्तद्वित्वान्वयेऽन्वयितावच्छेदकलाभाय तद्भानमावश्यकम् । सुबुपात्तद्वित्वमेव तथेति तु न युक्तं चैत्रो मैत्रश्च गच्छत इत्यादावनन्वयापत्तेः । चशब्दस्तु न द्वित्वबोधकः कोशभाष्यादावनुक्तेः । चार्थे द्वन्द्वविधानेन द्वन्द्वाच्चशब्दस्येव द्विवचनस्याप्यनापत्तेश्चेति तन्न ।

प्रकृत्यर्थतावच्छेदकानेकधर्मवच्छिन्नान्वयेऽपि द्वित्वादेराकाङ्क्षायोग्यतयोः सत्त्वेनाक्षतेः । क्वचित्संख्यायाः प्रकृत्यर्थतावच्छेदकव्याप्यत्वेऽपि सर्वत्र तत्त्वक-

---

ल्पनात्वं प्रत्येकावृत्तेः समुदायवृत्तित्वं सच नाना औपाधिकाभिन्नो वा । एवं सति तान्त्रिकव्यवहारासङ्गतिरपि नेत्याह द्वित्वादीति अस्यावश्यकत्वमाहान्यथेति उक्तसिद्धान्तानङ्गीकारे इत्यर्थः । तदिति-विभक्तीत्यर्थः । तत्त्वेति प्रकृत्यर्थतावच्छेदकव्याप्यत्वेत्यर्थः । तदिति विभक्त्यर्थसंख्येत्यर्थः ।

ननु भिन्नव्युत्पत्तिरेव तत्रास्तामत आह किञ्चेति । तत साहित्यं । ननु उक्तरीत्या तत्रापि साकाङ्क्षत्वमत आह किञ्चेति तथा अन्वयितावच्छेदकं । पत्तेरिति द्विवचनाभावात् द्वंद्वादिति चशब्दस्यैवेति भावः । द्वित्वाद्यन्वयेत्यत्र दोषमाह प्रकृत्यर्थेति घट इत्यादावित्यत्र-

ल्पने मानाभावाच्च । मम तु न दोषः द्वित्वादिसम्बन्धस्य प्रत्येकावृत्तेरेव समुदायवृत्तितास्वीकारात्समूहस्य विशेष्यतया भानाङ्गीकारेण द्वित्वादेः समूह एव भानात् । पटावित्यादावेकशेषेऽपि द्वन्द्ववत्समूह एव विशेष्ये तदन्वयः ।

किंच साहित्यस्य विशेषणत्वे प्रमाणप्रमेयेत्यादौ सर्वस्य ज्ञेयत्वासिद्धिरेव सहितद्वित्र्यादिज्ञानेऽपि शास्त्रार्थसिद्धेः । परस्परसहितानां सर्वेषां ज्ञेयत्वमित्यर्थस्य समूहस्य विशेष्यत्व एव सिद्धेः । एकस्याप्यज्ञाने समूहाज्ञानात् । समूहस्य विशेषणत्वेऽप्येवमेव । नह्यनेकघटपटराशौ अस्य राशेर्घटपटमानयेत्युक्ते इम राशिमानयेत्यत इव सकलघटाद्यानयनं नियमेन प्रतीयते । अतएव समासस्यालिङ्गासंख्यत्वादिशङ्कापरमुक्तभाष्यं सङ्गच्छते ।

तत्र नैतद् भाष्यं समाहारविषयं तस्य वाचनिकलिङ्गैकवचनयोः सत्त्वात्, तस्याप्यपगतलिङ्गसंख्या-

---

द्दोषमाह क्वचिदिति घट इत्यादावित्यर्थः ।

भाष्यसिद्धान्तमाह ममत्विति ।नन्वेवंमपि तद्रीत्या प्रत्ययानामिति व्युत्पत्तिभङ्गोऽत आह समूहस्येति उक्तन्यायमन्यत्राप्याह घटावित्ति । यत्त्विति मते दोषांतरमाह किञ्चेति । त्यादौ गौतमसूत्रे ।ननु साहित्यस्य विशेषणत्वेऽप्युक्तरीत्या सर्वज्ञेयत्वसिद्धिरेवात आह समूहस्येति । अत्रहेतुमाह नह्यनेकेति हि यतः । कदाचित्तथा सत्वेऽप्याह नियमेनेति। अतएव समूहस्य विशेष्यत्वादेव। समासस्येति चार्थवृत्तेः समासस्य तद्वदेवालिङ्गासंख्यत्वेनाव्ययत्वं प्राप्नोतीत्याशङ्क्य स्वाभाविकत्वेन गुणवचनवद्यदसौ द्रव्यं श्रितः समासस्तस्य लिङ्गवचनाङ्गीकारेण च परिहारपरमित्यर्थः । त्वशङ्कादिपरमिति पाठः ।

ननु तत्समाहारविषयकमेवेति नेष्टार्थसाधकमत आह तत्रेति

साहित्याभावाच्च। इतरेतरयोगपदेन च समूह एव समुदायाश्रयगतलिङ्गसंख्यासाहित्योक्त्याऽवयवताद्रा-त्म्येन भानं स्पष्टमेवोक्तम्। एतावतैवोभयपदार्थप्र-धानो द्वन्द्व इति व्यवहारः। समूहस्यावयवेभ्यो भेदे-नाप्रतीतेः।

किञ्च दशसाध्योत्थापनकभारोत्थापनक्रिया त-त्कर्तृत्वं च प्रत्येकसम्बद्धमपीतरसाहित्येनैव बुध्यते, अतएवैको नोत्थापयति समूह उत्थापयतीति च प्रयोगः। तत्राद्ये एकशब्दोऽसहायपरः। एवं द्वित्वादिकमपि प्र-त्येकसम्बद्धमेव। इतरसाहित्यरूपसमूहबुद्धिश्च तद्व्य-ञ्जिका इतरसाहित्यबुद्धिरेवापेक्षाबुद्धिः। अपेक्ष्यते सा-पेक्षा समूहस्तद्विषया बुद्धिरित्यर्थः। लोके द्वावित्या-दिप्रयोगे चैकशेषं विनापि द्व्यादिशब्दानां समूहबो-धकत्वमतएव द्वन्द्वैकशेषयोश्चार्थसमूहभानाङ्गीकारा-स्तदज्ञाने तदबोधात्। स्पष्टं चेदं सरूपसूत्रे भाष्ये।

तस्य पूरणे इति सूत्रे भाष्येऽप्युक्तमन्योन्यं वा-च्यमाश्रित्य सर्वस्मिन् द्व्यादयः प्रवर्त्तन्ते इति। अ-

चार्थे द्वंद्व इत्यत्रेत्यर्थः। एतत् उक्त शङ्कायां। असङ्गत्तिरपिनेत्याहैतावतै-वेति। एवेन तत्संमतव्यवच्छेदः। अस्यार्थमाह समूहस्येति। तत्राद्ये इति एको न द्वावित्यादाविवेति भावः। एवं उक्तक्रियातत्कर्तृत्ववत् तस्य नित्यत्वपक्षे आह तद्व्यंजिकेति अतएव तत्रैवास्यान्वयः।

तत्रान्तरविरोधोऽप्यत एव नेत्याहेतरेति तच्च योगतोपीत्याहा-पेक्षेति कर्मण्यच्। ननु ततबुद्धेर्द्वित्वादिव्यंजकत्वात् द्वंद्वैकशेषान्य-तरस्य तद्वाञ्जकत्वमिति तत्र तस्यैवाभावात्कथं तद्बुद्धिरेवात आह लोके इति। चो ह्यर्थे। अतएवेत्यस्यार्थमाह तदज्ञाने इति। समूहाज्ञाने द्वित्वाद्यबोधादित्यर्थः। इदं सर्वं। अतएव लोके इत्यत्र भाष्यान्तर-संमति माह तस्येति। एवमग्रेऽपि। वार्क्षीति। तत्र यथाऽवयवस-

न्योन्यम् अन्योन्यसापेक्षम्। वाच्यं संख्येयमाश्रित्य पूरणप्रत्ययान्तपञ्चमादिप्रकृतयः पञ्चादयः सर्वस्मिन्प्रत्ययवाच्यसहिते वर्त्तन्ते। तत्र तत्संख्याश्रयसमूहस्य प्रकृतिवाचकात्तदन्तर्गतस्यैकदेशस्य प्रत्ययो वाचको यथा वार्क्षी शाखा वृक्षस्यावयव इत्यर्थः। अनेनहि तत्तत्संख्यावत्त्वेन परस्परसापेक्षसमूहप्रतीतिः स्पष्टमेवोक्ता सर्व एव द्व्यादयोऽन्योन्यमपेक्षन्त इतिच तत्रोक्तम्।

तत्र समूह उद्भूतावयवभेद एव वाच्यः। अतए पञ्चादयो नित्यं बहुवचनान्ता एव। ननु—

द्वित्वादियोनिरेकत्वं भेदास्तत्पूर्वका यतः।
विना तेन न संख्यानामन्यासामस्ति सम्भवः।

एकत्वेन विना द्वित्वादीनामुत्पत्त्यसम्भवाद् द्वित्वादीनामेकत्वं योनिः कारणं तेन विना ऽन्यासामसम्भवं दर्शयितुः भेदा इति तत्पूर्वका अभेदमूलकैकत्वपूर्वका इत्यर्थः। तस्मादेकत्वमाद्यं द्वित्वादयस्तु पदार्थान्तरसंनिधौ तत्पूर्वका जायन्ते! तदेवाह—

एकत्वे बुद्धिसहिते निमित्तं द्वित्वजन्मनि।
एकत्वाभ्यां समुत्पन्नमेव वा तत्प्रतीयते॥

एकत्वद्वयविषया बुद्धिर्द्वित्वादेः कारणं, तत्र द्रव्यस्यैव समवायिकारणत्वात्प्रत्यासत्त्यभावाच्च समवायिकारणत्वासम्भवेन तस्या निमित्तकारणत्वमेव।

---

मुदायो वृक्षशब्दार्थः। तद्घटकैकोऽवयवश्च प्रत्ययार्थः। तद्वदित्यर्थः। तत्र तस्य पूरणे इत्यत्र। द्व्यादावेव ताभ्यां विशेषमाह तत्रेति द्व्यादावित्यर्थः। आदिशब्दः प्रकारे। हरिग्रन्थमाह द्वित्वादीत्याद्युक्तमित्यंतेन। एकत्वं बुद्धिसहितमिति पाठः। सप्तम्यन्तपाठेनिमित्तशब्दो धर्मपरः। जन्मनीति विषयसप्तमीवैशिष्ट्येऽ.प वै-

समवाय्यसमवायिकारणाभिन्नं सामान्यसमाख्यया निमित्तमित्युच्यते ।

यद्वैकत्वाभ्यामेव द्वित्वमुत्पन्नमेकत्वद्वयबुद्ध्या तु तज्ज्ञानमेतदेव मीमांसकमतम् ।

द्वित्वादिस्वरूपे मतभेदमाह—

एकत्वसमुदायो वा सापेक्षे वा पृथक् पृथक् ।
द्व्येकयोरिति निर्देशे प्राप्ते रामस्तथा सति ॥

एकत्वाभ्यां नापूर्वं द्वित्वमुत्पाद्यते किन्तु तयोः समुदाय एव द्वित्वम् । तत्रावयवाश्रयो भिन्नाकारावभासः संघाश्रयश्चैकाकारावभासः । यथा वृक्षसमुदायो वनशब्देनोच्यते तथैकत्वसमुदायो द्वित्वशब्देनोच्यते। यद्वा परस्परापेक्षे एकत्वे एव द्वित्वम् । अन्त्यं दूषयति एकत्वद्वित्वपरे द्व्येकयोरिति निर्देशे एकत्वद्वयस्य द्वन्द्वविषयत्वाद्बहुवचनापत्तिस्तथाङ्गीकारे इत्यर्थः । तस्मादेकत्वाभ्यां जनितमन्यदेव समुदायरूपं द्वित्वमेवं त्रित्वादयोऽपि इत्येव न्याय्यम् ।

ननु द्वित्वादेरेकत्वाद् द्वयोर्द्विवचनमित्याद्यनुपपन्नम् । तत्रोक्तम्—

एकोऽपि गुणभेदेन संघो भेदं प्रकल्पयेत् ।

---

परीत्यं मतभेदायाहैकत्वेति द्वित्वेत्युपलक्षणमित्याह द्वित्वादेरिति तत्र कारणानां मध्ये । चो व्युत्क्रमे त्वासम्भवेन च ।

वार्थमाह यद्वेति ।तदर्थमाह द्वित्वमिति ।एवमित्यस्यार्थमाह एकत्वद्वयेति ।इदं द्वितीयपक्ष एवेत्याहैकत्वाभ्यामिति । तत्र द्वित्वे। अनेन प्रतीतिद्वयोपपत्तिः कृता । अन्यसमूहस्यान्यपदवाच्यत्वे उपपत्तिमाह यथेति ।

द्वितीयपक्षं सिद्धान्तमाह तस्मादिति प्रकोति स्वीकुर्यादित्यर्थः ।

गुणाः समूहावयवास्तेषां भेदेन स्वात्मनः॥एकस्यापि द्वित्वादभेद इति तदुपपत्तिरिति हरिणोक्तम्।

ननु पङ्क्तिविंशतीति सूत्रे भाष्ये विंशत्यादिषु प्रकृतिप्रत्यययोस्तदर्थयोश्चाज्ञानमिति प्रश्ने द्विशब्दादयं दशदर्थाभिधायिनः शतिच्प्रत्ययो द्वौ दशतौ विंशतिः विंशत्यादयो दशदर्थे . चेत्सामानाधिकरण्याभावेन विंशतिगवमिति समासानापत्तिः। विंशतिर्गाव इत्यस्य चासिद्धिः। दशतोर्द्वित्वात् द्विवचनं च प्राप्नोतीत्युक्ते सिद्धान्तिनोक्तं समुदाये एते विंशत्यादयो भविष्यन्ति कथं 'सङ्ख्'इति वर्त्तते। नच प्राणिसमूहः सङ्घ इति वृक्षाणां विंशतिरिति न सिद्ध्येत्। सङ्घः समूह समुदाय इत्यनर्थान्तरं द्वयोर्दशतोः सङ्घो विंशतिरिति।

नच विंशको गोसङ्घ इति न स्यात्। विंशतिशब्देनैव गोसंघस्योक्तत्वात्। तत्र परिमाणिनो ड्वनोऽनापत्तेरिति वाच्यम्। द्रव्याणां द्रव्यसंघस्य दशतां दशत्सङ्घस्य दशतो गवां च पारमार्थिको भेदो नास्ति केवलं बुद्ध्या परिकल्प्यते बुद्धिव्यवस्थापितार्थनिबन्धनाश्च शब्दा बुद्धिमेवार्थाकारामुपजनयन्तोऽसत्यपि वास्तवे भेदे भेदमवगमयन्तीत्यदोषात्। दशतोः सङ्घे वृक्षाद्विंशतिशब्दाद् द्रव्यसङ्घे परिमाणिनि ड्वुन्न सिद्धेः। वास्तवमभेदमादाय सामानाधिकर-

---

"इत्युक्तौ भाष्यविरोधमाह नन्वित्यादिना चेदित्यंतेन। शतिच् स्वार्थे प्रकृतेर्विंनादेशः। चो व्युत्क्रमे तेवोध्यौ सङ्घइति यतइत्यादिः। इतिः सिद्धांत्युक्तिसमाप्तौ। तदाशयमाह नचेत्यादि। तत्र तस्मिन्. द्रव्याणां द्रव्येति पाठः। असत्यपीति भेदे इति च च्छेदः। दोषमेवाह दशतो रि-

एवं च सिद्धं विंशतिर्गाव इति। गवां दशतश्च तात्त्विकभेदाभावाद्गवामपि दाशतसङ्ख्यागुणित्वेन गुणिनागुणविशेषणे गवां विंशतिरिति षष्ठी। समुदायाभिधाने समुदायस्यैकत्वादेकवचनं सिद्धम्। सामानाधिकरण्येऽपि विंशतिर्गाव इत्यादौ विंशतिसंख्या समुदितद्रव्यसमवायिनी नतु प्रत्येकं समाप्तेति गावो धनमित्यादिवत्तद्गतैकत्वस्य विशेष्ये आरोपेणैकवचनासिद्धिरतएव द्रव्यगतलिङ्गसंख्यानानुवृत्तिः।

प्राक् शतादेषां स्त्रीलिङ्गत्वमेकवचनान्तत्वं च। शतस्य तु नपुंसकत्वम्। विंशती विंशतयः इत्यादि त्वेकशेषे साध्वेवेति कैयटः। तदुक्तं भाष्ये त एत विंशत्यादयः समुदाये सन्तो भाववचना भवन्ति। भाववचनाः सन्तो गुणवचना भवन्ति, गुणवचनाः सन्तोऽविशिष्टा भवन्त्यन्यैर्गुणवचनेषु कदाचिद् गुणो गुणिविशेषको भवति, यथा पटः शुक्ल इति कदाचिद् गुणिना गुणो विशेष्यते पटस्य शुक्ल इतीति भाववचनत्वं संहननक्रियावचनत्वात्। गुणवचना इत्यस्य तत्साहश्यात्तच्छब्दव्यवहार्या इत्यर्थः। गुणवचनाः

---

ति गाव इतीति इदमुपलक्षणं समासस्यापि। तृतीयफलमाह गवामिति मिथ इति शेषः। अपिना दशतः।

तृतीयदोषमवशिष्टं परिहरति समुदेति विशेषमाह सामेति तत्संख्याविशेष्ये द्रव्ये। अतएव तस्य तत्रारोपादेव। अस्याः फलमाह प्रागिति उत्तरान्वयी एषां विंशत्यादीनां पूर्वत्राप्यस्यान्वयः। शते एकवचनस्य सत्त्वादाह शतस्येति। नन्वेवं द्विवचनाद्यसिद्धिरत आह विंशतीति।

उक्ते भाष्यसंमतिमाह तदुक्तमिति। इतिर्भाष्यसमाप्तौ। अत्र भावः

सन्त इत्यादिना तत्साहश्योपपादनात् । अतएव गोविंशत्यादिषु षष्ठीसमाससिद्धिः । गुणवाचित्वे हि पूरणगुणेति निषेधः स्यात् । मुख्यगुणत्वेन कैयटादिकृतो व्यवहारस्त्वसङ्गत एव । भाष्यविरोधात् ।

एवंच विंशतिद्रव्यसमुदाय एव विंशतित्वमिति भङ्ग्यन्तरेण प्रकृतिप्रत्ययविभागबोधनायोक्तम् । तथाच द्व्यादयोऽपि तत्तद्द्रव्यसमूहवचना इत्युक्तमेव । असमूह एव चैकत्वम् ।

आहोत्सूत्रे भाष्येऽपि भेदमात्रं संख्या आहेत्युक्तं । भेदो वैलक्षण्यमिति कैयटः । एकत्वस्याभेदबोधकत्वात्तथा व्याख्यातम् । तदुक्तं हरिणा—

भेदाभेदविभागोऽपि लोके संख्यानिबन्धनः । इति द्वित्वादि भेदव्यवहारकृदेकत्वमभेदव्यवहारकृदिति हेलाराजः । विलक्षणविलक्षणसमूहरूपत्वं च द्व्यादय आहुः । असमूहरूपत्वं चैकशब्द आह । एवंच हरिणा कथमेकत्वसमुदायरूपत्वमुक्तमिति चेत् ।

---

क्रियेत्याह भावेति संसर्गाद्यर्थमाह संहननेति । गुणवचनत्वं तु वास्तवमित्याह गुणेति । आदिनान्यैर्गुणवचनैरिति । अवैलक्षण्यं च गुणगुणिनोरिवैतत्क्रियाक्रियवतोर्भेदो । आदिना क्रोशशतयोजनशतादि ।

भाष्यं यथाश्रुतार्थे तु न सर्वथा गावो धनमित्याद्युपक्रम्य धनमेको गुणोऽपत्यमेको गुण इत्यस्यापि भाष्ये उक्तत्वेन चैत्रधनचैत्रापत्यमित्यादेः समासस्यासाधुत्वापत्तेः । मुख्येति संख्याया इत्यादिः । भाष्येति साहश्योपपदकभाष्येत्यर्थः । एकादशान्तानां नित्यं संख्येयतया तत्र षष्ठीसमासाप्राप्तिरिति भावः । भाष्यतात्पर्यमाहैवंचेति विंशतीति । प्रकृतमाह तथाचेति । उक्तमेवोक्तप्रायमेव सहस्रादिवत् मात्रमवधारणे । नन्वेवं न्यूनताऽतआहैकत्वेति । ननु द्व्यादेः समूहवचनत्वे पर्यायतापत्तिरत आह विलक्षणेति द्रव्यसमूहेत्यर्थः ।

सत्यम् ।

परमतेन तथाभिधानात् । अतएवोपक्रमे—

संख्यावान्सत्त्वभूतोऽर्थः सर्व एवाभिधीयते ।

स धर्मो व्यतिरिक्तो वा तेषामात्मैव वा तथा । इत्युक्तम् । सधर्मः संख्यारूपो धर्मः व्यतिरिक्त इति वैशेषिकमते । तेषां हि द्रव्याश्रिता गुणरूपा संख्या । स्वमतमाह तेषामात्मैवेति । तेषां सत्त्वभूतार्थानां समूहस्य समूहिभिरत्यन्तभेदाभावादात्मैवेत्युक्तं । तथा संख्यात्ववान् । असमूहरुपमेकत्वं समूहरूपं द्वित्वादि । तत्रैव संख्यात्वस्याप्यङ्गीकारेण समूहप्रत्ययापेक्षया विलक्षणः प्रत्यय उपपन्नः । एतेन पदार्थमात्रादनुपाधेर्विलक्षणप्रत्ययानापत्तिरित्यपास्तम् । संख्यात्वस्य समूहरूपत्वस्य चोपाधित्वाद् इति पुञ्जराजादयः ।

तत्र द्व्यादावनुद्भूतावयवभेदः स संख्या, तद्विपरीतश्च तदाश्रयः । यद्वा समूहत्वेनाधारता द्वित्वत्वेन चाधेयता संख्यागतैकत्वस्य तु विशेष्येऽनारोपः शब्दशक्तिस्वभावात । दशच्छब्दश्च दशसंम्बन्धिसमूहबोधकः । अनुद्भूतावयवभेदः स विशेष्यः समूह-

---

नन्वेतावता प्रकृते किमत आहैवंचेति । तदिष्टमेवेदमित्याहात एवेति । तेनैव पुंजराजादिग्रन्थमाह सधर्म इत्यादि । नन्वेवं समूहप्रतीतितो विलक्षणद्वित्वादिप्रतीतिर्न स्यादत आह तत्रैवेति समूहे एवेत्यर्थः । मात्रव्यवच्छेद्यमेवाहानुपाधेरिति । एतेनेत्यस्यार्थमाह संख्येति । विशेषमाह तत्रेत्यादि । तत्र तथा सति । सः सत्समूहः । विपेति उद्भूतावयवभेद इत्यर्थः । त त्संख्या ।

तथाऽप्रतीतेरेव यद्वेति दोषं परिहरति संख्येति एवमन्यत्राप्याह दशदिति । ननु स्वभेदकत्वं स्वस्याः कथमत आह संख्याचेति ।

त्वेन च विशेष्यता। संख्या च सर्वपदार्थभेदिका। स्व-स्यापि भेदिका गुणक्रियादिभेदिका च।

क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका।

इत्युक्तेः। एकविंशत्यादयोऽपि संख्यान्तराण्येव न संख्यासमूहः। संख्या कार्यानापत्तेः। स्वाङ्गसमुदाया-दौ स्वाङ्गादिकार्याभाववदित्यलम्।

एवं चेतरेतरयोगे साहित्यं विशेषणमिति सूत्र-भाष्याद्यसंमतम्। एतेनोपस्थितधवखदिरयोरेव छि-त्वान्वयः। एकक्रियान्वयित्वस्यैकबुद्ध्यवच्छिन्नत्वरूप-स्य वा साहित्यस्य पश्चादेव भानेन तत्र वृत्तिकल्प-नाया अनौचित्यात्। अन्यतरस्यान्यतरत्रान्वयावित्र-क्षायां पश्य धवखदिरौ छिन्धीति तु न, असामर्थ्येन समासाप्राप्तेः। एकरूपेणैकविशेष्यान्वयित्वरूपसाम-र्थ्यस्यैव द्वन्द्वनिमित्तत्वात् द्वित्वरूपैकधर्मावच्छिन्नयो-रेकत्रान्वयस्यैवौचित्याच्च। कृतः सर्वो मृत्तिकयेत्या-दावेवं रीत्या समासो नानभिधानात्।

---

स्वेत्यादेर्व्याख्या स्वस्यापीति संख्यात्ववत्समूहस्यापीत्यर्थः। तत्र द्रव्यभेदकत्वस्य सर्वेषां निर्विवादत्वेनोक्तदृष्टान्तसूचनायाह गुणेति विशेषान्तरमाहैकेति। एतेन तद्रूपत्वं तस्येति उक्तभाष्यात्तस्य समूह-रूपत्वे समूहः समूहिषु समवायीति स्वान्वये स्वयमन्वयीति महती दुरवस्थेति चापास्तं। एकस्यैव पदार्थस्य समूहत्वेनान्वयित्वं द्वि-त्वत्वादिना च विभक्तिवाच्यतेत्यदोषात्तत्राहेत्यलमिति।

दीक्षिताद्युक्तिखण्डनमुपसंहरति। एवञ्चेति तथा भाष्यादिसि-द्धान्ते चेत्यर्थः।

नव्यनैयायिकाद्युक्तिं खण्डयति एतेनेति तस्य तदसंमतत्वेनेत्य-र्थः। एवेन साहित्यव्यवच्छेदः। लाघवादाहैकबुद्धीति तत्र साहित्ये तथा सति दोषं परिहरति अन्येति। ननु व्यपेक्षा तत्राप्यस्त्येवात

किंच नात्र द्वन्द्वः एकरूपेण तथान्वयाभावात् । नापि तत्पुरुषस्तत्र तथा सामर्थ्यग्रहणे मानाभावा-त् । चार्थे द्वन्द्व इत्यस्य चार्थे सति यथाविशेष्यान्व-यस्तथा विशेष्यान्वये सति द्वन्द्व इत्यर्थः । समर्थसूत्रे च तन्त्रेणोभयविधसामर्थ्यग्रहणं । परन्तु व्यवस्थितं । समु-च्चयान्वाचययोस्तु न समासोऽनभिधानात् । क्षौमे वसानावग्निमादधीयातामित्यादौ सहितयोरधिकार-लाभस्तु यत्कर्त्तृकं तदनया सहेति वाक्यात् इत्यपा-स्तम् । तदुक्तसूत्रार्थस्याशाब्दत्वाच्च ।

धवखदिरावित्यादौ प्रत्ययानां प्रकृत्यर्थान्वयित्वे-न विभक्त्यर्थानन्वयापत्तेश्च । संनिहितार्थबोधकत्व-मिति तु बहुव्रीहिप्रकरणे दूषितम् । धवे द्वित्वानन्व-यापत्तेश्च । न चानुशासनिकसन्निधानग्रहणेन यदु-त्तरं यः प्रत्ययोऽनुशिष्टः स तद्घटकार्थतदर्थैतदन्यतरग-तस्वार्थबोधक इति धवेऽप्यन्वयो, योग्यतादेर्नियाम-यामकत्वाच्चार्धपिप्पलीं राजपुरुषं पश्येत्यादौ न

---

आहैकेति तदनङ्गीकारेऽप्याह द्वित्वेति । अतिप्रसङ्गं तथा सति निरा-चष्टे कृत इति । अत्र कृतः सर्वेत्यादौ । तथेति एकविशेष्येत्यर्थे तथेति तत्पुरुषे एकरूपेत्यादि सामर्थ्येत्यर्थः । किन्तु व्यपेक्षारूपमेव तत्रेति भावः ।

ननु सूत्रात्कथं तल्लाभोऽत आह चार्थे इति । नन्वेवमपि व्यपेक्षा-वादिनां कथमिदमत आह सूत्रेऽथेति । नन्वेवमप्यति प्रसङ्गोऽत आह परंत्विति । व्यपेक्षाकृतातिप्रसङ्गं निराचष्टे समुच्चेति । नन्वेवं क्षौम इत्यादौ समुच्चितयोरधिकारो न स्यात्तेन रूपेणानुपस्थितेरत आह क्षौमे इति उक्तरीत्या तद्बोधसिद्धावपि युक्त्यंतरमविप्रतिपन्नमाह य-दिति दोषांतरमाह त्वदुक्तेति इत्यादावित्थस्याग्रेऽन्वयः । तत्र हेतुः प्रस्येति । इमं दोषमुद्धरति नचेति । नन्वेवमनिष्टमपीत्ययोग्यंति आदि-

द्योव इति वाच्यम् । व्युत्पत्त्यन्तरकल्पने गौरवात् एकरूपेणैकक्रियान्वयित्वसमानियतसमस्यमानपदार्थसमूहभानानुरोधेन वृत्तेरावश्यकत्वाच्च । अतएवात्र विग्रहवाक्ये इव चादिप्रयोगो नेत्युक्तम् ।

चार्थे द्वन्द्व इति त्वनेकमन्यपदार्थ इतिवच्छक्तिग्राहकमेव । एतेन चार्थे इत्यस्यैकक्रियान्वयित्वरूपसाहित्ये सति द्वन्द्व इत्यर्थ इत्यपास्तम् । एकक्रियान्वयित्वे चशब्दशक्तेरभावाच्च । अग्नीषोमावित्यादौ समुदितस्य देवतात्वाद्यत एव सङ्गच्छते ।

नच चैत्रो मैत्रश्च गच्छत इत्यादावाख्यातोपात्तसंख्यान्वयाय चार्थसमूहस्य विशेष्यत्वाय च चस्य तद्वाचकत्वं वाच्यम् । एवंच चैत्रस्य मैत्रस्य च समूह इत्यत्रेव षष्ठ्यापत्तिरिति वाच्यम् । तदात्मकत्वेन समूहप्रतीत्या भेदनिबन्धनषष्ठ्यप्राप्तेः । सच समूहः क्वचिद्वास्तवः क्वचिद्बौद्ध इत्यन्यत् ।

---

ना आकांक्षा । अत्र द्वंद्वे ।

नन्वेवं सूत्रवैयर्थ्यमत आह चार्थे इति । एतेन तस्यावश्यकशक्तिग्राहकत्वेन । दोषांतरमाहैकेति । फलांतरमाहाग्नीति । अतएव विशेष्ये समूहे शक्तेरेव । तस्योक्तरीत्यासंभवादाह चार्थेति । समूहस्य शक्यत्वमन्यत्राप्यावश्यकमित्याह पुष्पेति । अतएवेति अन्यथा तदन्वयानुपपत्तिः स्पष्टैव । इत्यस्येति अवयवावयविभावः षष्ठ्यर्थः ।

तांतोऽदंतोवेति अतएव पुष्पविकसने भावे घञ् पुष्पौ विकासः प्रकाशश्च तद्वन्तौ मतुप् एकयोक्त्या साधारणवचनेन प्रत्येकं पुष्पवानिति प्रयोक्तव्यमिति भावः । अकारांतोऽपि पुष्पवंतशब्दः अव रक्षणे सूविशिभ्यां झाञ् वाहुलकादवतेरपि झञ् झोन्तः पुष्पस्यावंताविति विग्रहः । .शकन्ध्वादित्वात्पररूपं रविशशिनौ पुष्पवन्ताख्याविति नाममाला । तथाच पुष्पवन्ताभ्यां पुष्पवन्तयोरित्यादीति त-

पुष्पवन्तादिपदेऽपि समूहः शक्योऽत एव द्वित्वान्वयः। पुष्पवन्तावित्यस्य प्रकृतिस्तान्ताऽदन्ता वा एकधोक्त्या पुष्पवन्तौ दिवाकरनिशाकराविमरे द्वन्द्वेन पर्यायप्रदर्शनात्पुष्पवन्तावित्यत्र द्विवचनोच्चारणाच्चैकधोक्तयेत्युक्तेश्च। समूहस्य शक्यतायाः स्पष्टमेव लाभात्। पुष्पवन्तपदं चन्द्रसूर्यसमूहं शक्तमित्याकारः शक्तिग्रहोऽतो न तत एकतरमात्रबोधो नापि शक्यस्यानन्त्यम्।

यत्तु भेदश्चार्थ इति तन्न। तद्बोधाननुभवात्। केन क्वापि तदर्थाप्रतीतेश्च। चार्थः साहित्यं परं भिन्नानामित्यन्यत्। शिवरामयोरभेद इत्यादौ तत्तदुपाधिकृतभेदवतोरेवोपाधीनामैक्येऽभेदप्रतिपादनान्न विरोधः। समूहश्च समूहिभ्यो भिन्नाभिन्न इति निरूपितम्।

सहिताभ्यां कृतमित्यादेः समूहबुद्धिविषयाभ्यां कृतमित्यादि क्रमेणार्थः। धवखदिरौ छिन्धि इत्यादौ क्रियान्वय एव समूहस्य। क्रियोत्पत्तिस्तु समूहेऽसंभवात्प्रत्येकमेव। एवं पित्रोः श्राद्धं कुर्यादित्यादावपि। इदमेवाभिप्रेत्य तुल्यवदेकक्रियान्वयित्वं साहित्यमिति प्राञ्चः। यथा तुल्ययोरेककालमेकधर्मसंबन्धानीति व्याख्यातारः। तस्य शक्यत्वं तादृशमित्याहैकेति वक्ष्यमाणदोषाभावायाह पुष्पेति द्वितीयमतेनेदम्।

नयाग्रिकायुक्तिं खण्डयतियत्त्विति एवं सति प्रसक्तविरोधं परिहरति शिवेति। विरोध इति साहित्यत्यादेः। वक्ष्यमाणरीत्या यथाश्रुतासङ्गतेराह सहीति। आदिना सहितौ दृष्टौ सहितेभ्यो दत्तं सहितयोरन्वय इत्यादि। तदन्वयस्य तदुत्पत्तेश्च साम्यमाहैवमिति तमिति बहु-

त्वकं तुल्यप्रधानताद्विना तुल्यत्वासंभवात् तथैककालमेकक्रियान्वयित्वनिमित्तं साहित्यं समूह इत्यक्षरार्थः।

समुच्चयान्वाचययोस्तु न समासः। ईश्वरं गुरुं च भजस्वेत्यादौ समुच्चये एकस्यान्यसाहितस्यान्वयित्वनिमित्तसाहित्येऽप्येकस्य केवलस्यैवैकधर्मावच्छिन्नान्वयेन चार्थेऽनेकसुबन्तस्य वृत्त्यभावात्। एकधर्मावच्छिन्न इत्युक्तेर्वस्तुनो भजनस्य भिन्नत्वेऽपि न दोषः। अत्रैकस्य केवलस्य क्रियान्वयोत्तरमपरस्यान्यसहितस्यावृत्त्या तदन्वयः। स च विशेष्यतया विशेषणतया वा आद्ये देवः पचति हसति चेत्यादौ। अन्त्यस्तूक्ते समुच्चये।

चैत्रो मैत्रश्च पचतीत्यादौ नित्यमेकवचनान्ताख्यातप्रयोग एव। चरहितस्य केवलस्यैवान्वयात्। चसहितेनाप्यनुद्भूतावयवभेदसमूहस्यैव प्रतीतेः। किंचात्र समासे एकपदोपस्थाप्यसमूहस्यैककालमेवेतरान्वयस्य पुष्पवन्तादौ क्लृप्तत्वेन समुच्चयत्वस्यैव भङ्गापत्तिः।

---

व्रीहिः। तथाचैकरूपेणैककालिकैकपदोपस्थाप्यक्रियान्वयित्वसमनियतम् पदार्थांतरमेव समूहापरपर्यायमिति रिक(!)विशिष्टवत् इति बोध्यम्।

सिद्धांते नातिप्रसङ्ग इत्याह समुच्चेति। तत्राद्ये हेतुमाहेश्वरमिति अत्र समुच्चये। एकस्येश्वरस्य। अपरस्य गुरोः। एवंप्रागपि तयोः प्रथमान्यार्थकत्वात् सकृदिति व्युत्पत्त्यविरोधायाहावृत्त्येति। तत्र विशेषमाह सचेति इत्यादौ क्रियासमुच्चये प्रसंगात् अन्त्यं विशेषमाह समुच्चेति आद्ये आह चरेति। द्वितीये आह चसेति।

समुच्चयसमासाभावे युक्त्यंतरमाह किंचेति। अत्र समुच्चये

अतएव भिक्षामट गां चानयेत्यन्वाचयेऽपि न समासः। अत्र चकारसमभिव्याहृते आनुषङ्गिकत्व-मितरसाहित्यं च भासते। आनुषङ्गिकत्वं चान्यनि-ष्पादकयत्ननिष्पाद्यत्वमेवं च तद्व्याप्यत्वं फलति। एवं चा-नुषङ्गिकं भिक्षाटनसाहितं गवानयनमिति बोधः। प्रा-येणान्वाचयश्चास्य क्रियान्वये भवति।

यत्र तु क्रियान्वय्यपि चद्वयं यथा पचन्ति च हस-न्ति चेत्यादौ तत्र परस्परसाहित्यावगमान्नानुषङ्गिक-त्वप्रतीतिः। एवं समुच्चये चसमभिव्याहृतस्य किंचि-दप्राधान्यं प्रतीयतेऽतएव समकक्षयोरेकस्य समुच्चयत्वे दुःखं दृश्यते।

इतरेतरयोगे तु मिलितस्यैकधर्मावच्छिन्नेतरान्व-यः। धवखदिरौ छिन्धीत्यादौ तथैवानुभवात्। मेल-नं च समूहरूपता अतएव तद्विग्रहवाक्ये चद्वयप्रयो-गः। तेन ह्यन्योन्यस्मिन्नन्योन्यसाहित्यङ्गम्यते तेन समूहरूपतासिद्धिः। अतएव चैत्रश्च मैत्रश्च पचत इ-त्यादौ नित्यं द्विवचनाद्यन्ताख्यातप्रयोग एव। एकै-कत्वेन द्वित्वादेर्विरोधेऽपि समूहबुद्धिविषयगतनानैक-त्वैरविरोधात्।

एकधर्मावच्छिन्नेत्युक्तेरजां ग्रामं नयतीत्यादौ न समासः। क्वचिदेकचकारप्रयोगेऽपि प्रकारान्तरगृहीत-

---

अस्याग्रेऽन्वयः। तत्र हेतुरेकयेति। द्वितीय आहातएवेति उक्तयुक्ति-द्वयादेवेत्यर्थः। अत्रान्वाचये प्रायेणेत्यस्य फलमाह यत्रत्विति। एवं अन्वाचये एव तेन चद्वयप्रयोगेण। अत एव तस्य तदन्वयादेष अग्रे-ति शेषः। नन्वेकत्ववत्तयोपस्थिते कथं द्वित्वाद्यन्वयोऽत आहैकैक-त्वेनेति। विशेषमाह क्वचिदिति। एवमग्रेऽपि प्रकारांतरेति प्रकरणादी-

तात्पर्यवशात्परस्परसाहित्यावगतिर्भवत्येव । यथा सांकाश्यकानां पाटलिपुत्रकाणां च पाटलिपुत्रका अभिरूपतमा इत्यादौ । स्पष्टं चेदं द्विवचनविभज्योपपदे इत्यत्र भाष्यकैयटयोः ।

एवं क्वचिच्चकाराभावेऽपि तत्प्रतीतिर्यथाऽहरहर्नयमानो गामश्वं पुरुषं पशुमित्यादावहरहः पदसमभिव्याहारात्तत्प्रतीतिः । क्वचित्तु चद्वयसत्त्वेऽपि न तत्प्रतीतिः वाक्यालङ्कारमात्रार्थत्वात्तयोः, यथा यदग्नये च प्रजापतये चेत्यादौ । मन्त्रलिङ्गेन तत्र प्रत्येकं देवतात्वस्यैव प्रतीतेः । समाहारेऽनुद्भूतावयवभेदः समूहो विशेष्योऽतएव तत्रैकवचनं सिद्धं । द्वन्द्वश्च प्राणीत्यादिप्रकरणं तु नियमार्थमिति भाष्ये स्पष्टम् । पाणिपादं वादयेत्यादौ वादनकर्मत्वन्तु वस्तुतस्तस्य पाणिपादाभिन्नत्वाद्बोध्यम् ।

यत्तु अत्र समाहारो न भासते, द्विवचनादि त्वनुशासनेनासाधुत्वबोधनान्नेति । तन्न । सर्वत्र तद्बाधका-

---

त्यर्थः ।

तदन्यत्रापीत्याहैवमिति । तत मिथः साहित्यं । तदेव स्पष्टयति यथेति । नन्वेवं यदग्नये चेत्यादौ मिथः साहित्यावगमात्समुदितस्यैव देवतात्वं स्यादत आह क्वचित्त्विति । अर्थः प्रयोजनं । तत्रबीज माह मन्त्रेति । नन्वेवं प्रकरणवैयर्थ्यमत आह द्वंद्वश्चेति । नन्वेवमपि समूहस्य कथं तत्कर्मत्वमत आह पाणीति । तस्य समूहस्य ।

नव्यनैयायिकोक्तिं खण्डयति यत्त्विति । अत्र पाणिपादमित्यादौ पदार्थमात्रप्रतीत्या शक्तिलक्षणयोरभावात् । नन्वेवं पाणिपादानेकत्वात्तद्द्विवचनाद्यापत्तिरत आह द्वित्वेति । द्वंद्वश्चेत्यादेर्विधायकत्वमतेनाह सर्वत्रेति संज्ञापरिभाषमित्यादौ तदभावादिति भावः । तदितिसिद्धांनमेतनाहैकेति । अपूर्वविधायकत्वाङ्गीकार आह समेति । पा-

नुशासनाभावात्। एकवचनविधायकाभावात् समाहारद्वन्द्वगर्भेतरेतरयोगे द्विवचनानापत्तेश्चेत्यलम्।

स्यादेतदहरहर्नयमानो गामश्वं पुरुषं पशुमित्यादौ इन्द्रो वरुणस्त्वष्टादित्य एते लोकपाला इत्यादौ च चार्थसंप्रत्ययाद्द्वन्द्वः प्राप्नोति चार्थे चशब्दस्य द्वन्द्वस्य चेत्युभयोरेव साधुतायाः शास्त्रेण बोधनात्। आद्येऽहरहरित्यनेनान्त्ये लोकपाला इत्यनेनेतरेतरयोगप्रतीतेः।

ननु युगपदधिकरणवचने द्वन्द्व इतिन्यासेन न दोषः। अधिकरणं वर्त्तिपदार्थौ तयोर्युगपत्पदद्वयेनाभिधाने द्वन्द्व इति तदर्थः। एवंच रामकृष्णावित्यादौ रामपदेन रामकृष्णयोः कृष्णपदेन च तयोरभिधानाद्भवति द्वन्द्वः। गामश्वमित्यादौ तु गवादयो भिन्नैः शब्दैरेकैकरूपा एव पृथक्प्रत्यायन्त इति न दोषः।

विरूपाणामित्येकशेषस्तु नात्र द्वन्द्वविधिसामर्थ्येन समानार्थानामिति सामर्थ्येन च युगपदधिकरणतां विनापि समानार्थतायामेवैकशेषात्। पट्वीमृद्व्यावित्यत्र पुंवत्वमपि न,वृत्तेः प्रागपि यत्र सामानाधिकरण्यं तत्रैव

---

णिपादं रथिकाश्वारोहावित्यत्रेत्यर्थः। एतदेवाभिप्रेत्यार्थचतुष्टयानुस्यूतं साहित्यमेव चार्थ इति वृद्धाः। एतेनोभयपदार्थप्रधानो द्वंद्व इति द्वंद्वलक्षणमित्यपास्तं समाहार द्वंद्वेऽव्याप्तेस्तदाहेत्यलमिति।

सर्वत्रैकार्थीभावांगीकारे समर्थसूत्रे च तस्यैव ग्रहणे चार्थे द्वंद्व इति सूत्रभाष्यविरोधपरिहारं सूचयन् तत्रत्यमेव क्रमेणाह स्यादेतदित्यादिना दिगित्यंतेन। इत्यादौ असमासे यथान्यासेऽयं दोषइत्याह चार्थेति। एवञ्च चशब्दाघटितं वाक्यमसाध्वेव स्यात्तदाह चार्थे इति।

नन्वेवं घटकुम्भाविति वद्विरूपाणामपीत्येकशेषेण बाधात् द्वन्द्वस्यासाधुतापत्तिरत आह विरूपेति। अत्र रामकृष्णावित्यादौ। तत्रैव अ-

तत्प्रवृत्तेः। सहभूतयोरेव युगपदर्थद्वयबोधसामर्थ्यमिति नान्यतरवैयर्थ्यं। द्वन्द्वविषये चैतदतः केवलरामपदाद्रामं कृष्णंचेति वाक्यघटकाच्च नोभयबोधः।

वेदेतु क्वचिद्वाक्येऽपि सा द्यावाह क्षामेत्यादौ। एकैकेनार्थद्वयाभिधानेऽपि तिष्यपुनर्वस्वोरिति सूत्रस्थबहुवचनस्येत्थनेन सर्वो द्वन्द्वो विभाषैकवद्भवतीति ज्ञापनात् पक्षे धवखदिरमित्यादिसिद्धिरिति चेन्न। सेयं युगपदधिकरणवचनता दुःखा च दुरुपपादा चेत्यादिना भाष्ये एव तस्या दूषितत्वात्। तत्र दुःखत्वं प्रतीत्यनुपारोहात्।

तथाहि वृद्धव्यवहाराद्धि शब्दार्थनिर्णयः। नच प्लक्षशब्दस्य न्यग्रोधाभिधायित्वं लोके दृश्यते नच प्लक्षशब्दस्य लक्षणा न्यग्रोधशब्देनैव तल्लाभाद् द्विवचनाद्यन्तप्रयोगस्यान्यथासिद्धेश्च समूहस्यावयवापेक्षद्वित्वादिमतः समुदायात्प्रतीतेः। दुरुपपादेत्यस्य दुष्टं निःसारमुपपादनं यस्याः सा निष्प्रमाणेत्यर्थः।

नच द्यावाह क्षामेत्यादौ व्यासे दर्शनात्समासेऽपि सेति वाच्यम्। तस्य च्छान्दसत्वेन तत्र सुपां सुप इत्येव सिद्धिः। नच समासाद् द्विवचनबहुवचनोत्प-

---

न्यथा दर्शनीयामातेत्यत्रापि तदापत्तेः। एतत् युग्मपदार्थद्वयबोधनसामर्थ्यम्। चेति पर्यंत शेषः। अन्यथा प्रत्येकं द्विवचनापत्तेः। सा युगपदधिकरणवचनता नन्वेवं धवखदिरमित्यादि पाक्षिकं न स्यादत आह एकैकेनेति। तत्र तयोर्मध्ये। हि यतः। नच नहि। अन्यथासिद्धौ हेतुमाह समूहेति। आदिना द्यावाचिदस्मै पृथिवी सन्नमेते इति दर्शनादिति मिथः साहचर्येण तदित्यादिः। तस्य द्यावाह क्षामेत्यादेः।

त्यर्थे तद्‌द्योतकता। पूर्वमुपपादितत्वात् । समुच्चया-न्वाचययोः समासाभावार्थमपि न सा । उक्तरीत्याऽ-सामर्थ्येनैव तत्र समासवारणात् । आङ्गश्च वाङ्गश्च कालिङ्गश्चेति अङ्गवङ्गकलिङ्गा इत्यादौ तद्राजस्य बहुषु तेनैवास्त्रियामिति लुक् तु तद्राजप्रत्ययार्थे समुदायगत-बहुत्वविवक्षायान्तद्राजप्रत्ययस्य लुगित्यर्थात्तं विना-पि सिध्यतीति चेत्सत्यम् ।

चेन कृतस्यार्थस्याभावात्समासाप्राप्तेरिति भाष्ये एव समाधानात् । यत्र विग्रहे चेन बोध्यं साहित्यं त-त्रैव द्वन्द्वो नचात्र तथा । अहरहरादिपदसमभिव्याव-हारेण तस्य तत्र बोधेऽपि चकाराबोध्यत्वात् । उक्तार्थ-त्वाच्च तत्र चकाराप्रयोग इति दिक् ।

उपदशं दन्तोष्ठम् । दशसमीपो दन्तोष्ठसमाहार इति बोधः । समाहारे दशसमीपत्वं च स्ववृत्तिदशत्व-संख्यासमीपसंख्यावदवयवकत्वेन । अत्र बहुव्रीहेर्ना-नुप्रयोगस्तस्य नित्यबहुवचनान्तत्वेन दन्तोष्ठमित्यने-नान्वयायोग्यत्वात् ।

इतिद्वन्द्वः ।

---

कैयटाद्युक्तिं खण्डयति समुच्चयेति । नन्वेवमङ्गवङ्गकलिङ्गा इ-त्यादौ तद्राजस्येति लुङ् न स्यात् तद्राजप्रत्ययार्थगतबहुत्वविवक्षा-यां तद्राजस्य लुगित्यर्थात् । नहि तां विना प्रत्येकतद्राजार्थे बहुत्वा-न्वयस्तस्य व्यासज्यवृत्तित्वादत आहाङ्गश्चेति तां युगपदधिकरण-वचनतां प्राप्तारनीति पाठः । प्राप्तेरिति पाठे समाधानेनाभेदान्वयः । चस्त्वर्थे एवंच न तस्यासाधुत्वं तदाहेतिदिगिति । सङ्ख्यासमीपे-ति सङ्ख्याप्रतियोगिकसामीप्यवत्सङ्ख्येत्यर्थः ।

इतिद्वन्द्वः ।

अथैकशेषः ।

घटावित्यादावपि घटद्वयादिसमूहो घटशब्दार्थः । एकशेषात् । एकशेषविधायकं च सरूपाणामेकशेष एकविभक्ताविति सूत्रम् । तच्च द्वन्द्वे इत्यनुवर्त्तनाद् द्वन्द्वविषयम् । तेन तत्र शिष्टस्य 'शिष्यमाणं लुप्यमानार्थाभिधायी'ति न्यायेन लुप्यमानार्थवृत्तिता समूहवृत्तिना चात एव तत्र द्वित्वाद्यन्वयः ।

ननु तन्त्रेणैवेदं सिद्धं तथाहि द्विविधं तन्त्रं शब्दतन्त्रमर्थतन्त्रं च । तत्र केचिद् अर्थभेदाच्छब्दभेद इति मते सकृत्ताल्वोष्ठपुटव्यापाराद्विनिगमनाविरहेणानेकशब्दानां भेदापह्नवेनोच्चारणमित्याद्यः । तत्र तदर्थान्वयिसमभिव्याहृतैकपदप्रयोगे तत एव तात्पर्यग्राहकात्प्रायः प्रातिपदिकानामेव तन्त्रमिति श्रोतुः स्वेकवृन्तगतानेकफलन्यायेनानेकशब्दैकानुसंधानेन क्रमत्वादिवैशिष्ट्येनानेकार्थसमूहबोधः । यथाऽक्षान्पश्येत्यादौ । विद्वन्मानसेत्यादावेकशब्दस्यैकानुसंधानेनैवानेकार्थबोधः । समस्ततयैकदेशस्थानेकस्यैकानुसंधानासंभवात् । यद्वा तत्राप्यस्त्वनेकस्यैकानुसंधानमेव । विद्वन्मानसमानसेति ।

यत्र तु सुखिते दुःखिते चेतसि दवदहनराशिस्तुहिनदीधितिरित्यादावेकानुसंधानेन विरुद्धार्थयोर्युगपद्बोधासंभवस्तत्र वक्ता श्रोतुः शब्दद्वयानुसंधानद्वयं भ-

---

अथैकशेषः ।

तेन तस्य द्वन्द्वविषयत्वेन । तत्र एकशेषे । प्राचीनादिमत माह तथेति तन्त्रविषये इत्यर्थः । तत्र आद्यविषये विशेषमाह विद्वदिति । पूर्वे-

वर्तिष्यति तात्पर्यमेकोच्चारणेऽपि श्रोतुरनुसंधानद्वयेन क्रमेण बोधादावृत्तिरिति व्यवहारः। एवंच तत्र श्रोतुः शब्दावृत्तिर्वक्तुस्तु तन्त्रेणोच्चारणमिति बोध्यम्।

एवंचेदृश विषये तन्त्रावृत्त्येकशेषाणामन्यतमसमन्वितानि ग्रन्थत्रयाणामैच्छिकार्थविकल्पपरतया प्रवृत्ताश्चिन्त्या एव। घटं पटं चानयेत्यादावपि समुच्चयार्थकचशब्देन क्रमेण बोधे तात्पर्यात् श्रोतुरावृत्तिरेव। अक्षा भज्यन्तां भक्ष्यन्तां दीव्यन्तामित्यादौ समभिव्याहृतानेकपदप्रयोगरूपात्तात्पर्यग्राहकात् विभक्त्यन्तानामेव तन्त्रं बहुत्ववतान्तत्तत्कारकशक्तिमतां भिन्नभिन्नक्रियान्वयितया बोधेन श्रोतुस्तत्तानुसन्धानाद्बोध इत्यावृत्तिरेव।

प्रातिपदिकतन्त्रमेव तु नात्र, एकक्रियान्वये एवं तस्य सत्त्वात्। तदुक्तं वृद्धैः सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति सकृदर्थमित्यादेरेकवारमेव प्रतीतिं जनयतीत्यर्थः। सा च प्रतीतिरेकार्थविषयाऽनेकार्थविषया वत्यन्यत्। गङ्गायां मीनघोषावित्यादावनेकार्थस्य युगपदुपस्थितेः।

यत्तु सकृदर्थमित्यस्यैकमर्थं बोधयतीत्यर्थ इति। तन्न। क्रियाभ्यावृत्तिगणने इत्यधिकारे एकशब्दात्सुच् तस्य

---

वाह यद्वेति। विशेषमाह यत्र त्विति। कैयटदीक्षितादृयुक्तिं खण्डयति एवंचेदृश इति। ग्रायपदफलमाहाक्षा इति। इदं वक्तुः। श्रोतुराह बहुत्वेति तदित्यादिः। प्रातिपदिकतन्त्रं लक्ष्यति माह तदुक्तमिति। उच्चरितः उच्चारणेनानुसंहितः।

कमतं खण्डयति यत्त्विति। अतएव एकानुसन्धानसम्भव एव।

सकृदादेशाश्चेत्यर्थकेनैकस्य सकृच्चेति सूत्रेण निष्पन्नस्य सकृच्छब्दस्योक्तार्थकत्वाभावात् । एकवारमित्यर्थकत्वाच्च ।

अत एव सर्वादिसूत्रे तेन सूत्रेण सर्वादीनां सर्वनामसंज्ञा विधीयते ये सर्वार्थास्ते सर्वादय इति, गणपाठश्च विशेषणं इत्युक्त्वा सकृदुच्चरित इति व्युत्पत्तिमूलकतया कथं पुनरेकेन यत्नेनोभयं लभ्यमित्याशङ्क्यैकशेषनिर्देशादिति समाहितम् ।

यत्रैकशेषेणोच्चारणादित्यर्थकेनैकशेषनिर्देशादित्यनेन वक्तुः शब्दद्वयस्य बुद्धिस्थतया श्रोतुः पृथक्शब्दद्वयज्ञानं भवत्विति वक्तृतात्पर्यं दर्शितन्तस्य लक्षणानुसारात् श्रोतुर्ग्रह इति तद्बलेन पुनरनुसन्धानादर्थद्वयप्रतीतिरिति तदाशयः ।

एतेन सति तात्पर्ये एकशब्दज्ञानेनापि समूहालम्बनविधयोपस्थितानेकार्थानामनेकैः संबन्धिभिः समूहालम्बनात्मकोऽन्वयबोध इत्युक्त्वा भज्यन्तामित्यादौ विनाप्यावृत्तिं बोध इत्यपास्तं तथानुभवाभावात् । उक्तभाष्ये एकेनाप्युभयं लभ्यते इति समाधानानुरूपा तथा रीत्या बोधे उक्तप्रयोगस्यासाधुत्वबोधनाच्च । शब्दसारूप्यं च तन्त्रबीजम् । अर्थभेदेऽपि शब्दैक्याभिमते नये तात्वोष्ठपुटव्यापारप्रकाशितैकशब्देनैकवृन्तगतानेकफलन्यायेनानेकार्थसंबद्धेनानेकार्थबोधा-

---

तसंघांगीकारादेव । सर्वादीति तदुद्घाटितसूत्रे इत्यर्थः । व्युत्पत्तीति संघात्र तदसम्भवमूलकतयेत्यर्थः । अनतिप्रसङ्गायाह सतीति । तदाशयः समाध्याशयः । एतेनेत्यस्यार्थमाह तथेति । द्वितीयमाह श्रोतेति । सिद्धान्तं

द्वर्थतन्त्रमित्याहुः।

वस्तुतस्तु अक्षादिस्थले उपपत्त्या शब्दभेदेऽपि लोकानां न भेदप्रतीतिः पटादिषूपपत्त्यापि नभेदः अर्थभेदाभावात्। बोद्धृभिरनेकशब्दज्ञानाननुभवाच्च। एवंच मतभेदेन शब्दतन्त्रार्थतन्त्रयोरुपपत्तिर्नयुक्ता तस्मान्मतद्वयेऽपि शब्दस्य परिवृत्यसहत्वे शब्दान्वयव्यतिरेकावादाय शब्दतन्त्रं तस्य परिवृत्तिसहत्वेऽर्थतन्त्रम्। उभयत्रापि सकृदनुसंहितैकशब्देन युगपदनेकार्थबोधः। अक्षान्पश्येत्यादावाद्यं पटान्पश्येत्यादावन्त्यमक्षा भज्यन्तां भक्ष्यन्तामित्यादावावृत्तिः।

किंच प्रत्यर्थं शब्दनिवेशोऽनेकार्थ[illegible]नायानेकशब्दप्रयोगे प्राप्ते एकशेषारम्भ इति तत्सामर्थ्यादेकस्यानेकार्थत्वं वाच्यम्। एवंच लोकत एवैकस्यानेकार्थत्वे सिद्धे शास्त्रे न्यर्थं नह्यसती बोधकत्वशक्तिः शास्त्रेणोत्पाद्यते इति शक्यं वक्तुम्। नचैवं प्रत्यर्थं शब्दनिवेशहानिः स्वस्वार्थप्रत्यायनेनैव प्रत्यर्थशब्दनिवेशस्वीकारात्। 'अर्थावर्थौ प्रत्यर्थं अर्थानर्थान्प्रति यस्तदपि प्रत्यर्थमेवे'ति भाष्यात्।

अर्थभेदाच्छब्दभेद इत्यस्यापि स्वस्वार्थभेदात्तच्छब्दभेद इत्येवार्थः यथार्थद्वयबोधकवृक्षादिशब्दभ्यो वक्तुमत्र दोषमाह—

वस्तुतस्त्वति उपेति प्रवृत्तिनिमित्तभेदादेरित्यर्थः। आदाय (विधि) इति शेषः उभयत्रापीत्युक्तेरभावादाहाक्षा इति प्रकारांतरेण सूत्रवैयर्थ्यमाह किञ्चेति: एकस्य अवशिष्टस्य। सर्वथा तन्त्रस्यांगीकारे च सिद्धि रिति अन्यथा एकशेषस्य नित्यत्वाद्वाक्यं दुर्लभमेव स्यात्। एवं च तद्विषयं एकशेषाङ्गीकारेच। नन्वेवं द्वंद्ववदत्राप्येकवचना-

बन्ह्यर्थप्रतिपादकवृक्षादिशब्दाभिन्नाः । सर्वथैकशेषसूत्रं व्यर्थमिति चेन्न । अर्थमर्थं प्रति यत्तस्यापि प्रत्यर्थत्वेन घटघटावित्यादिवारणार्थं सरूपाणां द्वन्द्वविषये एकशेष एवेति नियमार्थं तत्सत्वात् । द्वन्द्वविषये इत्युक्तेऽर्थपेक्षायां चकारगर्भवाक्यसिद्धिः ।

एवंच प्रातिपदिकतन्त्रं सहविवक्षाविषयमेव तत्रैकशेषव्यवहारो मुख्यः । असहविवक्षाविषये विभक्त्यन्ततन्त्रे एकशेषव्यवहारो गौणः । यथा सर्वादिसूत्रे भाष्ये । एकशेषविषयेऽनुद्भूतावयवभेदसमुदायस्य न कदापि विशेष्यताऽनभिधानात् । अतएव नपुंसकमनपुंसकेनेति सूत्रे एकवच्चास्यान्यतरस्यामिति चरितार्थं । द्वन्द्वस्यानभिधानमाश्रित्य तु सूत्रं प्रत्याख्यातमाकरे एतदेवाभिप्रेत्य ।

तन्त्रत्वमैकरूप्येण भवेत्तुल्योपकारतः ।
उपकारान्यथात्वे तु भवेदावृत्तिलक्षणम् ॥

इति मीमांसकाः ।

तत्र शब्दविषये तुल्योपकारत इत्यस्य तुल्यकालमुपकारतोऽन्वयत इत्यर्थः । विद्वन्मानसेत्यादौ परस्परान्वयेऽपि मानसाभिन्नमानसाधिकरणकहंसेति युगपदेव बोधात्तदक्षतिः कदाचित्तत्र पृथक् प्रयोगोऽपि विद्वन्मा-

---

न्तप्रयोगोऽपि स्यादत आहकेति । नन्वेवं भाष्यविरोधोऽत आह द्वंद्वस्येति स्वोक्ते परसंमतिमप्याह एकेन तुल्यरूपेण कर्तृत्वादिनाऽन्वयित्वं तुल्योपकार इति परमतनिरासः मानसेत्यादौ तन्त्राभावापत्तेः । न च तत्रावृत्तिरेव समासैकदेशे तदसम्भवात् । एतदेवंत्यस्यार्थमाह तत्रेति तन्त्रयोर्मध्ये इत्यर्थकशब्देति शब्दतन्त्रेत्यर्थः ।

समानत्वेति सारवसारवोर्भिज इति वत् । उपकाराऽन्यथात्वं भिन्नकालमन्वयस्तेन क्रमेण बोधे आवृत्तिरित्यर्थः । ऐकरूप्येणेत्यनेन शब्दसारूप्यं तन्त्रबीजमुक्तम् । क्रिययोरपि सारूप्यमेव तन्त्रबीजं । क्रियाविषयतन्त्रादेरेवेदं लक्षणमित्यन्ये ।

न ब्राह्मणं हन्यात् घटमानयेत्यादौ जातेः प्राधान्येनानेकव्यक्तिबोधेऽप्येकवचनम् । एकशेषे वृत्तित्वव्यवहारस्तु वृत्त्यपवादत्वेन गौणः । पृथगर्थानामेकार्थीभवनरूपैकार्थीभावस्यात्राभावात् । शुद्धव्यक्तौ स्वसंबन्धेन व्यक्तिप्रकारक एव शक्तिग्रहस्तस्या एवच शब्दतो बोध इति मते एकशेषसूत्रस्यासंभवो बोध्यः ।

जातिः शब्दार्थस्तदुपलक्षितं द्रव्यं शब्दार्थ इत्यादिमते तु तज्जात्यनुगतीकृतानेकव्यक्तिबोधस्यैकस्मादपि संभवेनानेकशब्दप्रयोगाप्राप्त्या सूत्रस्याऽसंभव एव नास्ति । अक्षा इत्यादौ जातिवत्त्वापि जात्यन्तराङ्गीकारेण तस्या एव शब्दवाच्यत्वेन न दोषः ए-

---

एवं सति क्वापि न दोष इत्याह विद्वदिति तन्त्रविषयमाह क्रिययोरपीति तदभिमतमाह क्रियेति आदिना वृत्तिः । नन्वेकशेषावश्ये तादृशसमूहस्यैं(कादश्य)विशेष्यत्वे न ब्राह्मणमित्यादेरसाधुताऽत आह न ब्राह्मेति । अत एव नपुंसकमिति सूत्र भाष्ये जातिप्राधान्ये तस्याः स्वत एकत्वादेकवचनं तस्यामाश्रयगतद्वित्वाद्यारोपे द्रव्यप्राधान्ये वा द्विवचनादीत्यतएकवचचास्याम्यतरस्यामिति प्रत्याख्यातमतिप्रसङ्गस्त्वनभिधानाद्वारणीयः । प्राचां ग्रन्थं योजयति एकेति । ननु न ब्राह्मणमित्यादिवाक्ये सूत्रप्रणयनं निर्बीजमत आह शुद्धेति निर्विकल्पकत्ववारणायाहस्वेति । आदिना तदवच्छिन्नं द्रव्यं । न च तत्रापि मते-

तेन डित्था इत्यपि व्याख्यातम् ।

यत्त्वानेकेष्वक्षशब्देष्वक्षशब्दत्वं नाम सामान्यमभिन्नप्रत्ययाभिधानहेतुस्तच्च शब्दार्थयोः सोऽयमित्यभेदाध्यवसायादध्यस्ताक्षशब्देषु संज्ञिषु वर्तत इति तद्वैशिष्ट्यं नानेकप्रतीतिः । एवमेव गोत्वाश्वत्वे सामान्ये इत्यपि सिद्धम् । सकलसामान्येषु सामान्यत्वं जातिरूपमस्ति । निःसामान्यानि सामान्यानीति च तार्किकदर्शनं न नियोगतो वैयाकरणैरास्थेयमिति कैयटः । अभावाश्चत्वार इत्यादावपि निरुपाख्यत्वं तत्समनियतमभावत्वं वा सामान्यं बोध्यम् । सूत्रारम्भेऽप्यर्थैव बोधप्रक्रियाऽतो न प्रत्याख्याने फलभेदः ।

ब्राह्मणश्च ब्राह्मणी च ब्राह्मणावित्यादौ पुमान् स्त्रियेत्यादिनैकशेषः । अत्र च पुंस्त्वस्त्रीत्वाभ्यां ब्राह्मणत्वजात्याश्रयबोधः । नच तत्रापि तज्जातिसत्त्वे ब्राह्मणीवधेऽपि ब्रह्मवधोक्तप्रायश्चित्तापत्तिरिति वाच्यम् । उत्कृष्टापकृष्टब्राह्मणवधे इव तद्वधे तस्य वाचनिकत्वात् ।

एवं शिवौ भ्रातरौ पुत्रौ श्वशुरावित्यादौ द्रष्टव्यमिति केचित् ।

भाष्यानुसारिणस्तु स्वस्रादिष्वप्येकशेषाविषयत्वा-

---

ऽक्षा इत्याद्यर्थं सूत्रमिति प्राचीनैरुक्तमयात आहाक्षा इति । (नापाद्यमासा इति) । एतेन नत्रापि जात्यङ्गीकारेण । अव्यक्तेति बहुव्रीहिः ।

लाघवादाह यत्त्विति एवमेवेत्यस्यार्थमाह सकलेति लाघवादाह तत्समेति आदिशब्दो प्रकारे । अत्रचेति लक्षणया शक्त्या वा पुंस्त्वाद्युपाधिरिति नब्राह्मणत्वादिजात्या सङ्करस्तस्यादोषत्वात् । ब्राह्मण्यादि व्याप्यं नाना स्त्रीत्वादीति साङ्कर्यसम्भावनाया एवाभावाच्च ।

तृत्वं द्रष्टव्यमिति भ्रातृपुत्राविति सूत्रभाष्योक्ते भ्रातरावित्यादौ भ्रातृत्वेनैव स्वस्रादिबोधस्तस्यां तत्वारोपात्। पितरावित्यादौ पितृत्वादेर्मातर्यारोपेण पितृत्वादिनैव मात्रादिव्यक्तेर्बोधः। प्रकरणादिवशाच्च विशेषावसायः। कदाचित्पितृद्वयस्यापि ततः प्रतीतेः

गार्ग्यावित्यादावपि यूनि गर्गगोत्रत्वारोपेण तेनैव रूपेण यूनोऽपि बोधः। ब्राह्मणावित्यादितो ब्राह्मणत्वेनैव ब्राह्मणीबोधस्तद्रूपारोपात्। ननु तत्तद्रूपेणानुभवविरोधात् एकत्र क्लृप्तशक्तिकस्यार्थान्तरे वृत्तिकल्पने गौरवाच्च। पिता भ्रातेत्यादितस्तु न तथा बोधः। एकशेषविषय एव तेषां स्वप्रवृत्तिनिमित्तारोपेण मात्रादिबोधकत्वस्य शब्दशक्तिस्वभावसिद्धत्वात् भाष्यात्तथैव लाभाच्च। सूत्रमतमप्येवमेव। सूत्राणि तु भ्रान्तिनिवृत्त्यर्थानीत्याहुः।

इत्येकशेषः।

---

तत्रापि ब्राह्मण्यामपि। तत् ब्राह्मणी। तस्य प्रायश्चित्तविशेषस्य। नत्वेतावता तत्र ब्राह्मण्याभावः विशेष्यैकदेशे च पुंस्त्वाद्यन्वयः। पदार्थः पदार्थेनेति व्युत्पत्तिस्तु विशेषणीभूतपदार्थैकदेशपरा आदिना गार्ग्यावित्यादि। केचित् प्राञ्चः। विषयेइति विषयमिति प्रचुरः पाठ आदिना श्वशुरावित्यादि चस्त्वर्थे।

वृद्धो यूनेत्यस्य विषये आह गार्ग्याविति आदिना हंसावित्याद्यपि पुमान्स्त्रियेत्यस्य विषये आह ब्राह्मणाविति। पूर्वमते दोषमाह नन्विति अत्र मतेऽतिप्रसङ्गं निराचष्टे पितेति तेषां पित्रादीनां। एवमेव भाष्यैकवाक्यत्वात् नन्वेवं सूत्राणामानर्थक्यमत आह सूत्राणीति वृद्धो यूनेत्यादीनीत्यर्थः।

इत्येकशेषः।



घटमिच्छन्ति घटीयति देवदत्त इत्यादौ क्यजर्थ इच्छा। एकदेवदत्तकर्तृका स्वसंबन्धिघटकर्मिकेच्छेति बोधः। स्वसम्बन्धित्वादिभानं शब्दशक्तिस्वभावात्। महान्तं पुत्रीयतीत्यादि तु न असामर्थ्यात्। सुप आत्मनः क्यजिति सूत्रेणैषितृसम्बन्धीच्छाकर्मवाचकादिच्छायां क्याजित्यर्थकेनात्र क्यच्। तस्य पदविधित्वं स्पष्टमेव। पुत्रकाम्यतीति काम्यजन्तेऽप्येवमेव।

विष्णूयति द्विजमित्यादौ उपमानवाचकात्कर्मण आचारे क्यजित्यर्थकेनोपमानादाचार इत्यनेन क्यच्। उपमानत्वमत्राचारनिष्ठमेव प्रत्यासत्तेः। चैत्रकर्तृको द्विजकर्मको विष्णुकर्मकाचारसदृश आचार इति बोधः। तत्र प्रत्यासत्त्या विष्णुकर्मकाचारोऽपि चैत्रादिकर्तृक एव।

कृष्णायते चैत्र इत्यत्र कृष्ण इवाचरतीत्यर्थे क्यङ्। अत्र कृष्णकर्तृकाचारसदृशश्चैत्रकर्तृक आचार इति बोधः विष्णुद्विजयोः कृष्णचैत्रयोश्चोपमानोपमेयभाव आर्थः।

अन्ये तु उपमानत्वं कर्माद्यन्तरानिरूपितं, कर्मत्वादि चाचारनिरूपितं प्रत्यासत्तेस्तत एव चाचारस्य

---

अथ सुबन्तप्रकृतिकक्यजाद्यर्थं निरूपयति घटमित्यादिना व्यपेक्षायामपि तद्भानेन तस्य नैकार्थीभावफलत्वमित्यत आह शब्देति। तदेवोपपादयितुमाह सुप इति। सूत्रस्य विशेषणमाहैषित्रिति। अत्र घटीयतीत्यादौ। प्रत्येति तथाच विष्णुपदं विष्णुकर्मकाचारसदृशार्थकं तदाह चैत्रेति एवमग्रेपीत्याहाग्रेति। उभयत्र क्रमेण। प्रसिद्धिविरुद्धं परिहरति विष्णुद्विजेति।

सिद्धान्तमाहान्येत्विति। तत एव कर्मत्वादेराचारनिरूपितत्वा-

साधारणधर्मत्वम् । तदुक्तं सुप आत्मन इत्यत्राकरे आधारक्यजन्तादावुपमानकर्माद्यन्तर्भूतम् । उपमेयक-र्मादिना सकर्मकत्वं सकर्तृकत्वं चेति । एवंचोपमानवि-ष्णुकर्मक आचार उपमेयद्विजकर्मक इत्यादिरीत्या बोध इत्याहुः ।

सुपर्वभिः शोभितं त्रिविष्टपं भारतायते इत्या-दौ श्लेषेणाभेदबुद्धेरिव शब्दरूपसाधर्म्येण सादृश्यबु-द्धेरप्युपपत्तिर्बोध्या । अत्र सर्वत्र पदविधित्वेनैकार्थी-भावसामर्थ्यं एव साधुत्वात्सुन्दरः कृष्णायत इत्या-दि न । शब्दशक्तिस्वभावाच्च प्रकृत्यर्थस्यापि साध्यत्वे-न भानात् ।

व्याकरणस्य सूत्रं करोतीति वाक्ये सम्बन्धेना-न्वितस्यापि व्याकरणस्य व्याकरणं सूत्रयतीत्यादौ कर्म-त्वं । हेतुमति चेति सूत्रे इह व्याकरणस्य सूत्रं करोती-ति वाक्ये षष्ठी, व्याकरणं सूत्रयतीति द्वितीया कथं तदेवं भवति योऽसौ सूत्रव्याकरणयोरभिसम्बन्धः स उत्पन्ने प्रत्यये निवर्त्ततेऽस्ति च करोतेर्व्याकरणेन साम-र्थ्यमिति भाष्यात् । मुण्डादिसूत्रे केषांचिद्ग्रहणं सा-पेक्षेभ्योऽपि विधानार्थमित्याकराच्च ।

---

देव । ननु सुपर्वभिः शोभितं त्रिविष्टपं भारतायत इत्यनुपपन्नं भारता-चारसदृशाचारस्य त्रिविष्टपवृत्तेरप्रसिद्धेः सुपर्वभिः शोभितमित्यत्र तु श्लेषेणाभेदाध्यवसाय एव, न सादृश्याध्यवसाय इत्यत आह सु-पर्वेति । श्लेषेण एकशब्दोपात्तत्वेन । बुद्धेरपीति तथाच तद्वति तत्प्र-सिद्धिर्बोध्या ।

अत्र सर्वत्र आद्यभिन्नेषूक्तेषु । ननु प्रकृत्यर्थस्य सत्त्वरूपतया कथं व्याकरणं सूत्रयतीत्यादीत्यत आह शब्देत्यादि कर्मत्वमित्यन्तेन च-

प्रातिपदिकप्रकृतिकणिचोऽपि समर्थादेवोत्पत्तिः। अतएव महान्तं घटयतीत्यादि न। नच सूत्रशब्दार्थस्य साध्यत्वेन भानेऽपि तदाश्रयेण कथं व्याकरणस्य कर्मत्वमिति वाच्यम्। सूत्रणानुकूलव्यापारार्थकस्य सूत्रयतेरखण्डत्वात्।

सुण्डसूत्र्यादयोऽस्माभिर्भागैरनुगता इव।
विभक्ताः कल्पितात्मानो धातवः कुक्षिवच्चिवत्॥

इति हर्युक्तेः। विभक्ताः अन्वाख्याताः कल्पितात्मानः।

वस्तुतः कुक्षिप्रभृतिवदखण्डा एवैते अयं त्वन्वाख्यानोपाय एवेति भावः। तदाह—

पुत्रीयतौ न पुत्रोऽस्ति विशेषेच्छातु तादृशी।
विनैव पुत्रानुगमाद्या पुत्रे व्यवतिष्ठते॥
प्राणैर्विना यथा धातुर्जीवतौ प्राणकर्मकः।
नचात्र धातुर्न प्राणा जीवतिस्तु क्रियान्तरम्।
तथा विनैषिपुत्राभ्यां पुत्रीयायां क्रियान्तरम्॥
क्रियान्तरत्वमित्यर्थः।

अन्वाख्यानाय भेदास्तु सदृशाः प्रतिपादकाः। इति।

भेदाः प्रकाराः सदृशाः पृथग्भूतपुत्रादिसदृशाघटिताः प्रतिपादकाः अखण्डधात्वन्तरस्येति शेषः। अन्वाख्यानाय तस्यैव बोधनाय कल्पिता इति शेषः तदुक्तम्।

---

स्त्वर्थे। ननु व्याकरणं सूत्रयतीत्यादौ णिचः प्रातिपदिकप्रकृतिकत्वेन कथमत्रैकार्थीभावोऽतआह हेतुमतीत्यादिवोत्पत्तिरित्यंतेन। हेत्वं तस्माह सुंडेति। अर्थस्य स्वरूपस्य। सूत्रणं रचनं। एते सुंड्यादयो धातवः तदाह हरिरेव। एवमग्रेऽपि। अनुगमः सम्बन्धः। इदमेव स-

अर्थस्यानुगमं कश्चिद् दृष्ट्वा च परिकल्पितम् ।

वाक्ये पदं पदे धातुर्धातोर्भागश्च मुण्डिवत् ।
यथैव डित्थे डयतिः पाचकेऽपि पचिस्तथा ॥

डयतिश्च पचिश्चैव द्वावप्येतावनर्थकाविति । माणवक मात्मनः पुत्र मिच्छतीतिवत् माणवकं पुत्रीयतीत्यादि तु न अनभिधानात् । तदुक्तं सुप आत्मनः इत्यत्र भाष्ये मुण्डयति माणवकमित्यत्र यथोभयोः करोतियुक्तत्वं यथा वा मुण्डीयति माणवकमित्यत्रो-भयोराचारेण योगस्तथा माणवकं पुत्रीयतीत्यादावुभयोरिषियोगोऽपि स्यादित्याशङ्क्य नात्र व्यापारोऽनुगन्तव्योऽगमकत्वाद्भविष्यतीति । अगमकत्वादिच्छाक्यजन्ते तथा प्रयोगो नेति कैयटः । एवं च ओदनं पाकीयति ओदनस्य पाकीयतीत्याद्यप्यगमकमिति बोध्यम् ।

एवं प्रातिपदिकप्रकृतिकक्विबन्तेऽपि सः । कर्तुः क्यङिति सूत्रे उपसंख्यानेन तत्साहचर्यात अतएव सुन्दरः कृष्णतीत्यादि न । सन्नन्तेष्वेकार्थीभावसत्त्वे बीजमुक्तं प्राक् । कृदन्तेऽप्युपपदनिमित्तके पदोद्देश्यकविधित्वेनैकार्थीभावः ।

---

दृष्टांतं विशदयति प्राणैरिति आगमं सम्बन्धं तदेव रूढयौगिकोदाहरणाभ्यां विशदयति यथैवेति ।

उक्तरीत्या प्राप्ताप्तिप्रसङ्गं निराचष्टे माणवेति । तदुक्तमिति तत्र सूत्रे भाष्ये तदनभिधानमभिप्रेत्येत्याशङ्क्योक्तिसमाधानमुक्तमित्यर्थः । अन्वेति उभयानुगतो व्यापारोऽत्र न भविष्यत्यगमकत्वादित्यर्थः । तुल्ययुक्त्या आहैवं चौदनमिति । एवं तादृशणिजन्तवत् । सः एकार्थी-

अतएव तत्रोपपदमित्यत्र भाष्ये उक्तम् । महान्तं कुम्भं करोतीत्यत्राण् प्राप्नोति । नैतदस्ति । उपपदमिति महती संज्ञा क्रियते उपोच्चारितं पदमुपपदं यावता चेदानीं पदगन्धोऽस्ति पदविधिरयं भवति पदविधिश्च समर्थानां भवति तत्रासामर्थ्यान्न भविष्यतीति । पाचकादावपि सः पाचकादिशब्दानां क्रियाप्रवृत्तिनिमित्तकत्वस्य भाष्ये व्यवहारात् । अतएव व्यापारान्वयविवक्षायामादिः पचतीतिवदादिः पाचक इति न ।

फलविशेषणानां त्वेकदेशेऽपि फलेऽन्वयो भवत्येव । पूजनात्पूजितमिति सूत्रभाष्ये दारुणाध्यापक इत्यत्र समस्ताध्यापकपदार्थैकदेशे फले दारुणपदार्थान्वयस्वीकारात् । फलावच्छिन्नव्यापारस्य धात्वर्थत्वेन शोभनं पचतीत्यादौ सर्वत्रैकदेशे फले तदन्वयस्वीकाराच्च ।

उपगोरपत्यमौपगव इत्यादौ तस्यापत्यमित्येवंजातीयसूत्रैर्विहितप्रत्ययानामपत्यादिरर्थः षष्ठ्याद्यर्थश्च समुदायगम्यः । उपगुसम्बन्ध्यपत्यमित्यादिरित्या बोधः । अत्रापि सुंदरस्योपगोरपत्यमुपगोर्देवदत्तस्य चापत्यमितिवत् सुन्दरस्यौपगव औपगवो देवदत्तस्य चेत्यादिवारणायैकार्थीभाव आवश्यकः । सुबन्तात्तद्धि-

---

भावः । गंधो लेशः । तत्र तत्प्रवृत्तौ सत्यां । अतएव तत्र तदङ्गीकारादेव । नन्वेवमन्यत्र दोषोऽत आह फलेति । अपिना प्रधानं । नकेवलमिदं तत्रेत्याह फलावेति । अथ तद्धित्ते आहोपगोरिति । अत्रापि तद्धितेऽपि वक्ष्यावति विशेषणत्वात् । ननु तत्र तस्य हेतुत्वमतः साधारणमाह

तोत्पत्तेः पदविधित्वात् । नच तद्धिते एकार्थीभावा-ङ्गीकारे पर्वतो वह्निमान् धूमादित्यादौ धूमादित्यस्य-वह्न्यावनन्वयापत्तिरिति वाच्यम् । विशिष्टपर्वते एवा-न्वयात् । ज्ञानगतहेतुहेतुमद्भावस्य विषये आरोपेण हेतावत्र पञ्चमी । अतएव न्यायसूत्रभाष्यवार्त्तिककारैः प्रज्ञापनीयधर्मविशिष्टो धर्मी साध्य इत्युक्तम्।

साऽस्य देवतेत्यस्योदाहरणे आग्नेयादौ केचित् दे-वताविशिष्टं देयं प्रत्ययार्थः प्रकृत्यर्थः प्रत्ययार्थैकदेशे-ऽभेदेन विशेषणम् । यद्वा देवताप्रदेययोर्भिन्नैव प्रत्य-यस्य शक्तिः । अग्न्यभिन्नदेवतासम्बन्धीति बोधः । प्रदेयं च सम्बन्धित्वेनैव प्रत्ययार्थः । प्रदेय इति मन्त्र-स्याप्युपलक्षणं । आमिक्षादि पदैश्च सम्बन्धित्वेन बुद्ध-स्यैव प्रदेयस्य विशेषसमर्पणं क्रियते । इन्द्रादिपदैर्दे-वताया लाभेऽपि देवतात्वेनालाभात्तेन रूपेण लाभा-य देवतायां शक्तिरित्याहुः ।

अन्येतु चतुर्थ्यादौ प्रकृत्यर्थस्य प्रकृत्यैव लब्धस्य चतुर्थ्योद्देश्यत्वमात्रं यथोच्यते एव मत्रापि देवतात्वं प्रदेयं च प्रत्ययार्थस्तत्र प्रदेये देवतात्वस्य निरूपकतासम्बन्धेनान्वयः । अग्निवृत्तिदेवतात्वनिरूपकमिति बो-धः । नन्वेवम् ।

---

ज्ञानेति अत्र परसंमतिमप्याहातएवेति विशिष्टेऽन्वयादेवेत्यर्थः । केचिदिति व्यपेक्षावादिनः । प्राञ्च इत्यर्थः ।

एकदेशान्वयदोषादाह यद्वेति । लाघवादाह सम्बन्धित्वेनैवेति पौनरुक्त्यं परिहरति आमिक्षेति । अन्येत्विति तद्धादिनो नव्या इत्यर्थः । चतुर्थ्यादौ तदन्तादौ । तत्र तयोर्मध्ये । एवं तद्धिते चतुर्थीतुल्यत्वाङ्गीकारे । तत्र तेषां मध्ये । तद्धिते एकार्थीभावादेकविशिष्टार्थोपस्था-

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।
देवतासङ्गतिः तत्र दुर्बलन्तु परंपरम् ॥

इति मीमांसकोक्तं दौर्बल्यं कथमितिचेदित्थम् चतुर्थ्या वाक्याद्देवतात्वसम्बन्धलाभस्तद्धिते समानपदोपादानश्रुत्येति श्रुतिवाक्यबलाधीनं तत्। देवतात्वस्य सम्बन्धिद्वयसापेक्षत्वेन चतुर्थ्यां द्वितीयसम्बन्धिनः पृथक्पदोपात्तत्वेन वाक्यात्तल्लाभः। प्रकृते तु संबन्धिद्वयस्याप्येकपदोपस्थाप्यत्वात् श्रुत्या तल्लाभः। यद्वा प्रदेयमेव प्रत्ययार्थः स्ववृत्तिदेवतात्वानिरूपकत्वसम्बन्धेन प्रकृत्यर्थस्य प्रत्ययार्थेऽन्वय इत्याहुः।

देवतात्वं च दिवेरैश्वर्यकर्मणो देवतेति देवात्तलिति सूत्रभाष्यात् मन्त्रकरणको योहविस्त्यागस्तज्जन्यस्वर्गातिरिक्तफलाश्रयत्वेन तदुद्देश्यत्वं मन्त्र स्तुत्यत्वं च। अतएवैन्द्रं हविरैन्द्रो मन्त्र इत्यादिसिद्धम्। देवतानिष्ठं फलं चास्येदं फलं भवत्वितीच्छारूपा प्रीतिरेव।

कोदादिस्थादि मन्त्रप्रयोज्यस्वामित्वभागिनि प्रति

---

पकत्वरूपं समानपदत्वं चतुर्थ्यां तदभावात्तत्रेति तत्र वाक्यत्वमिति न विभक्त्यंतस्यापि लोके विशिष्टस्यैव बोधकत्वादतोऽन्यथोपपादयति देवतात्वेति।

लाघवादाह यद्वेति एकार्थीभाववादिनां तु विशिष्टशक्त्यैवेदृशार्थबोध इत्याह देवतात्वं चेत्यादिना। मन्त्रकरणकहविस्त्यागजन्यस्वर्गे पाठः अतएवाग्निमसङ्गतिः मन्त्रकरणको यां हविस्त्यागस्तज्जन्यं स्वर्गातिरिक्तं यत्फलमित्याद्यर्थः। तत त्यागकर्त्ता इदमेवाश्चर्यं। तत्र मत एव तस्योभयरूपत्वादेव। प्रीतिरेवेति अन्यासम्भवात्। आदिना कामःकामायाद्वादिति। पञ्चम्यंतस्य सम्बन्धेऽन्वयः नेति भवसामादिनाक्ते

पहीनर्यातिप्रसङ्गवारणाय मन्त्रकरणकेति हविस्त्याग-विशेषणम् । स्वर्गाश्रयत्वेनोद्देश्ययागकर्त्तर्यैतिप्रसङ्ग-वारणाय स्वर्गातिरिक्तेति । न योषिद्भ्यः पृथग्दद्यादि-त्यादितः श्राद्धे मृतपत्नीनां मृतानां हविः सम्बन्धास्त-द्वारणायोद्देश्यत्वमिति । शूद्रकर्तृकश्राद्धादावपि नमः-स्कारो मन्त्रोऽस्त्यंत्र । अनुमतोऽस्य नमस्कारो मन्त्र इति गौतमस्मृतेः ।

उद्देश्यताच मन्त्रोक्तशब्दशरीरोभयाघच्छिन्नेश्व-रचैतन्यस्य । तदेव च मन्त्रोक्तमिन्द्रादिपदवाच्यम् इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरु-त्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वान-माहुरिति मन्त्रवर्णात् । आहुर्मन्त्रा इति शेषः । एष उह्येव सर्वे देवा इतिश्रुतेश्च । तेन लोमादीनां देवतात्वं सिद्धं । पर्यायान्तरेणोद्देशे च नदेवतात्व, मिन्द्रादीनां स्मर्यमाणमश्वमेधाद्यनुष्ठानं च नासङ्गतमिन्द्रादिपदै-रेवेश्वररूपदेवतोद्देशेन तैरपि हविस्त्यागोपपत्तेः ।

इदंच यागानुष्ठानन्तत्वज्ञानात्पूर्वमेव तदुत्तरमपि-वा लोकानुग्रहार्थेति बोध्यम् । अतएव इन्द्रः सहस्रा क्षो गोत्रभिद्वज्रबाहुरित्याद्यर्थवादप्रदर्शितविग्रह-

---

स्वभर्तृमात्रेण तृप्तिरासां यतः स्मृतेति शेषः छन्दोगपरिशिष्टे काती-यश्राद्धे भर्तुः श्राद्धविशेषे अव्याप्तिं वारयति शूद्रेति ।

नन्वेतावतापि न धर्मिविशेषज्ञानमत आहोद्देश्यताचे ति । स्वेन म-न्त्रस्तुल्यत्वं । जीवनिरासायेश्वरेति । मतान्तरनिरासायाह तदेवेति ताद्दशचैतन्यमेवेत्यर्थः चिद्रूपः तेनेत्यस्य त्रिषु अन्वयः । लोमे लोमो स्वाहेत्यादौ । तत्र तृतीये उपपत्तिमाहे न्द्रादीति । रूपेति तच्चैत-न्यरूपेत्यर्थः । तैः इन्द्रादिभिः । तेषामेव । हेदंचेति । तत्र स्मर्यमाणमित्य-

हविर्भोजनैश्वर्यतृप्तिफलदातृत्वानां न बाधः। शुद्धार्थस्य देवतात्वे पर्यायान्तरयोगापत्तिः। अग्नये शुचये इत्यादौ पौनरुक्त्यापत्तिश्च। शुद्धशब्दस्य देवतात्वे बौद्धस्य शारीरस्य वा संनिधेरभावादावाहनमन्त्राणां शुद्धादृष्टार्थत्वमात्रापत्तिः। गङ्गाशालग्रामादौ नित्यसंनिधानादावाहनमन्त्रा न पठनीया इत्यादेस्तत्पाठं विनाऽप्यदृष्टसिद्धिरित्यत्र तात्पर्यं च कल्प्यं स्यात्। तिर्यगधिकरणेन देवताः कर्मस्वधिक्रियन्ते इन्द्रादेर्हविस्त्यागोद्देश्यस्यैन्द्रान्तरादेरभावात्स्वात्मने संकल्प्यमानद्रव्यस्य स्वत्वत्यागासम्भवेन कर्मानिष्पत्तेरित्यर्थकेन न देवतान्तराभावादिति सूत्रेण शब्दातिरिक्तदेवताया जैमिनिनाऽप्यङ्गीकाराच्च।

नच देवताया अपि यागाङ्गत्वमाग्नेय इत्यादितद्धितादिभिर्बोध्यते। अनुष्ठेयमुपकारकं ह्यङ्गं भवति नच देवता यागमध्ये स्वरूपेणानुष्ठातुं शक्या नापि ऋत्विजामिव तासामुपकारकत्वमिति वाच्यम्। तद्वाचकशब्दोच्चारणस्यैवानुष्ठेयत्वात्। वाचकशब्दद्वारैव तासामुपकारकत्वात्। शब्दश्चोपस्थितत्वादग्न्यादिरेव।

---

र्थः। संकोचे मानाभावादाह तदुत्तरमिति तदा फलाभावादाह लोकेति। तस्य तत्वे फलांतरमाहातएवेति। तस्य तत्वादेव चेत्यर्थः। परमतं खंडयति शुद्धार्थेत्यादि। पत्तिः तस्याप्यापत्तिः शुद्धेति केवलादृष्टार्थत्वकल्पनापत्तिरित्यर्थः अतो न पौनरुक्त्यं।

द्वितीयपक्षे दोषांतरमाह तिर्यगिति सप्तम्यंतस्याग्रे अन्वयः। अत्र पक्षे शंकते नचेति अनतिप्रसंगं तत्रैवाह शब्दश्चेति। अग्न्यादिशब्दयुक्तयागेनेष्टं भावयेदित्येव विधिवाक्यार्थ इति भावः। अ-

तदुक्तं शाबरस्वामिभिः शब्द एव हविषा सम्बध्यते तत्सम्बन्धादर्थो देवता भविष्यतीति आवाहनमन्त्रैश्चानेकयागेषु संनिधानमयं यागो मदर्थ इति तद्बुद्धिविशेष एवेति न शालादिभङ्गः नाप्यनेकेषु संनिधानानुपपत्तिः । योगिवद्भूतानां तद्वद्गुस्त्वेनेच्छया भूतान्यधिष्ठाय अनेकैः सूक्ष्मतरैः शरीरैस्तत्र संनिधाने बाधकाभावादन्तर्धानशक्तियोगाच्च परैरदर्शनम् । ईश्वरस्यैव देवतात्वे तु नानुपपत्तिलेशोऽपि ।

किञ्च देवैर्नारदादीनां संवादः पुराणेषु श्रूयते स विग्रहवत्त्व एवोपपद्यते । एवंच तेनैवोपबृंहणेनार्थवादानां वाक्यार्थबोधविषयीभूतविग्रहेऽपि स्तुतावित्र तात्पर्यं तत्र स्तुतौ मुख्यन्तात्पर्यं विग्रहे तु तदुपयोगितया । एवञ्च ध्यानविधयो देवतासायुज्यसालोक्याक्षिफलनिर्देशा अप्युपपन्नाः ।

अतएव सन्सूत्रे भाष्ये सर्वस्य पदार्थस्य चेतनाध॰

---

नैव पक्षे प्रसक्तदोषानुद्धरति आवेत्यादिना । शालेति तस्याः स्वल्पत्वाद्देवतास्वरूपस्य महत्वात । इतिरुभयत्र तस्यहेतुत्वसूचक इत्याह नापीति । उभयत्रहेत्वंतरमाह योगिवदिति । तत् देवता । तत्र तत्रेतीतिपाठः । तत्रेति पाठो नेत्यर्थः नन्वेवं दर्शनापत्तिरतआहांतरिति चस्त्वर्थे योगिवदेवेति भावः ।

एवंजैमिनिमतमुपपाद्य प्रक्रांतसिद्धांत एव युक्तो लाघवादनुपपत्त्यभावाच्चेत्याहेश्वरेति प्राग्वत् । एवं सिद्धांतिते तत्र विग्रहवत्त्वमप्याह किंचेति अर्थवादानां सहस्राक्षो गोत्रभिदित्यादिप्रागुक्तानां तत्र तयोर्मध्ये । एवंच विग्रहवत्त्वे च । अत एव अर्थवादस्पेष्टार्थसाधकत्वादेव । सन्सूत्रे धातोः कर्मण इत्यत्र । एवंचार्थवादानां स्वार्थे पि प्रामाण्यमस्त्येव । एतेनेंद्रादिशब्देभ्यः प्रथमोपस्थितत्वाच्छब्द एव ते इत्यपास्तं । तत्र तत्रेन्द्रादेर्ब्रह्मविद्याधिकारश्रवणाच्च ।

त्वं 'शृणोत ग्रावाण' इत्यर्थवादबलेनोक्तम्। ईश्वरोऽपि श्रुत्या श्रुतिलब्धबलानुमानेन श्रुत्यनुग्राहकेण अन्तर्यामितया जगत्कारणया च सिद्ध इति वेदान्तेषु प्रसिद्धं चेतनस्यैक्यमेव लाघवात्। भेदप्रतीतिस्त्वौपाधिकीत्यपि तत्रैव स्पष्टम्।

चरके पतञ्जलिरप्याह।

देही सर्वगतो ह्यात्मा विभुत्वमतएवास्य यस्मा-

नन्वीश्वरसत्त्वे एव न मानमिति कथं तस्य तत्वमत आहेश्वरोऽपीति। न च क्षित्यादि सकर्तृकं कार्यत्वादित्यमुमानाद्भवन्ती सकर्तृकत्वानुमितिर्लाघवतर्कोपनीतं कर्त्रैकत्वं विषयीकरोतीत्यनुमानात्सिद्धिः गोपुरप्राकारतटाकादियुक्तनगरादिषु क्रमसंभूतासर्वज्ञासर्वशक्तिकबहुकर्तृकत्वेन निश्चितेषु लाघवावतारासंभवेऽपि क्षित्यादिषु तदवतारे बाधकाभावादिति वाच्यम्। लाघवतर्केण स्वानुग्राह्यप्रमाणे विषयगौरवापादनस्यात्यंतमनौचित्यात्। एककर्तृकत्वंहि अनेककर्तृकत्वाभावसमानाधिकरणं सकर्तृकत्वं। नहि एवभूतं लाघवं प्रमाणानुग्राहकं क्वापि संप्रतिपन्नमस्ति तस्मादुक्तानुमानेन सकर्तृकत्वसिद्धौ कर्त्ता एकोऽनेको वेति संशयो लाघवतर्केण एकत्वकोट्युत्कटत्वं संपाद्यते प्रासादादिदृष्टांतवृत्तामनेकत्वकोटिं सर्वथा न निवर्तयति सा च श्रुत्या निवर्त्यत इति श्रुतिरेव तत्साधिका अनुमानं तु श्रुतितो लब्धबलं श्रुतेरेवानुग्राहकमित्यन्यत्। सोऽयं वनसिंहन्यायः।

किंचानेनानुमानेन न क्षित्यादौ कर्तृसामान्यनिश्चयोऽपि तृणादिष्व कृतत्वव्यवहारोपोद्बलिताप्रयोजकत्वशंकया व्याप्तिशैथिल्यात् किंच क्षित्यादौ कार्यत्वहेतोरसिद्धिः यदि श्रुत्यादितस्तत्सिद्धिस्तर्हि ईश्वरोपि तथैव सिध्यतु किमनुमानेन। नचसोप्यनुमानात्सिद्धस्तत्साधकहेतोरप्यनुमानांतरात्सिद्धावनवस्थापत्तेः सावयवद्रव्यत्वेन कार्यत्वानुमाने प्रकृतौ व्यभिचारः। किंचेदमनुमानं हिरण्यगर्भसिध्याऽयथासिद्धमिति दिक्।

तदेतदभिप्रेत्याह श्रुत्येत्यादि मानेनचेतिपाठः। तत्रैव वेदांतेष्वेव स्पष्टीकृतंचैतद्गुरुचरणैर्व्याससूत्रवृत्तौ तद्वक्ष्यतीत्यन्यत्र विस्तर इति

रस्सर्वगतो महान् ।

इत्युपक्रम्य—

नित्यानुबद्धमनसा देहकर्मानुपातिना ।

सर्वयोनिगतं विद्यादेकयोनावपि स्थितम् । इति ॥

देहनिर्वर्त्तककर्मणोऽनुपातः सम्बन्धो यस्य तादृशेन मनसान्तःकरणेन नित्यसम्बद्धं चेतनं सर्वयोनिगतमपि एकयोनौ स्थितं विद्यात् । तदन्तःकरणकर्मारब्धे देहे एव तदन्तःकरणधर्मान् गृह्णाति नान्यान्तःकरणधर्मान् नान्यदेहे इत्यर्थं तद्व्याख्यातारः । योनिर्देहः । एवं चानेके विभव आत्मान इति परास्तम् । एकवचनेनात्मन एकत्वस्य नित्यानुबद्धमित्यादिना औपाधिकभेदस्य च स्पष्टमेवाभिधानात् ।

परमार्थसारेऽपि पतञ्जलिराह—

यद्वाद्दिनकर एको विभाति सलिलाशयेषु सर्वेषु ।

तद्वत्सकलोपाधिष्ववस्थितो भाति परमात्मा ॥

इति । गीतायामपि—

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।

अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकम् ।

पृथक्त्वेन तु यज्ज्ञानं नाना भावान् पृथग्विधान् ॥

वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ।

यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम् ॥

---

एकयोनिस्थितत्वमाह तदिति । परमतं खंडयति एवंचेति । अस्यार्थं माहैकेति तत्र त्रयाणां मध्ये आद्येन । अस्य विशेषण माह सर्वेत्यादि- तदिद्दाति तियत् ज्ञानमितीत्यर्थः । तदेवाऽह ज्ञानेनेति शेषमाहान्वयो- पस्थितेष्वित्यस्यार्थो देहेष्विति । नानेति पृथक्पदमित्याह भावानित्यादि

अतत्त्वार्थवदल्पंच तत्तामसमुदाहृतम्। इति—

तत्राद्येन सर्वभूतेषु व्यष्टिसमष्टिरूपेण विभक्तेषु पृथगवस्थितमप्येकमव्ययं जन्मादिहीनं भावं चेतनमविभक्तमव्यावृत्तं येन ज्ञानेनेक्षते तज्ज्ञानं सात्त्विकमित्यर्थकेन चेतनैक्यमुक्तं। यदिति तृतीयार्थे। येन ज्ञानेन पृथक्त्वेन भेदेन स्थितेषु देहेषु भावान् चेतनान् नाना भिन्नान् पृथग्विधान् परस्परविलक्षणान् वेत्ति तद्राजसमित्यर्थकेन द्वितीयेनापि तदेव दृढीकृतम्। अन्त्येनापि बहुषु भूतकार्येषु सत्सु एकस्मिन् तत्कार्ये देहेऽन्तः करणे वा प्रतिमादौ वा कृत्स्नवत्सक्तम् परिपूर्णवत् स्थितं एतावानेवात्मेश्वरो वा नातः परं किंचिदस्तीत्याकारं हेतुहीनमतत्त्वभूतार्थविषयकमल्पं नित्यत्वाद्यग्रहात् एवं ज्ञानं तामसमित्यर्थकेन तदेव दृढीकृतम्। एवन्तत्तत्प्रतिपादकशास्त्राणां पुराणानां च तत्त्वं दर्शितमित्यन्यत्र विस्तरः।

एवं तदस्यां प्रहरणमिति क्रीडायां णः सोऽस्यनिवासः साऽस्मिन्पौर्णमासीत्येवं जातीयकेषु साऽस्यदेवतेत्युदाहरणे इव बोधनिर्णयो बोध्यः।

तेन प्रोक्तम्। नन्वत्र किं प्रोक्तत्वम्। नचाध्यापनेन प्रकाशितत्वम्। सुशर्मणाध्यापिते काठके सौशर्मणमित्यप्रयोगात्। नच कृतत्वम्। कृते ग्रन्थे इत्येव

---

शेषमाह बहुष्विति। तत् भूतं वस्तुतोऽतत्त्वाद्वृतिः। तस्यास्त्यर्थमाहैतावानिति अग्रे मतुबित्याहात्त्वेति। एवं ज्ञानत्रैविध्यवत्। तत्त्वं तद्भेदैः. त्रैविध्यं इदं सर्वं न व्याससूत्रादौ स्पष्ट मुक्तगुरुचरणैस्तदाहान्यत्रेति

एवं प्रागुक्तप्रकारेणैव प्रहरणंक्रीडैवक्रीडामात्रं वेति तेषुतेष्वपि

सिद्धेः। यद्यप्यर्थो नित्यो यात्वसौ वर्णानुपूर्वी साऽनित्या तद्भेदाच्चैतद्भवति काठकं कालापकमिति भाष्यात् प्रलयेषूच्चारयितृपुरुषाभावादानुपूर्वीविनाशेन पुरोत्पन्न ऋषयः संस्कारातिशयाद्वेदार्थं स्मृत्वा शब्दरचनां विदधति आनुपूर्वीभेदादेव ह्यर्थाभेदेऽपि केषुचित्काठकादिव्यवहारस्ततश्च कठादयो वेदानुपूर्व्याः कर्त्तारः प्रवक्तारश्चेति कैयटोक्तेश्च कृतत्वाक्षतेः। अर्थोऽत्र ईश्वरः तत्रैव मुख्यतया सर्ववेदतात्पर्यात्। 'वेदैश्च सर्वैरहमेव वेद्य' इति गीतोक्तेः। साऽस्यदेवतेति सूत्रोक्तमन्त्रवर्णादिभ्यश्च।

यत्तु ज्योतिष्टोमादिरूपोऽर्थः समानताम्रूपत्वान्नित्यः आनुपूर्वी तु भिन्नरूपत्वादनित्येत्यर्थ इति। तन्न। कृते ग्रन्थे इत्येव सिद्धे तेन प्रोक्तमिति व्यर्थमिति शङ्कायां ननु च नित्यानि छन्दांसि तेन तेषां कृतत्वाभावात्तेनासिद्धिरित्येकदेशिनोक्ते यद्यप्यर्थो नित्य इत्याद्युक्तम्। अर्थस्याकृतत्वेऽपि वर्णानुपूर्व्याः कृतत्वात्तेनैव सिद्धमिति तदाशयः। त्वद्रीत्या व्याख्याने तु तादृशानित्यत्वेऽपि कृतत्वाबाधात्तदुल्लेखो विफल एव स्यात्। अनित्यानि छन्दांसीत्येव च वदेत्।

था सति तत्रैवाह साम्येति दर्शितयाचाविति भावः। ननु छंदसां कर्तुरस्मरणेनानित्यत्वात्कथं कृतत्वमत आह यद्यपीत्यादि क्षतेरित्यन्तेन कैयटमाह प्रलयेष्विति कर्तारः प्रवक्तारश्च ननु केवलं प्रवक्तार। अन्यार्थश्चानित्यत्वादाहार्थोऽत्रेति उक्तभाष्ये इत्यर्थः। हेतौ हेतुमाह वेदश्चेति मंत्रेति इन्द्रमित्रमित्यादिमंत्रवर्णादिभ्यः साऽस्य देवतेति सूत्रोक्तयाख्यानावसरोक्तिभ्य इत्यर्थः।

प्राचां भाष्यव्याख्यानं दूषयति यत्त्विति उभयतुल्यत्वादित्यर्थः।

या त्वसौ वर्णानुपूर्वीत्यनेन सर्वबोध्यार्थानुपूर्व्या अपि संग्रहः । अनित्यत्वव्याप्यभेदेन तत् द्रढयति तद्भेदा-चेतीश्वरे तु न किञ्चिन्निरूपितो भेदः सर्वरूपत्वात्त-स्येति चेत् ।

न । माधुरेण प्रकाशितायां तदकृतायां वृत्तौ माधुरी-त्यस्य सिद्ध्यर्थमस्यावश्यकत्वात् । प्रोक्तशब्देन स्वकृ-तं परकृतं वा यत्प्रथमप्रकाशितं तदुच्यते । नच सुश-र्मादयस्तथा प्रकाशका इत्यदोषः ।

तत्र कठादयः संस्कारातिशयाद्वेदार्थं तद्बोधक-वैदिकशब्दानुविद्धमेव स्मरन्त्यतश्छान्दसशब्दावि-च्छेदः । आनुपूर्व्यंश एवान्यत्वं । यद्यपीदानीमानुपूर्वी-व्यत्यासेनाप्यदृष्टहानिस्तथापि तत्तपोमाहात्म्यात्त-त्कृतानुपूर्वीव्यत्ययो नादृष्टहानिकरः । भाष्ये वर्णानु-पूर्वीत्यत्र वर्णशब्देन पदमुच्यते आनुपूर्वीमात्रभेदो-क्त्या पदानि तान्येवेतिसूचितम् । तथाचस्मृतिः ।

प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते । इति ।

स्वयंभूरेष भगवान्वेदो गीतस्त्वया पुरा ।

---

अर्थैक्येऽप्याह भिन्नेति कृते इति यत इत्यादिः तादृशेति ज्योतिष्टो-माद्यर्थस्य समाननामरूपत्वान्नित्यत्वेऽपीत्यर्थः । तदिति यात्वसावि-त्यादीत्यर्थः । तुल्ययुक्त्या आह यात्वसाविति अपौनरुक्त्यमाह नित्य-त्वेति । तदिति अनित्यत्वमित्यर्थः ।

नन्वेतावता प्रकाशितत्वं प्रोक्तमित्यतिप्रसंगापत्तिरत आह प्रो-क्तेति । नच नहि । कृते इति सूत्रे तु यत्तेन कृतं नचतथा प्रकाशितं तदर्थं मथवाररुचं काव्यमिति तत्र स्मर्तॄणां मध्ये तत् कठादि ननु वर्णानुपूर्वीत्यनेन पदानामप्यनित्यत्वलाभात्कथं सदाविच्छेदोऽतआह भाष्ये इति कृतान्यतरव्युत्पत्त्येति भावः । अत्रोभयत्र हितयोगे षष्ठी

शिवाद्या ऋषिपर्यन्ताः स्मर्त्तारोऽस्य न कारका। इति ।

युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा। इति च॥

तत्राद्या स्मृतिरानुपूर्वीभेदादुपपन्ना। अन्त्ये चार्थनित्यत्वादुपपन्ने। तथा व्यासस्मृतौ—

सृष्टयादौ ब्रह्मणो वेदा मुखेभ्यश्च विनिर्गताः।
तत्रैव च लयं यान्ति प्रलये समुपस्थिते । इति ।

विष्णुपुराणेऽपि ।

द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने ।
वेदमेकं स बहुधा कुरुते जगतो हितः ॥
वीर्यं तेजो बलं चाल्पं मनुष्याणामवेक्ष्य वै ।
हिताय सर्वभूतानां वेदभेदान्करोति सः । द्वापरे इत्यस्य द्वापरेवृत्ते तत्सन्ध्यंशेष्वित्यर्थः ।

द्वापरे तु पुरा वृत्ते मनोः स्वायंभुवेऽन्तरे ।
ब्रह्मा मनुमुवाचेदं वेदान् व्यस्य प्रजापते ॥

इति वायूक्तेः ।

आद्यो वेदश्चतुष्पादः शतसाहस्रसंमित इति ।

शतशब्दोऽत्रानन्तवाची अनन्ता वै वेदा इति श्रुतेः। चतुष्पादः ऋग्यजुः सामाथर्ववेदरूपः तदाद्ये वेदे परस्परं श्लिष्टमिति तदाशयः ।

इति शाखाः प्रसंख्याताः शाखाभेदास्तथैवच ।
कर्तारश्चैव शाखानां भेदहेतुस्तथोदितः ॥

इति च तत्रोक्तम्। अतएव वीपुराणे स्वयंभूरेष भगवान् इत्यादिकमुक्त्वा ।

---

आर्षत्वात् उक्तमेव विशदयति वीर्यमिति स इतिपाठः। अविरोधा-

कथं देवी वेदमाता एतत्कौतूहलं मम
इति मनुप्रश्ने
इच्छाज्ञानक्रियाशक्तिर्देवीरूपा प्रकीर्तिता।
मातृका तु क्रियाशक्तिः क्रिया सा तमरूपिणी ॥
संप्रभूताष्टवर्गास्तु स्वरवर्णविभेदतः।
क्रियारूपा भवेद्देवी वेदमाता ततोऽभवत् ॥

इति ब्रह्मण उत्तरेण वर्णानां जन्यत्वे दन्तद्वारा वेदस्य जन्यत्वं च स्पष्टमेवोक्तम्। अतएवोंकारप्रभवा वेदा इत्यपि तत्रोक्तं, तदप्योंकारस्य सर्ववर्णसमष्टित्वादुपपन्नम्।

ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययम्।
छन्दांसि यस्य पर्णानि

इतिगीतावाक्यादपि छन्दसामनित्यत्वं स्पष्टं संसारवृक्षावयवत्वेन तेषां वर्णनात्। ईश्वरप्रतिपादकपुराणानान्तु वेदत एव ज्ञात्वा बुद्धिपूर्वं रचनमिति-विशेषः। 'तस्मात्तपस्तेपानाच्चत्वारो वेदा' अजायन्तेत्यादौ जनेः प्रादुर्भावमात्रमर्थो नत्वभूतप्रादुर्भावः।

यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहि-

---

याह द्वापर इति वृते मासे अस्यार्थमाह तदिति तत्र तदाभेदाभावादाह तदिति उक्तचतुष्टयरूपमित्यर्थः। तत्र विष्णुपुराणे अतएव आनुपूर्वीभेदादेवमग्रेऽपि उक्तमित्यत्रान्वयः। दिकं प्रागुक्तं मातृका उदिका क्रिये त्यस्यात इत्यादिः। तत्र देवीपुराणे।

तस्योपपत्तिमाह वपीति। संसारेति तद्रूपवृक्षेत्यर्थः तेषां च्छन्दसां। नन्वेवं पुराणादितुल्यतापत्तिर्वेदेऽत आहेश्वरेति। ननु तस्मादिति श्रुत्या वेदस्य जन्मप्रतिपादनादर्थस्यापि कथं नित्यत्वमत आह तस्मादिति आदिमा छंदासि जज्ञिरेतस्मादित्यादि। प्रहिणोति इदा-

णोति तस्मै ।

इति श्रुतेः । प्रदानं च तदर्थानुसन्धानानुकूलशक्तिदानमेवात्र बोध्यम् ।

अतएव सर्वेषान्तु स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥

इति वेदेभ्य एव सर्वज्ञानपूर्विका सृष्टिरुक्ता सङ्गच्छते । कठादीनां पुनरुत्पत्तिरपि तन्नामकत्वमात्रेण ।

कल्पे कल्पे विनश्यन्ति तन्नामानो भवन्ति च

इति देवीपुराणात् । अतएव व्यासादीनान्तत्तदधिकारान्ते मुक्तिश्रवणेन न विरोधः ।

अन्ये तु पदानां ज्योतिष्टोमाद्यर्थस्य च नित्यत्वं समतया प्रवाहनित्यत्वेन । तथाच व्याससूत्रं 'समाननामरूपत्वाच्चावृत्तावप्यविरोध' इति । आवृत्तौ आनुपूर्व्याः पुनरुत्पत्तावपि वेदस्य नित्यत्वेनाविरोधः समाननामरूपत्वात् । नाम्नां पदानां रूपाणामर्थानां च समानत्वादिति । एवंच नामरूपप्रवाहानुच्छेद एव नित्यत्वमिति तद्भावः । वेदोऽपि मायापरिणामविशेष एवेत्याहुः ईश्वरानिर्मितत्वेऽपि तन्निर्मितहिरण्यगर्भवेदवाक्यस्य स्वयंभूत्वं बोध्यम् । एवंच वक्तृपुरुषकलङ्कशङ्काराहि-

---

ति । इदमपि न पाठनरूपमित्याह प्रदानं चेति । अतएवादौ ब्रह्मणो वेददानादेव । एवं रीतिः कठादिषु न येनतेषामपि नित्यत्वापत्तिरित्याह कठेति । मात्रपदेन तत्स्वरूपस्य व्यवच्छेदः। अतएव नामोत्पत्तावपि स्वरूपस्यानुत्पत्तेरेव भाष्ये आनुपूर्वीमात्रभेदोक्त्या पदान्यर्थाश्च तएवेति ध्वनितं । तत्रोभयोस्तुल्यत्वं नतु प्रागुक्तभिन्नमिति तदर्थग्रहणेऽपि बाधकाभाव इत्याशयेनाहान्येत्विति । सृष्टितुल्यतामाह वेदोऽपीति ।

नन्वेवं कथं तस्य स्वयंभूरिति विशेषणं देवीपुराणे पूर्वमुक्तमत-

त्वेन वेदः प्रमाणमेव । किंच तदुक्तस्य धर्माधर्मफलस्य तत्फलतारतम्यस्य च लोके प्रत्यक्षतः कस्यचित्सुखित्वं कस्यचिद् दुःखित्वं कस्यचिल्लोकपालत्वं कस्यचित्स्वकुलपालकत्वमित्येवं रूपेणानुभूयमानतया प्रामाण्ये सिद्धे आयुर्वेदाद्यंशे चानुभवेन प्रामाण्ये सिद्धे इतरांशेऽपि प्रामाण्यमेव सिध्यति । तस्य किंचिज्ज्ञपुरुषाज्ञेयत्वाच्च न पौरुषेयत्वम् । योगिसामर्थ्यमपीन्द्रियविषयेष्वेवातिशयजनकं न धर्माधर्मादिप्रत्यक्षजनकं किंत्वतीतधर्माधर्मजनकक्रियाविषयमेव तेषां प्रत्यक्षन्तत्र तत्र स्मर्यते । किंच निर्दुष्टसर्वज्ञेश्वरश्वासप्रश्वासरूपत्वान्नतत्राप्रामाण्यशङ्का । अपौरुषेयत्वं त्विदं मया कर्त्तव्यमिति बुद्धिपूर्वकं यत्नेनाकरणात् । एतावतैवाकर्तृकत्वव्यवहारः । वेदजनकत्ववदेव च जगज्जनकत्वमीश्वरस्येति बोध्यम् ।

शाक्याद्यागमास्तु नैवं तेषां बुद्धिपूर्वं मोहनार्थत्वेन कृतत्वस्मरणात् । तदुक्तं सूतसंहितायाम् ।

श्रुतिः सनातनी साध्वी सर्वमानोत्तमोत्तमा ।

---

आहेश्वरेति । उसंहरति एवंचेति । तद्वदस्य तत्त्वेव चेत्यर्थः । एवेनाप्रामाण्यव्यवच्छेदः। अन्यथाप्याह किंचेति । तत् वेदः प्रामेति तदित्यादिः तस्य वेदस्य । नन्वेवं कथमपौरुषेयत्वमत आह किंचित् । नन्वेवमपि योगिश्रेष्ठत्वेन तत्त्वापत्तिरेवात आह योगीति । किंचेतिपाठः किंत्विति पाठे यत इत्यर्थः । अन्यथा तत्प्रामाह किंचेति । तत्र वेदे नन्वेवं पौरुषेयत्वापत्तिरेवात आहापौरुषेयत्वमिति । हारःसोपि । इमां युक्तिमन्यत्रातिदिशति वेदेति । एवंच तत्रकिंफलमित्यादिशंका न युक्तेति भावः ।

अतिप्रसङ्गस्तु नेत्याह शाक्येति । अत्रसर्वत्र संमतिमाहतदुक्त मिति अद्वैतरूपैर्नैर्मल्यं । ततः आत्मनः तस्या आवश्यकतामाहातीद्रियेति

प्राह चाद्वैतनैर्मल्यं निर्विकारत्वमात्मनः ॥
ततः सर्गादि चाप्याह चेतनाचेतनस्य च ।
अतीन्द्रियार्थविज्ञाने मानं नः श्रुतिरेव हि ॥
श्रुतिः सनातनी शंभोरभिव्यक्ता न संशयः ।
शंकरेण प्रणीतेति प्रवदन्त्यपरे जनाः ॥
यदा साऽनादिभूतैव तदा मानमतीव सा ।
स्वतश्च परतो दोषो नास्ति यस्माद् द्विजर्षभाः
अस्तिचेद्व्यवहारस्य लोप एव प्रसज्यते ॥
परतश्च न दोषोऽस्ति परस्याभावतो द्विजाः ।
स्वतोदुष्टोऽपि शब्दस्तु मानमन्याप्तसङ्क्रमात् ॥
इति वार्त्ता तु वार्त्तैव मुनीन्द्राः सूक्ष्मदर्शनाः ।
स्वतो दुष्टः कथं मानं भवत्यन्यस्य सङ्क्रमात् ॥
अन्ययोगेन यो भावो यस्य प्राज्ञाः प्रसिध्यति ।
स तस्य भ्रान्त एव स्यान्न स्वभावः कथंचन ॥
जपाकुसुमलौहित्यं विभाति स्फटिके भृशम् ।
तथापि तत्र लौहित्यं भ्रान्तमेव न वास्तवम् ॥
अन्यत्रान्यस्य धर्मस्तु प्रतीतो विभ्रमो मतः ।
आप्तापेक्षतया शब्दः प्रमाणं न स सर्वथा ॥

---

नः कर्मास्तिकानां। तस्यानित्यत्वपक्षमाह श्रुतिरिति। जन्यत्वपक्षमाह शंकरेणेति तत्राद्ये आह यदेति। चो व्युत्क्रमे परतश्च। तत्र स्वतो दोषाभावमाहास्तिचेति स्वतो दोषा इत्यस्यानुषंगः।

परमतं खंडयाति स्वत इत्यादि अपिरेवार्थं अत्र बोधविषयवार्त्तैव नत्वर्थसंभवः तदेवाह स्वत इति भावः। धर्मप्राज्ञा इति संबोधनं। एवं प्रागपि। भ्रांतः भ्रमविषयएव। तदेव विशिष्याह जपेति उपसंहरति अन्यत्रेति यत इत्यादिविभ्रमः सर्वथाभ्रमध्ययः आप्तेति अत इत्यादिः

अनाप्तयोगाच्छब्दस्य प्रामाण्यं मुनिपुङ्गवाः ।
तिरोभूतं स्वतःसिद्धं स्वनाशायैव केवलम् ॥
यदा सा शंकरेणोक्ता तदापि श्रुतिरास्तिकाः ।
प्रमाणं सुनरामाप्ततम एव महेश्वरः ॥
सर्वदोषविहीनस्य महाकारुणिकस्य च ।
सर्वज्ञस्य च शुद्धस्य कथं दोषः प्रकल्पते ॥
सर्वदोषविशिष्टस्य निर्घृणस्य दुरात्मनः ।
अल्पज्ञस्य च जीवस्य दृष्टो नास्ति हि सत्तमाः ॥
अतः पक्षद्वयेनापि वेदो मानं न संशयः ।
वेदोऽनादिः शिवस्तस्य व्यञ्जकः परमार्थतः ॥
अभिव्यक्तिमपेक्ष्यैव प्रणेतेत्युच्यते शिवः ।
ईश्वरस्य स्वरूपे च जगत्सर्गादिषु द्विजाः ॥
अतीन्द्रियार्थेष्वन्येषु मानं तु श्रुतिरेव हि ।
श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् ॥
निश्चयात्साधयेदर्थं प्रमाणान्तरमेव वा ।
मुने वेदो महेशोक्तः प्रमाणं सर्ववस्तुनि ॥
अन्यथा न जडःशब्दोऽतीन्द्रियार्थस्य साधकः ।
अत्यन्तमलिनानान्तु प्राणिनां वेदमार्गतः ॥
पञ्चरात्रादयो मार्गाः कालेनैवोपकारकाः । इति ।
तत्र वेदप्रामाण्यं साधयितुं शब्दमात्रस्य प्रामाण्यं

---

स स्वतोदुष्टः तर्हिकिमतआहानाप्तेति हे मुनिश्रेष्ठा शब्दस्य स्वतः सिद्धं प्रामाण्यं तत्संबंधात स्वनाशायैव तद्वाक्यनाशायैव केवलं तिरोभूतमित्यर्थः । द्वितीये आह यदेति । आप्तिराप्तता । उपसंहरति त-माद्ये आह वेद इति । द्वितीयस्यापि तात्पर्यमाह्वा भीति एवंव्यव-स्थितोत्पत्ति सञ्जयति इश्वरेति अस्योभयत्रान्वयः चो ह्युत्क्रमे प्रत्य-क्षादिप्रमाणान्तरं अन्यथा महेशोक्तत्वाभावे तत्र तयोर्मध्ये मात्रं का-

साधयन् शब्दस्य स्वतो दोषो नास्तीत्याहास्तिचेदिति । स्वतो दुष्टस्यैवाप्तसम्बन्धात्तद्गतप्रामाण्येन प्रमाणत्वमित्यसङ्गतमित्याह स्वतो दुष्टोऽपीत्यादि । तद्गतप्रामाण्यस्य भ्रमविषयत्वेन वस्तुसिध्यनियामकत्वापत्तिरिति भावः । किञ्च सापेक्षे शब्दस्य प्रमाणत्वे तदासत्वं केनचिदु मानेन ज्ञातव्यं तत्प्रामाण्यमपि मानान्तरेणेत्यनवस्था, तस्मात् स्वतः सिद्धमेव शब्दस्य प्रामाण्यमनाप्तबुद्धिप्रभवत्वरूपकारणदोषेण तिरोभूतं क्रियते इति न वञ्चकादिवाक्यस्य प्रामाण्यमिति भावः । ईश्वरो भोक्ता तद्रूपमेव ईश्वरस्याप्तत्वे मानमाह सर्वदोषविहीनस्येति । तत एव सर्वज्ञत्वन्तद्धीनत्वे च केनापि तद्दोषाद्यसाक्षात्कारात् । । शंकरकृतत्वं खण्डयति । ईश्वरस्य स्वरूपे चेत्यादि । ईश्वरश्चित्स्वरूपस्तन्निर्मितं जगत्तद्रूपमेव । जगत्तद्धोऽयं तथा प्रपञ्चो बाध्य ईश्वरज्ञानन्तद्बाधकं परस्परं च बाध्यबाधकभावः । तत्र विरुद्धकारित्वस्वभावमायावशादु इत्याद्यर्थेषु' श्रुतिरेव मानमेवञ्च तत्कृतत्वेन प्रामाण्य सिद्धिस्तस्य प्रमाणत्वे च तत्कृतेश्वरसिद्धिरित्यन्योन्याश्रय इत्यर्थः । अतएव देवीपुराणे

---

त्स्न्यें । अपिरेवार्थे इत्याहास्यैवेति पत्तेरिति पाठः ।

सर्वार्थेत्यनेन सूचितं दोषान्तर माह किञ्चेति । तद्योगेत्यर्थः । अनाप्तयोगादित्यस्यार्थमाह तस्मादिति (स्वनात्रायाह) न वंचकेति तत एव सर्वं दोषविहतीतत्वादेव ? । आदिसंग्राह्यमाहेश्वरो भोक्तेत्यादि । आदिनातींद्रियः अस्य तात्पर्य माह एवंचेति । तत्र श्रुतेरेव मानत्वे चेत्यर्थः । अतएव तस्य तदकृतत्वादेव सुहितस्तर्पकः । विशेषमाह

सुहितः प्राणिमात्रस्य शिवेन परमात्मना ।
खट्वां जिघांसता वत्स आयुर्वेदः प्रकाशितः ॥

इति शिवस्य तत्प्रकाशकत्वमेवोक्तम् । खट्वां खट्वासुरम् । शुष्कानुमानात्सात्सिद्धिर्नेत्याह श्रुतिसाहाय्येति । कुतर्कशङ्काकलङ्कग्रासादिति भावः । श्रुतिविरुद्धन्त्वनुमानमनुमानाभास एव । यत्पुनरनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः स इति न्यायभाष्योक्तेः । वेदमार्गतःसार्वविभक्तिकस्तसिःवेदमार्गेणेत्यर्थः हीनानामितिशेषः । पाञ्चरात्रादयः इत्यादिना शाक्यादयः । तेनैतेषां वेदतुल्यता निरस्ता । अत्यन्तमलिनानामित्यनेनोदितानुदितहोमवदधिकारिभेदेन-प्रामाण्यव्यवस्थोक्ता । शाक्याद्यागमानामप्यात्मज्ञानोपयोगितयात्यन्तमलिनान्प्रति प्रामाण्यमस्त्येवेति 'विरोधे त्वनपेक्षं स्या'दित्यधिकरणं भट्टपादैरप्युक्तम् ।

किञ्च वेदोक्तार्थे बाधनिश्चयाभावेन गुरुनरत्वेन चाप्रामाण्यकल्पनापेक्षया प्रामाण्यकल्पनैवोचिता प्रामाण्यस्य स्वतोग्राह्यत्वाच्च । एवं मानमात्रेऽपि । तस्यच मायापरिणामस्य वेदस्य समाधौ भगवानीश्वरोऽधिष्ठाता तेन चान्तर्यामितया व्यासः स इत्यस्माच्छन्दादेतदर्थबोधो भवत्वितिमायावृत्तिरूपा तदिच्छापि तन्त्रान्तर्भूनेति विवक्षाविवक्षयोर्निर्वाहः । मुने वेदो म-

श्रुतीति । पुनस्त्वर्थे सर्वथा तेषामप्रामाण्यम् नेत्याहात्यंतेति ।

अत्र भट्टसम्मतिमप्याह शाक्याद्येति । अपिवेदादि तत्प्रामाण्ये युक्त्यंतरमाह किञ्चेति । संशय सम्भवादाह निश्चयेति । युक्त्यंतरमाह प्रामेति । नवेदे एवंत्वर्थमित्याहैवमिति स्वतः प्रामाण्यमित्यर्थः । ननु वेदे विपक्षादि कथमत आह तस्य चेति तद्विशेषस्येत्यर्थः । समापस्म-

हेशोद्ध इत्यादिसूतसंहितोक्तेः ।

ब्रह्माधिकरणवार्त्तिकेऽपि ।

शब्दब्रह्मात्मनोऽप्येवं सर्ववेदानुसारिणः ॥

विवक्षाऽविवक्षा वा वक्तव्या विधिशक्तितः । इति

शब्दब्रह्मवादाभ्युपगमे तु ब्रह्मणोपि सर्ववेदात्मक देहाधिष्ठातृत्वाद्विवक्षाविवक्षे वक्तुं शक्ये । ते च विधिशास्त्रतो ज्ञायेते इत्यर्थ इति गणककृत् ।

प्रघट्टकान्तरेऽपि ।

शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते ॥

तदप्यधिष्ठितं सर्वमेकेन परमात्मना ।

तेषामन्तर्गतेच्छानां वाक्यार्थप्रतिपादने ॥

विवक्षा चाविवक्षा च ज्ञायते शब्दशक्तितः । इति ।

सन्सूत्रे भाष्येऽप्युक्तं सर्वं चेतनावादिति । यादृशी चानुपूर्वी कठादि कृता तज्जातीययैवाध्ययनं धर्महेतुः अन्यथा वाग्वज्रतयाऽनर्थहेतुः एतदभिप्रायेणैव श्रुतिरव्यभिचरितस्वरवर्णानुपूर्वीका इत्याहुः ।

अथाव्यत्ययाच्च पुरुषस्यास्वातन्त्र्यं वेदे सर्वदानुपूर्व्यप्येकैव केनाप्यकृतैवेति नव्यमीमांसकभ्रजाजाव्यन्तु तदर्थकस्य तदीयार्षवचसोऽनुपलम्भान्महाभाष्यकारादिवचनविरोधाच्चानादेयम्

---

दर्वाच्छन्नः । केवलस्यासम्भवात । सुः वेदे । अत्रमानमाह मुनेरुतिहृदमेव तद्विद्धत्वंकपि उक्तमितिशेषः। एवमग्रेऽपि। अतत्रैवाह प्रघट्टेति तेषां विधिशब्दानां याअंतर्गता इच्छास्ताभिः षष्ठी। तस्या नष्टत्वादाह तज्जातीति एवेनाभिप्रायान्तरनिरासः। उक्तरीत्या असम्भवात् आहुर्मीमांसकाः। चस्त्वर्थे।

परमतं दूषयति सर्वदेति जैमिन्यादेराशयस्योक्तत्वादाह नव्येति

वेदत्वन्तु सति सम्भवे शब्दार्थयोः पर्याप्तं स्तोभाक्षरेष्वर्थादर्शनात्सति सम्भवे इत्युक्तं। नित्यानि छन्दांसीति पूर्वपक्षे यद्यप्यर्थो नित्य इति महाभाष्योक्तेः। वैदिकार्थो वैदिकः शब्द इति व्यवहारस्तु तद्घटकत्वाद्बोध्यः। तत्र पठत्यादिसमभिव्याहारे वेदशब्दादुपस्थितयोः शब्दार्थयोर्मध्ये शब्दोऽर्थो विशेषणम्। क्वचिदर्थे शब्दो विशेषणं यथा वेदं व्याचष्ट इत्यादौ क्वचिदुभयं समं यथा वेदं जानातीत्यादौ। इदमेवाभिप्रेत्य शब्दार्थौ काव्यमिति प्रकाशकारैरुक्तम्।

अतएव शब्दमात्रतात्पर्यके तदनुकरणे न वेदत्वमिति मतौच्छ इति सूत्रे भाष्ये उक्तम्। अर्थभेदादन्यत्वनिश्चय इति च कैयटेनोक्तम्। अतएवानुकरणे न शुच्यादिदेशस्वाध्यायादिकालनियमः, नापि शुद्राणामनुकरणश्रवणे प्रायश्चित्तम्। बालैः पठ्यमाने वेदे शब्दमात्रतात्पर्यकत्वाभावेन वेदत्वमस्त्येव। अतएव देशकालनियमस्तत्र शिष्टानाम्। अनुकरणे तु शब्दमात्रतात्पर्यकत्वेन तदर्थबोधाभावे तात्पर्येण च न दोषः। अतएव न कस्याप्यनुकरणादर्थबोधः। मूर्खाध्यापकबालादीनां च व्युत्पत्त्यभावान्नार्थबोधो नै-

---

देयं दया दमंच क्वचित्तथैव पाठः।

विशेषमाह वेदत्वं त्विति स्तोभाक्षराणिगीत्यादीनि प्रसिद्धानि। ननु शुद्धशब्दपर्याप्तमेव कुतो नात आह नित्यानीति। नन्वेवं कथं भेदेन व्यवहारोऽत आह वैदिक इति तत् शब्दार्थोभयं तत्र तथा सति क्वचिदर्थमाह यथेति। एवमग्रेऽपि अत्र परसम्मतिमप्याहेदमिति प्रागुक्तसर्वमित्यर्थः। अत एव तस्योभयपर्याप्तत्वादेव एवमग्रेऽपि मात्रमवधारणे। अर्थबोधः नतु कार्यार्थबोधः। चस्त्वर्थे ततः बालाद्युच्चार-

लाक्षता बालैः पठ्यमानेऽर्थासंविधानं। व्युत्पन्नस्य त-तोऽर्थबोधात्।

केचित्तु अर्थभेदेन शब्दभेदवत् वेदमन्त्राणां वि-नियोगभेदेनापि भेद एव। तदुक्तं—

अन्या संस्कारगायत्री कर्मण्यन्या प्रयुज्यते।
अन्या जपप्रबन्धे सा सा त्वेकैव प्रतीयते॥

इति सादृश्यादेकत्वबुद्धिरित्यर्थः। वेदे तु सर्वेषां-मन्त्राणामुच्चारणमित्याहुः।

वेदत्वमखण्डोपाधिः प्रमाणशब्दत्वार्थबोधकत्व-घटितत्वं तु न वेदत्वम्। तत्र प्रमाणशब्दत्वमनङ्गी-कुर्वतां बौद्धानां वेदत्वव्यवहारात् स्तोभाक्षरेषु अ-भियुक्तानां वेदत्वव्यवहाराच्च। यत्किंचिच्छब्दानु-विद्धतदर्थस्य योगबलेन ज्ञानान्निबध्यमाना स्मृतिरि-ति भेद इत्यलम्।

तेन दीव्यति खनति जयति जितमित्यनेनाक्षै-र्दीव्यत्याक्षिक इत्यादाविकप्रत्ययः। अत्र तद्धितेन भासमानमपि देवनं न कारकान्वययोग्यक्रियारूपं अ-

---

णात् प्रबन्धः सांतत्यं। इवार्थमाह सादृश्यादिति। नन्वेवं कथं स-र्वेषां वेदत्वं पाठाभावादत आह वेदेत्विति। सर्वेषां मंत्राणां।

ननूभयपर्याप्तं वेदत्वं किं नामात आह वेदत्वमिति। इदं परम-तेन सिद्धांते तु जातिरूपमिति बोध्यम्। अत एवात्र न तात्पर्यं किं-तु सखण्डोपाधिखण्डने इत्याह प्रमाणेति प्रमाणशब्दत्वे सति अर्थ-बोधकत्वे सति उच्चार्यमाणत्वमित्यर्थः। तत्र वेदे द्वितीयविशेषणा-भावमाहस्तोभेति। इदं नान्यत्रेति सूचयितुं स्मृतिलक्षणमाह यत्किं-चिदिति। तदर्थस्य वेदार्थस्य। प्रयोगाभिप्रायेणाहैकेति।

अत्रभाष्यसंमतिमप्याहातएवेति तस्याक्रियारूपत्वादेवेत्यर्थः।

मष्टवाक्षिको देवदत्तमिति न । तदुक्तं भट्टैः—

यादृशी भावनाख्याते धात्वर्थश्चापि यादृशः ।
नासौ तेनैव रूपेण कथ्यतेऽन्यैः पदैः क्वचित् । इति ।

अतएव कर्तृकर्मणोरिति सूत्रे कृतीत्यस्य शक्य इति न प्रत्युदाहृतं भाष्ये । धातोः कर्तृकर्मणी तस्मात्च द्वये प्रत्ययास्तिङः कृतश्च, तत्र तिङ्योगे नलोकेतिनिषेधात्कृद्योग एव सिद्धेः कृद्ग्रहणवैयर्थ्यं च शाङ्कितम् । अधिका खारी द्रोणेनेत्यत्र तु हेतौ तृतीया अध्यारूढा खारी द्रोणेनेत्यत्रेव क्रियायोगाभावात् कर्तृत्वाभावेऽपि हेतुत्वसत्त्वात् सूत्रस्थे विग्रहस्थे च दीव्यतीत्यत्र कर्तृविशेष्यको बोध इति बहुव्रीहिप्रकरणे निरूपितम् ।

एवन्तदधीते तद्वदेत्यादावूह्यम् ।

तेन तुल्यं क्रियाचेद्वतिः । उपमेयस्य क्रियात्वे उपमानवाचकात्तृतीयान्तात्तुल्यमित्यर्थे वतिरित्यर्थः । नन्वेवं ब्राह्मणवदधीत इत्यादौ न स्यात् ब्राह्मणसादृश्यस्याध्ययनेऽभावात् इति चेन्न । ब्राह्मणादिशब्दानान्तत्कर्तृकाध्ययने लाक्षणिकत्वात् । सौष्ठवादिश्च साधारणो धर्मः । नच ब्राह्मणादिपदलक्ष्याध्ययनस्य विभक्त्यर्थान्वयित्वेन सत्त्वरूपतया न क्रियात्वमिति वाच्यम् । तुल्यस्य क्रियात्वे तृतीयासमर्थाद्वतिरित्यनेन तृतीयासमर्थस्य सामर्थ्यात् क्रियो-

---

अस्योत्तरयन्नान्वयः । धातोरिति अत्र विपरीतमुद्देश्यविधेयभावः । तस्माद्ध धातोस्तु द्वितये इति पाठः । तत्र तयोर्मध्ये । चो व्युत्क्रमे शंकितं च । नन्वेवं कथं द्रोणेनत्यत्र कर्त्तरि तृतीयात आहाधिकेति अ-

पमानत्वयोग्यार्थकत्वलाभेऽपि क्रियात्वलाभे माना-भावात्। स्थातव्येन तुल्यं गच्छतीत्यादावपि तृती-यार्थान्वयेन तस्य सत्त्वरूपतैव न मुख्यं क्रियात्वं। तिङन्तार्थस्य तु नोपमानत्वं नवै तिङन्तेनोपमानमस्ती-ति तत्सूत्रस्थभाष्यात् एवंचास्य क्रियान्वये एव सा-धुत्वम्।

अरविन्दवत्सुन्दरं मुखमित्यादौ भवतिक्रियाध्या-हारः। अरविन्दपदेन सुन्दरारविन्दभवनं लक्ष्यते। एवंच सुन्दरारविन्दभवनसदृशं सुन्दरमुखभवनमि-ति बोधः। अरविन्दमुखयोः सौन्दर्यधर्मकसादृश्यं तु व्यञ्जनया बुध्यते अतएव ब्राह्मणेन तुल्यमस्य रूपमि-त्यादौ न वतिः। तत्र तस्येवेति सूत्रं द्रव्यगुणादितु-ल्यार्थमित्यन्यत्र निरूपितम्।

मथुरावत्पाटलिपुत्रे प्राकारः मथुरायामिवेत्यर्थः। मथुरावत्पाटलिपुत्रस्य विस्तारः मथुराया इवेत्यर्थः। किंचेवार्थस्योपमानविशेषणतया तुल्यपदार्थस्य तद्वि-शेष्यतया बोधे भेदः। अत्र प्राकारयोरुपमानोपमेय-

---

भावात् अत्यन्तभेदात्। पुनस्तत्रान्यथा तदभावमाह नचेति। ननु अला-क्षणिके मुख्यक्रियासत्वेन साफल्यं कथं तत्र प्रवृत्तिरत आह स्थात-व्येनेति। अत्र मंत्वं साधारणो धर्मः। नन्वेवमपि तिङंते साफल्य-मत आह तिङंवेति। एवंच उक्तसूत्रार्थेच। अस्य आद्यवतेः। नन्वेवम-व्याप्तिरत आहारविन्देति। नन्वेवं तयोः सादृश्यधीरिष्टा कथमत आहारविन्देति ततः पश्चादितिभावः। अत एव क्रियान्वये एव सा-धुत्वादेव। नन्वेतेनैव सिद्धे उत्तरसूत्रं व्यर्थमत आह तत्रेति। अन्यत्र उद्योतादौ। तस्यैवोदाहरणे आहमथुरावदिति। बोधप्रयुक्त वैलक्षण्याद्रूपि सूत्रभेद इत्याह किंचेवेति।

भावः वृत्तौ मथुरादिपदानान्तदधिकरणकृतत्संबन्धिप्राकाराद्यन्तर्भावेण वृत्तिरिति केचित्।

परेतु षष्ठ्यर्थसप्तम्यन्तात्षष्ठ्यन्ताच्चायं साधुः। अधिकरणसप्तम्यन्तात्तु नायमसामर्थ्यादतएव तत्र तस्येव सूत्रस्थतत्रग्रहणस्येवशब्दयोगे षष्ठ्यर्थे सप्तमीज्ञापकतोक्ता भाष्ये। देवेष्विव मनुष्येषु नामेत्युदाहृतं च। तत्रैव देववन्मनुष्येषु नामेति साधु उपमानदेवसम्बन्धिनामाभिन्नं मनुष्यसम्बन्धि नामेति बोधः। मथुरावत्पाटलिपुत्रे प्राकार इत्यत्रोपमानमथुरासम्बन्धिप्राकाराभिन्नः पाटलिपुत्रसम्बन्धी प्राकार इत्येवं बोधे साधुत्वं अस्मादेव ज्ञापकादिवयोगे उपमानविशेषणादुपमेयविशेषणाच्च षष्ठ्यर्थे सप्तमी।

नचाधिकरणकारकस्य कर्त्रादिद्वारैव क्रियान्वय इति नासामर्थ्यमिति वाच्यम्। एवं ह्यस्तीत्यध्याहारावश्यकत्वेन क्रिययोरेव तुल्यत्वेन तेन तुल्यमित्येव सिद्धावस्य वैयर्थ्यापत्तेः। अतएव द्रव्यगुणतुल्यार्थोऽयमारम्भ इति भाष्ये ध्वनितं कैयटेन च स्पष्टमुक्तमित्याहुः।

मथुरापाटलिपुत्रयोः सादृश्यं त्वार्थम्। विधिवत्पूज्यते इत्यादौ विधिविषययोग्यताकर्तृहरिकर्मकं देवद-

---

केचिन्मतमाहाभ्रेति आधे इत्यर्थः। वृत्तौ तद्धिते इदमुपलक्षणं मन्त्येपीत्याह। तत्संबन्धिप्राकारादिति पाठः एकार्थीभावस्वीकारादित्यर्थः।

केचिदिति सूचितारुचिं प्रकाशयन् सिद्धांतमाह परेत्वित्यादिना अतएव असामर्थ्यादेव। प्रकृते आह मथुरेति उपमानमुपमेयम् च नामप्राकारादि। भाष्योपरि शंकते नचेति कर्त्रादीति तदन्वयेत्यर्थः।

सकर्मकं पूजनमिति बोधः। विधिशब्देन तदुक्तः प्रकारः। विधिमर्हतीति विग्रहः तदर्हमिति सूत्रेण वतिः। यथाविहितमध्वराय यथावत्स्थानमुपायेत्यादौ यथाशब्दो वृत्तिविषये शास्त्राद्युक्तप्रकारवाची। शास्त्रोक्तप्रकारकर्मकार्हताविधानकर्मीभूताध्वरसम्बन्धिने इत्युक्तप्रकारकर्मकार्हतावत्स्थानकर्तृवृत्तसम्बन्धिने इत्यादि प्रकारेण बोधः। राजवद्वृत्तमस्येत्यादौ राजयोग्यमेतद्वृत्तमिति बोधः। नत्वराजयोग्यमिति स्थर्थाप्रतीयते। एवं विनीतवदागमनं विच्छेदकृतवद्धस्तयदित्यादौ विनीतयोग्यमागमनं कृतहस्तानामिदं योग्यं छेदनमिति बोध इत्यलम्।

घटत्वमित्यादौ प्रकृत्यर्थसम्बन्धिप्रवृत्तिनिमित्तत्वादि वाच्यमिति सिद्धान्तः।

अत्र केचित्। संज्ञाशब्दे केवलं द्रव्यमेव शक्यं एवञ्च तत्र प्रवृत्तिनिमित्तरूपप्रत्ययार्थो दुर्वच इति मन्वानाः प्रकृतिर्लक्षणया शब्दपरा तत्स्वरूपेण प्रकारत्वाद्यर्थः स च प्रवृत्तिनिमित्तरूप एव जन्यबोधप्रकारत्वन्तद्विषयसंसर्गत्वं च संसर्गः। गोत्वमित्यादौ गोशब्दजन्यबोधप्रकारो गोत्वमित्यर्थः। राजपुरुषत्वमित्यादौ तज्जन्यबोधविषयः संसर्ग इति बोधः। शाब्दबोधे शब्दस्य भानमिति मतेऽपि शब्दस्य न प्रवृत्तिनिमित्तत्वमिति गोत्वमित्यादौ न गोशब्दप्रतीतिः।

---

हिस्त्वर्थे भाववदाह मधुरेति। यथा शब्द इति जातावेकवचनम्। आदिना नीतिः द्वितीये आह नीत्युकेति तच्छास्त्रेत्यर्थः।

अथ भावप्रत्ययार्थं निरूपयति घटत्वमित्यादि। लक्षणायां बीजमा

प्रवृत्तिनिमित्तत्वं यज्ज्ञानाच्छब्दस्यार्थे प्रवृत्ति स्तत्त्वमित्युक्तम्। तच्च घटादिषु जातिः, शुक्लादिषु गुणस्तद्गतजातिश्च, पाचकादिषु क्रिया तत्सम्बन्धो वा राजपुरुषौपगवादिषु सम्बन्धः। डित्थादिषु द्रव्यस्यैव विषयताश्रयेण भानाद्द्रव्यमेव प्रवृत्तिनिमित्तं। तस्यैव प्रकारतावैशिष्ट्येन भावप्रत्ययार्थत्वमिति प्रकृतिप्रत्ययार्थयोर्भेदः सुवचः। प्रकृतेः शब्दपरत्वाद् उक्तसम्बन्धस्य च नानुपपत्तिरिति वदन्ति।

सर्वत्र शब्दः शब्दार्थो वा प्रवृत्तिनिमित्तमिति मते तदेव त्वाद्यर्थ इति बोध्यम्।

अपरेतु भाष्यमते गुणसमुदायो द्रव्यमिति निरूपितम्। तत्र शब्दशक्तिस्वभावात्क्वचिज्जात्यतिरिक्तसमुदायो विशेष्यो जातिर्विशेषणं। क्वचिद् गुणातिरिक्तो विशेष्यः यथा शुक्लादिपदे, गुणस्तु तत्र विशेषणं। संज्ञाशब्दे कुशब्दादौ कादिव्यक्तिरेव शक्यतावच्छेदकीभूता न तु पुरूषत्वादीति ... कृत्यादीनुपलक्षणीकृत्य यः शुक्लवासाः स देवदत्त इत्यादाविव शुक्लव्यक्तौ शक्तिग्रहः।

नन्वेवं कुत्वमित्यादौ त्वाद्यनुपपत्तिः। प्रकृत्यर्थाभावादिति वाच्यम्। तत्र शब्दपरादर्थरूपे भावे प्र-

ह संज्ञेति डित्थादौ। प्रवृत्तिरिति घटत्वमित्यादौ सर्वेति भावः। विकल्पो लक्ष्यभेदेन व्यवस्थित इत्याह प्रीत्वमिति तत्र बीजमाह प्रवृत्तीति यत इत्यादिः। तच्च प्रवृत्तिनिमित्तं च। दिवु मतद्धितेषु वो व्युत्क्रमे तत्र तत्समुदायानां मध्ये। क्वचित् जातिशब्दे गवादौ रिक्तेति तेषां स इत्यर्थः। एवमग्रेऽपि विशेष्यशब्दो विशेष्यलिङ्गः गुणेति प्रसिद्धेरित्यर्थः। एवं क्रियाशब्देऽपि बोध्यं। कृत्येति पूर्वान्वयि। नन्वेवं कथं शक्तिग्रहोऽत आह य इति एवं शुक्लव्यक्तेः शक्यत्वे

त्ययेनादोषात् एवञ्च कुकुत्त्वशब्दौ पर्यायौ ।

अतएव तस्य भाव इतिसूत्रस्याभिप्रायाद्दित्थादि-प्रसङ्गमाशङ्क्य यस्य गुणस्य भावाद्द्रव्ये शब्दनिवेश-स्तदभिधाने त्वतलावित्युक्त्वा तस्यापि न्यासस्य डि-त्थादिष्वव्याप्तिः ततो व्यक्त्यतिरिक्तधर्माभानादि-त्याशङ्क्य व्यक्तेरेव विषयताद्वयेन भानात् प्रकारत्वा-वच्छिन्नव्यक्तिरेव त्वाद्यर्थ इत्येकं समाधानं कृत्वा यद्वा सर्वे शब्दाः स्वेनार्थेन भवन्ति स तेषा मर्थस्तद-भिधाने त्वतलावित्यनेन समाधानान्तरमुक्तम् । श-ब्दस्य द्विविधोऽर्थो वाच्यः प्रवृत्तिनिमित्तभूतश्च तदन्य-तराभिधाने त्वप्रत्ययइति तदर्थः ।

तत्र घटत्वमित्यादावन्त्यः । तत्र प्रकृतिरर्थपरै-व । आद्यः कुत्वंडित्थत्वमित्यादौ । तत्र प्रत्ययार्था-नुपपत्त्या प्रकृतिः शब्दपरा नत्वेतावता सर्वत्र प्रकृतिः शब्दपरा मानाभावात् लक्षणायां मानाभावाच्च । त-स्य भाव इत्यत्र तच्छब्दस्य शब्दमात्रपरत्वे गुणवच-नेति सूत्रे शब्दाधिकारापत्तेश्च । तद्धितप्रकरणे सर्वत्र तस्यापत्यमित्यादावर्थपरताया एव सत्त्वाच्च । एवञ्च प्रकृतिजन्यबोधे प्रकारः प्रवृत्तिनिमित्तभूतो घटत्वा-दिधर्मत्वेन त्वाद्यर्थः । प्रकृत्यर्थो व्यक्तिश्च स्वेतरास-म्बन्धित्वावच्छिन्ननिखिलस्वसम्बन्धिस्वसम्बन्धेन प्र-कारः । तस्य भाव इति सूत्रात् ।

---

तत्रैव तस्य तत्वे मानमाहात एवेति उक्तोऽर्थः । उक्तमित्यत्रान्वयः आदिना पदार्थादिगुणे धर्ममात्रं भावात्सत्यात् द्रव्यं विशेष्यभूतोर्थः वतो डित्थादितः पूर्ववाक्यतो लब्धं भाष्यीग्मेवाह यद्वेति । अस्यार्थ-

एवं घटत्वमित्यादितो घटसम्बन्धी धर्म इत्यादिरीत्या बोधः। घटत्वत्वमित्यादौ घटत्वसम्बन्धी धर्म इति। घटत्वत्वं चाविद्यकधर्मविशेषरूपम्। यद्वा व्याकरणे घटत्वपदजबोधे प्रकार इति सैव घटत्वत्वम्।

यत्तु घटेतरासम्बन्धित्वे सति निखिलघटसम्बन्धित्वमेव घटत्वत्वमित्यादेरर्थ इति तत्त्वत्यन्तगौरवग्रस्तम्।

रूपादिभ्यो गुणवृत्तिजातौ त्वादयः, शुक्लादिभ्यो गुणिपरेभ्यो गुणे, गुणपरेभ्यो जातौ अण्वादिभ्यो नित्यं परिमाणिवृत्तिभ्यः परिमाणरूपे गुणे। परिमाणं चतुर्धाऽणु महद् ह्रस्वं दीर्घं चेति त्वण्वादिवृत्तीत्यर्थकम्। जातिमात्रपरगवादिभ्यः शब्दस्वरूपे भावप्रत्ययः शब्दार्थयोरभेदाध्यासेन तस्यैव प्रवृत्तिनिमित्तत्वादिति कैयटः। शाबलेयस्य गौरिति तु न तथा व्यवहाराभावेन तत्र जातिपरत्वाभावात् गौर्नित्येतीष्टमिति तदाशयः।

एवं णत्वमित्यादौ वर्णानां वास्तवस्यौपाधिकस्य

---

माह शब्दस्येति। वाच्यः विशेष्यभूतः। तत्र तयामध्ये प्रागुक्तकैयटादिमतं दूषयति नत्विति। पूर्वमततो विशेषांतरमाहैवमिति तद्वदित्यर्थः। एवंचेत्यपाठः असंबद्धत्वात् अनतिप्रसंगायाह प्रकृत्यर्थ इति लाघवादाहाविद्यकेति। ततोऽपि लाघवादाह यद्वेति। नानार्थस्वं त्विष्टमेव।

परमतंखण्डयति यत्त्विति। एवं सत्यसंमतं परग्रन्थं योजयति परीति तदाशयमाहचेति। एकदेशिमतमाह वास्तवेति। सिद्धान्तमाहोपेति जातिरिति त्वादिवाच्येत्यादिः परमतंनचाहोपेति।

कैयट इति सूचितारुचिमाह परेत्विति। तत्राद्ये आह क्रियेति

वा भेदस्य सत्त्वाज्जातिः सूपपादा। उपाधिरूपभेदस्य वा तत्।

परंतु जातिपरगवादिभ्यो नैव प्रत्ययोऽनभिधानाद्। गोत्वत्वमितिवद्वा ततो बोधः। षत्वमित्यादौ कुत्व-शब्दवदर्थ एव प्रत्ययः ष इत्येवार्थ इत्याहुः।

नानात्वं यौगपद्यमित्यत्रापि नानादिशब्दजन्य-बोधप्रकारो सहभावो युगपद्भावश्चार्थः। पाचक औपगवो राजपुरुष इत्यादौ क्रियाकारकभावस्य विभक्त्यर्थसम्बन्धस्य च वृत्तौ प्रवेशाच्छब्दप्रवृत्तौ तस्यैव निमित्तत्वाच्च तत्रैव त्वादयः। तदुक्तं च हरिणा-कृत्तद्धितसमासेभ्यो भावप्रत्ययेन सम्बन्धाभिधानमिति। पाचकादौ क्रियया भेदस्यैव नियमेन प्रतीतेर्व्यभिचाराच्च क्रियासम्बन्धज्ञानादेव शब्दस्य द्रव्ये प्रवृत्तिः। जातिगुणयोस्तु लोकनिरूढत्वे सोऽयमिति प्रत्ययेन भेदनिबन्धनसम्बन्धस्य तिरोधानान्न तस्य प्रवृत्तिनिमित्तत्वम्। सर्वत्र समासादौ सम्बन्ध एव भावप्रत्ययं वदता हरिणा विभक्त्यर्थमात्रस्य षष्ठ्यर्थवत्सम्बन्धतया भानमिति सूचितम्। राजपुरुषा-

अन्त्ययोराह विभेति। न्यायसिद्ध एवायमर्थ इति सूचयितुमाह पाचेति। क्रियया सह। अनेन जातिगुणशब्दतुल्यतोक्ता। तदभावेऽपि तद्व्यवहारादाह व्यभीति तस्या इत्यर्थः। प्रवृत्तेः तथा च तत्र तस्यैव प्रवृत्तिनिमित्तत्वं तदेवाह जातीति तच्छब्दयोस्त्वित्यर्थः। धाना-न्न। तत्र सम्बन्धज्ञानाच्छब्दप्रवृत्तिर्द्रव्ये इतीति शेषः। तत्वं इति न तत्र भावप्रत्यय इति शेषः। संसर्गस्य सांसर्गिकविषयतया भानेऽपि उक्तरीत्या तत्वं न बाधकमन्यथादित भावः।

सर्वत्र वक्ष्यमाणमिन्न। मात्रं कात्स्न्र्ये अन्यथाऽक्षशौण्डत्वं कृष्ण-

दावपि राजादिसम्बन्धज्ञानादेव शब्दस्य प्रवृत्तिरित्यूह्यम् ।

इदमपि प्रायिकं कृष्णसर्पत्वं पटे शुक्लत्वं सरोत्यादौ जातिगुणप्रकारकबोधस्यैवानुभवात् । तदुक्त- 'मन्यत्र रूढ्यभिन्नरूपाव्यभिचरितसम्बन्धेभ्य' इति । तत्र कृष्णसर्पत्वमित्यादौ रूढिः, शुक्लत्वमित्यभिन्नरूपं, पटः शुक्ल इति व्यवहारात् । सरोति तृतीयं नहि सत्सरयोःसम्बन्धः कदापि व्यभिचरति इति बोध्यम् । नीलघटत्वमित्यादौ नीलघटादिवृत्तिधर्मो घटत्वादिकमेव स्वार्थः तदेव च नीलघटादिशब्दानां प्रवृत्तिनिमित्तं नीलादिविशेषणबलाच्च तेन रूपेण नीलादिव्यक्तीनामेव भानेन नीलसमानाधिकरणघटत्वाद्येव प्रवृत्तिनिमित्तत्वेन भासते उपाधिभेदाच्च घटत्वादीनामपि भेदः । नत्वत्र सम्बन्धो भावप्रत्ययार्थः । अभिन्नरूपत्वेन पूर्वोत्तरपदार्थयोर्विशेष्यविशेषणभावातिरिक्तस्य तस्याभावात् ।

एतेन प्रवृत्तिनिमित्तगुणजात्योः सामानाधि-

---

श्रितत्वं वृकभीतत्वमित्यादौ तदनुपपत्तेः औपगवादावपि तथेत्याहेत्थमिति । तदुक्तमिति तदप्युक्तं तेनैवेत्यर्थः । तत्र तेषां मध्ये आदिना दामोदरत्वादि । इति इत्यादि क्वचित्तथैव पाठः । सत्पदं सताऽभेदेनैव बोधकं नतु सत्तासम्बन्धेन सत्ता तु कर्तृत्वारोपेणाविकाश्चित् ।

मध्यमस्योदाहरणांतरमाह नीलेति । नन्वेवमन्यस्यापि बोधापत्तिरतआह नीलादीति चस्त्वर्थे । तेन घटत्वादिना । अत्र नीलघटत्वमित्यादौ । तस्य सम्बन्धस्य अभेदस्य तु न तत्त्वमित्युक्तं । अभ्युपेतेनेत्यस्यार्थमाह तस्येति सामानाधिकरण्यस्येत्यर्थः ।

करणं तदुत्तरभावप्रत्ययार्थ इत्यपास्तम्। तस्य स्व-
प्रत्ययप्रकृतितो भानाभावात्। भानसत्त्वेऽपि तस्य वि-
शेष्यावृत्तितया प्रवृत्तिनिमित्तत्वाभावेन भावप्रत्य-
यवाच्यत्वे मानाभावात्। नीलघटत्वसमुदायः प्रवृत्ति-
निमित्तमित्यपि केचित्। घटत्वादित्वमित्यादौ जाति-
समुदायस्तद्वाच्यस्तत्र तस्यानुद्भूतावयवत्वे एकवच-
नमुद्भूतावयवत्वे द्विवचनाद्यपि।

ये त्वपेक्षावादिनो दण्डीत्यादाविनो द्रव्यमात्र-
वाचित्वं प्रकृत्यर्थस्य च तत्रान्वयः, सम्बन्धश्च वा-
क्यार्थविधया लभ्यः। एवं पाचक इत्यादावपि प्रकृत्य-
र्थत्वेनानुगतीकृतं दण्डाद्युपलक्षणीकृत्य अनन्तेष्वपि
द्रव्येषु शक्तिग्रहसम्भव इति वदन्ति। तन्मतेऽपि स-
म्बन्धस्यैव शब्दप्रवृत्तावुक्तरीत्या निमित्तत्वात्तत्रैव
भावप्रत्ययः सुलभः। सम्बन्धस्य विभक्तिवाच्यत्वा-
त्प्रकारतया भानमिति तु न युक्तम्। सांसर्गिकविष-
यतया भासमाने एव सम्बन्धपदप्रयोगात्। वाच्य-
स्यापि षष्ठ्यादिभिः संसर्गतया भानस्य सर्वसंम-
तत्वात्।

---

पेत्याह भामेति। कोचिदित्यनेन गौरवमरुचिः सूचिता। इदमप्युपल-
क्षणमित्याह घटेति। तत्त्वादि। तत्र उक्तप्रयोगे। तस्य तत्समूहस्य।
वभेदत्वे इत्युभयत्र पाठः। द्यपि अतएवोदात्तानुदात्तत्वे वर्णधर्मावि-
त्यादिप्रयोगसङ्गतिः। ये मीमांसकाः। लभ्य इति एवञ्च न तत्र
शक्तिः। नन्वनन्तद्रव्येषु शक्तिग्रहासम्भवोऽत आह प्रकृत्यर्थेति
दण्डादेर्नानात्वेन तेन तद्वृत्तिजातिरपि दण्डत्वकुण्डलत्वादिरूपाने-
कावधीति तया तदसम्भवादेवमुक्तं। प्रकेति त्वान्तादिनेति भावः।
युक्त्यंतरमाह वाच्येति। नतीयान्तं पूर्वान्वयि तत्वाच्चेति पाठः।

यत्तु तत्तद्रूपेण धर्माणां शक्यतेति । तन्न । शक्त्यानन्त्यापत्तेः किंच तस्यापत्यमित्यादिशास्त्रात्प्रथमोपगवादीनामुपगवपत्यत्वेनैव बोधकता नतु तत्तद्रूपेण । तथा तस्य भाव इति शास्त्रबलादस्यापि धर्मत्वेनैव बोधकतेत्यस्यौचित्यात् । अतएव घटवृत्तिर्धर्म इति बोध इत्ययुक्तम् । घटे घटत्वमित्यादेरनापत्तेश्चेति प्राहुः ।

पञ्चानां पूरणः पञ्चमः पञ्चसंख्यान्वयपञ्चत्वसंख्यापूरण इति बोधः, उद्भूतावयवभेदः समूहः प्रकृत्यर्थः, अवयवः प्रत्ययार्थः । वृक्षस्यावयवो वार्क्षी शाखेतिवत् ।

तदस्यास्त्यस्मिन्निति मतुप् । वर्त्तमानकालोऽत्र विवक्षित इति भाष्ये स्पष्टम् । अतएव गवामतीतत्वेऽनागतत्वे वा मतुपो न साधुत्वम् ।

यद्यपि बुद्धिसत्तासमाविष्टस्यैव शब्देन बोधात्सार्थेऽव्यभिचारिणी, तथाप्यस्तीत्युपादानसामर्थ्याद्त्र बाह्यसत्तैवास्तिपदेनोच्यते । नचसाऽसद्धा बुद्धिस्थत एव बहिःसत्तातदभावप्रत्यायनाय वृक्षोऽस्ति नास्तीत्यादिप्रयोगात् । एवंच गोमानित्यतो वर्त्तमा-

---

पूर्वमतं दूषयति । यात्वति नन्वानन्त्यं तथापीत्यत आह किंचेति । अस्यापि त्वादेरपि । अयंभावः प्रत्ययस्य शक्तिग्रहो न लोकतः तन्मात्रस्य लोकेऽप्रयोगात् किन्तु शास्त्रतः तच्च सामान्यरूपेणैव तद्ग्राहकमिति । अतएव तस्य भाव इति सूत्रोक्तेरेव । अन्यथा तत्र भाव इत्येव ब्रूयात् ।

वस्तुतस्तु धर्मत्वे न शक्तिरित्यस्य युक्तत्वेन तत्र तावदंशस्यायुक्तत्वेऽपि पक्षान्तरतया शब्दपरत्वं प्रकृतेः सर्वत्रेति कैयटादिकमपि युक्तमेवेति प्रपञ्चितं तत्सूत्रे एव कौस्तुभपूरणे । एवंचागत्या शब्दाधिकारणाग्रे निर्वाहः । आवश्यकमिदं भवतामपीति बोध्यं ।

पुत्रपत्यमयोरौत्सर्गिकप्रवृत्त्या निर्देशेन शास्त्रसङ्कोचे मानाभावेन

नसत्ताश्रयगोसम्बन्धीति बोधः । गोमानासीद्भवितेति तु बाह्यसत्ताविशिष्टगोसम्बन्धरूपाया गोमदवस्थाया नाशेन भावित्वेन वा तादृशावस्थाविशिष्टस्य गोमतोऽतीतत्वेन भावित्वेन वा नेयम् । यद्वा तादृगवस्थागतातीतत्वादेर्गोमत्यारोपः । एवमेव जीवत्येव तस्मिन्नीश्वरोऽयमासीत् शिखी नष्ट इत्यादेरुपपत्तिः ।

यत्तं तु गवाद्यमतश्चातीतत्वमन्यत्र यद्यपि गोषु वर्त्तमानसत्ताश्रयत्वं नास्ति, अतीते सम्बन्धिनि वर्त्तमानगोसम्बन्धश्च नास्ति, तथापि ज्योतिष्टोमयाज्यस्य पुत्रो भवितेत्यादौ यथा यागगतातीतत्वस्य त्यागो भावित्वप्रतीतिश्च भवितेत्येतत्समभिव्याहारात्तथा प्रकृते गोसत्तायां वर्त्तमानत्वत्यागोऽतीतत्वादिप्रत्ययश्चेत्यदोषः । यद्वा सर्वत्र तथाव्यवहारविषये गोमत्पदस्य लक्षणेति कैयटे स्पष्टम् ।

यद्वेति पक्ष एवात्र युक्तः एवंच सम्बन्ध आश्रयश्चेत्युभयं समुदायशक्यं सम्बन्ध एव प्रवृत्तिनिमित्तम् । यद्वा आश्रयाभेदमापन्नः सम्बन्ध एव शक्यः नच सम्बन्धस्य शक्यत्वे दण्डसम्बन्धसम्बन्धीति बोधापत्तिरिति वाच्यम् । संसर्गविधयैव तस्य शक्यत्वात् ।

---

तयोरविवक्षां हृदि निधायाह वर्तेति । सा बुद्धिः सासा बाह्यसत्ता अस्तीति च प्रकृत्यर्थविशेषणं तदाहैवंचेति । उपगवीति च पाठः अग्रे यथा संख्यायामन्वयः । लाघवादाह यद्वेति गोमानासीदितीष्टप्रयोगस्तत्र न स्यादित्याशयेनाह यद्यपीति प्रधानानुरोधेन गुणस्यान्यथानयनमिति न्यायेनाह यथेति । सर्वत्र अतीतत्वे वर्तमानत्वे भावित्वे च ।

सूत्रभाष्यस्वरसादाह यद्वेतीति । लाघवादाह यद्वेति । तेभ्यः

ये गुणगुणिनोः समानरूपा एव लोके प्रयुज्यन्ते शुक्लादयस्तेभ्यो मतुपो लुगुक्तो वार्त्तिककृता गुणवचनेभ्यो मतुपो लुगिति ।

यत्तु—

संसर्गिभेदकं यद्यत्सव्यापारं प्रतीयते ।
गुणत्वं परतन्त्रत्वात्तस्य शास्त्रे उदाहृतम् ॥

इति । तत्तु 'यस्य गुणस्य भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ'वित्यादावुपयुक्तम् । तदर्थस्तु संसर्गि आधारेण संबद्धं, भेदकं स्वाश्रयस्येतरतो भेदकं सव्यापारमवच्छेदकत्वेन प्रतीयमानम् । तेनावच्छेद्यद्रव्यानिरासः । यद्यदिति वीप्सया जात्यादेरप्येवंभूतस्य गुणत्वमुक्तम् । परतन्त्रत्वादित्यनेन तद्व्यवहारप्रयोजकमुक्तं, परन्तन्त्रो हि लोके गुण इत्युच्यते ।

यद्यपि गुणगुणिनोः सोऽयमित्यभेदाध्यवसायेन लुकं विनापि शुक्लः पट इत्यादिसिद्धिः । तथापि पटस्य शुक्ल इति भेदव्यवहारस्यापि सत्त्वात् शुक्लवानित्येतन्निवृत्त्यर्थं लुग्वचनम् । एवं चास्य गुणिनि यौगिकत्वात्सर्वलिङ्गत्वं, रूढत्वे तु गुणगुणिनोरुभयोरपि सर्वलिङ्गत्वं नियतलिङ्गत्वं वा स्यात् ।

अयञ्च लुग् द्रव्यवाचकसमभिव्याहार एव प्रकरणादिना तदवगतौ वा । ध्वनितं चेदं पूरणगुणेतिसूत्रे

---

गुणपरेभ्यो गुणिपरत्वाय वार्तिकस्य नैतानि लक्ष्याणि तत्र तेनान्यग्रहणमिति निरवकाशं स्यादिति । संसर्गीति भिन्नपदमित्याह संसर्गीति । शुक्लेति पाक्षिकेत्यादिः । एवंच वार्तिकसत्त्वं च । अनतिप्रसंगाय विशेषमाहायञ्चेति समभिव्याहारेऽपि सामानाधिकरण्येन अतएवान्यस्य शङ्कायामाह प्रकृतेः ध्वनितमिति तत्र हि द्विजस्य शुक्ला इत्यत्रा-

भाष्ये । गुणिलिङ्गास्तु तद्वतीति कोशस्य मतुब्लुका ऽभेदेन वा तद्वति वर्त्तमाना इत्यर्थः । यदित्वनभिधानादेव ततो मतुबाद्यनुत्पत्तिः सर्वलिङ्गत्वमप्यभिधानस्वभावादेव, तदा व्यर्थं लुग्वचनम् । जातेस्तु घटादिशब्देभ्यो न कदापि द्रव्यादू भेदेन बोधः । शाबलेयस्य गौरिति प्रयोगाभावादिति न तेभ्यो द्रव्ये मतुबादीत्याकरे स्पष्टम् ।

प्रकारवचने थाल् । प्रकारोऽत्र न सादृश्यमन्यथा सर्वथेत्यादौ तदप्रतीतेः, किन्तु सामान्यस्य भेदको विशेषः प्रकारः । बहुभिः प्रकारैर्भुङ्क्ते इत्यतो बहुभिर्विशेषैरित्यर्थप्रतीतिर्यथा हरिस्तथा हर इत्यादौ यद्विशेषधर्मवान्हरिस्तद्विशेषधर्मवान्हर इति बोधः, हरिसदृशो हर इति तु फलति । यत्तद्भ्यां तयोः प्रकारयोरैक्यावगतौ तादृशैकधर्मेण निमित्तेन मानसस्य तथाबोधस्याङ्गीकारात् ।

वचनग्रहणाच्चात्र जातीयर्विधौ स्थूलादिभ्यः प्रकारवचने कनित्यत्र च प्रकारवान्प्रत्ययार्थः । थाला जातीयरादेर्बोधस्तु न तथाजातीयक इत्यादि भाष्यप्रयोगात् । एकधा तु कुर्वित्यादेरेकप्रकारं कुर्वित्यादिप्रकारेण बोधः । अनेकराशीनैकध्यं कुर्वित्यत्रैकत्वसंख्याविशिष्टं कुर्विति बोधः । सहितं कुर्विति फलति ।

---

सामर्थ्यं प्रकरणादिना निरस्तं ।

नन्वेवं तत्र रूढिप्रतिपादककोशविरोधोऽतआह गुणीति । ततः गुणपरात् । अन्यत्र लुगकरणे बीजमाह जातेस्त्विति अत्र मानमाह- बहुभिरिति चस्त्वर्थे । संख्याया विधार्थे धेत्यस्य विषये आह एकधेति ।

वैयाकरणपाशः कुत्सितवैयाकरणस्थवानित्यर्थः एकदेशसम्बन्धोऽत्र शब्दशक्तिस्वभावात् । एवमन्यत्रापि । प्रवृत्तिनिमित्तकुत्सायामेवायम् ।

अयमेषां शुक्लतम इत्यादावतिशायने तमबिष्ठनौ अतिशायनं प्रकर्षः, स्वेतरस्य न्यूनीकरणरूपोऽभिभवस्तत्र वर्त्तमानात्प्रत्यय इत्यर्थः । तेनाभिभवकर्तृत्वद्योतको य इतराभिभवकर्त्ता शुक्ल इत्यादिरीत्या बोधः यद्यपि द्रव्ये न स्वतः प्रकर्षस्तथापि प्रवृत्तिनिमित्तभूतगुणादिगतप्रकर्षेण परंपरया द्रव्यस्यापि प्रकर्षः । पाचकतर इत्यादौ प्रवृत्तिनिमित्तसम्बन्धप्रतियोगिक्रियागतप्रकर्षेण प्रकर्षो बोध्यः, अयमेव च द्रव्यप्रकर्ष उच्यते ।

अतएवोच्चैस्तरस्तरुरित्यादावाम्, उच्चैस्तमामित्यादौ त्वधिकरणशक्तिप्रधानतया तस्या एव प्रकृत्यर्थगुणप्रकर्षेण प्रकर्ष इत्याम् भवत्येवाद्रव्यप्रकर्षसत्त्वात् । तत्र शुक्लगुणानां नानात्वे एकनिष्ठस्यापरगुणाभिभावकत्वं स्पष्टमेव । सर्वाश्रयेष्वेको गुणः सावयव इति मते क्वचिदाश्रयेऽल्पं क्वचिदधिकमिति स्वाश्रिताल्पत्वाधिकत्वाभ्यां भेदारोपेण तदुपपत्तिः । एकं नि-

---

याप्ये पाशबित्यस्य विषये आह वैयेति । अन्यत्रापि स्वार्थिके । मानादिति प्रातिपादिकात्स्वार्थे इति शेषः । इतरत्वं प्रकृत्यर्थापेक्षया द्रव्ये प्रकृत्यर्थे प्रकर्ष उक्तरूपः । प्रवृत्तीति स्वरूपमात्रेण शुक्लादिव्यवहाराविषयत्वेऽपि यथाश्रितेन गुणरूपेण तद्व्यवहारविषयत्वा तथाप्रवृत्तिनिमित्तरूपतद्गुणगतप्रकर्षेण परंपरया तस्यापि प्रकर्ष इत्यर्थः । अत्र द्रव्यवत् प्रवृत्तिनिमित्तसम्बन्धस्यापि तदभावादाह प्रवृत्तीति । अधीति उच्चैरित्यस्य । तस्याः शक्तेः । प्रकृत्यर्थगुण

त्वं निरवयवं चेति मतेऽपि औज्ज्वल्यादिगुणान्तरेण मिश्रणात् शुक्लस्य प्रकर्षः कृष्णादिमिश्रणे त्वपकर्षः यथा जात्युत्पलादिवासितमल्लिकाया गन्धप्रकर्षः। एवं रसगन्धस्पर्शादिष्वपि बोध्यम्।

गोतर इत्यादौ प्रवृत्तिनिमित्तभूतजातेः प्रकर्षाभावेऽपि तत्सहचरितवाहदोहादिगतातिशयमादाय प्रत्ययो यथाप्रयोगं बोध्यः। द्व्यादिभ्यस्तु न प्रत्ययस्तदर्थे प्रकर्षाभावात्। बहुशब्दात्तु भवत्येव संख्याधिक्यकृतातिशयस्य तत्र वक्तुं शक्यत्वात्।

बहूनां मध्ये एकस्यातिशये तमबादिः द्वयोरेकस्यातिशयेऽर्थद्वयप्रतिपादकशब्दे उपपदे तरबादिः। यथायमनयोः पटुतरः। अस्माकं च देवदत्तस्य च देवदत्तोऽभिरूपतर इति बह्वर्थके विभागप्रतियोगिन्युपपदे तरबादिरेव, उदीच्याः प्राच्येभ्यः पटुतरा इति यथा। सांकाश्यकानां पाटलिपुत्रका अभिरूपतमा इत्यत्र बहूनामेव प्रतीतेस्तमप्। राश्यपेक्षं द्वित्वं तु न शब्देनोपात्तम्। पटु भवान्पटुरासीत्पटुतरश्चैषम इत्यादावेकस्यैव द्रव्यस्य गुणभेदेन भेदमारोप्य तरप्, गुणान्तरयोगेऽन्यो भवान्संवृत्त इति व्यवहारात्।

---

उन्नतत्वं। तत्र तत्प्रयोगे शुक्लेति तदादीत्यर्थः। एकः एक एव। गुणः शुक्लादिः। मत सांख्यमते अल्पं रूपं।

अस्याश्चर्यत्वं नेत्याह यथेति। प्रवृत्तीति द्रव्यवदित्यादिः। अनतिप्रसङ्गायाह यथाप्रयोगमिति संख्यायाः सर्वत्र परिच्छेदकत्वाविशेषादाह तदर्थे इति॥ तमबादिरिति वैपरीत्यमपि क्वचित् बहुष्वासीनेषु कश्चित्कंचित्पृच्छति कतरो देवदत्त इति प्रत्यय इति सूत्रस्थभाष्यप्रयोगात्। नोपात्तमिति अतो न तरप्। एवमन्यत्वे मा-

क्वचित्प्रकृत्यर्थगतप्रकर्षे तरप्। यथा नतरामित्यादौ। तत्र हि प्रतियोग्यसमानाधिकरणस्वरूपमात्यन्तिकत्वमभावगतः प्रकर्षः। एवमेव घटस्य शुक्लतरो रूपमित्याद्युपपत्तिः। प्रकृत्यर्थविशेष्यगतप्रकर्षासम्भवे तु प्रवृत्तिनिमित्तादिगतप्रकर्षे तरप्। एवं द्योत्यार्थप्रकर्षे द्योतकात्तरप् नितराङ्गच्छतीत्यादौ।

गुडकल्पा द्राक्षा बहुगुडो द्राक्षेत्यादौ गुडादिशब्दानां सादृश्याद्द्राक्षायां वृत्तिस्तत्र सादृश्यप्रयोजकस्य माधुर्यादेरीषदसमाप्तिर्गम्यते। तेनेषत्सादृश्ये प्रत्ययाभावः। अत्र सर्वत्रोपमा गम्या। गुडगतमाधुर्याश्रयेण द्राक्षायां गुडत्वारोपात् गुडत्वजात्यभावाच्चेषद समाप्तं गुडत्वं द्राक्षायामिति गुड इयं द्राक्षा गुडकल्पा द्राक्षेति प्रयोग इत्यन्ये।

नच सादृश्यरूपेषदसमाप्तिः प्रत्ययार्थ एवास्तु गुणगुणिनोर्नियमतोऽभेदोपचाराच्च पटुकल्पश्चैत्र इत्यादिसिद्धिरिति वाच्यम् सादृश्यस्य द्राक्षाश्रयत्वे बहुगुड इत्यस्यानापत्तेः। गुडाश्रयत्वेऽनुभवविरोधाद् गुडकल्पेत्यादिप्रयोगासिद्धेश्च। स्वार्थिकत्वे तु प्रकृति-

---

नमाह गुणांतरेति। क्वचित्विति पाठः। प्रकर्षे तत्रैव। एवमेव प्रकृत्यर्थगतप्रकर्षेणैव तत्रैवाह प्रकृत्यर्थेति। एत्रं उक्तेमानमाह शुक्लेत्या।

ईषदसमाप्तौ विभाषासुपइत्यनयोर्विषयेष्वाह गुडेत्यादि। अत्रेति यन्निरूपितसादृश्यप्रयोजकधर्मस्येषदसमाप्तिस्तद्वाचकात्कल्पादयः। एवंच पूर्णः पटुः कश्चित्, तत्सादृश्यादपरः पटुप्रचुरः। साहश्यं पटुकल्पादिशब्दगम्यमितिसर्वत्रोपमा गम्येत्यर्थः।

मतान्तरमाह गुडेति. चस्त्वर्थे। प्रकृतिते इति स्वार्थिका इति

तो लिङ्गवद्लिङ्गमौ सिद्धौ । उपमानगुडाभिन्ना द्राक्षेति बोध इति परे ।

पाचकक इत्यादौ कुत्सिते इति कः, कुत्सितपाचकत्ववानित्यर्थः । प्रवृत्तिनिमित्तकुत्साया असम्भवेऽश्वक इत्यादौ तत्सहचरितधर्मान्तरगतकुत्साश्रयः प्रत्ययः । कुत्सितक इत्यादौ यदा कुत्सितत्वं कुत्स्यतेऽस्य सम्यक् कुत्सितत्वं किंतु वान्तुमिर्द्वेषेणारोपितमिति तदा प्रत्ययः । यद्वाऽनिर्धारितधर्मविशेषनिबन्धना कुत्सा प्रवृत्तिनिमित्तं ब्रह्महत्यादिनिबन्धनायास्तस्यां प्रत्ययः यथा प्रकृष्टतम इति प्रकर्षस्य प्रकर्षे तमप् । यद्वा नियमेन कुत्सासम्बन्धं प्रतिपादयितुं प्रवृत्तिनिमित्तकुत्सायामेव पुनः प्रत्ययः ।

किंच शब्दः स्वार्थजात्यादिविषयाभिधाग्रहविषयो भूत्वतरानपेक्ष एव तत्संबद्धं द्रव्यमाह, ततः संख्याद्यपेक्षयाऽन्तरङ्गत्वात्तद्गतं लिङ्गमाहातएव तद्बोधकं टाबादि पूर्वं, ततः क्रियापेक्षकारकापेक्षयान्तरङ्गत्वात् संख्यामाह, ततः कारकमित्येवं कल्पितक्रमेण शास्त्रप्रक्रियानिर्वाहः । एवंचैतत्सकलबोधकविभक्त्यन्तस्यैव प्रियकुत्सितादौ वृत्तिरित्युपस्थितलिङ्गादिगततयापि कुत्सादिबोधनं प्रत्ययेन । तत्र स्वार्थकुत्सा यथा—पण्डितक इति । द्रव्यकुत्सा यथा—शुक्लकं रूपमित्यादौ । लिङ्गकुत्सा यथा—

प्राप्य गाण्डीवधन्वानं विद्धि कौरवकान् स्त्रियः ।

---

परिभाषाभ्यामिति भावः । सिद्धान्तमाहोपेति । अश्वक इति च्छेदः । धर्मान्तरं गत्यादि तदभावे आह यद्वेति । ततस्तस्या अभावादाह

इति। संख्यायां यथा—पुत्रकः शतं, शतभरणे यद् दुःखं तदेकस्यैव भरणे इति एकत्वसंख्याकृतसंज्ञेति दिक्।

अश्व इवाश्वकः इवे प्रतिकृताविति कन्। उपमानाश्वाभिन्न इति बोधः। पूज्यप्रतिमाभिन्ननटध्वजप्रतिमासु शिवाभेदबुद्धिरेव नत्विवार्थप्रतीतिरिति न तत्र प्रत्ययः। स्पष्टं चेदं रसनिरूपणे प्रकाशे।

काकतालीयं काक इव तालमिवेति विग्रहे समासाच्च तद्विषयादिति च्छः, तत्प्रामाण्यादिवार्थेऽपि सुप्सुपेति समासः। तत्र पूर्वपदमुपमानकाकागमनपरम्। उत्तरपदं चोक्तपूर्वपदार्थसमानाधिकरणोपमानतालपतनपरम्। समुदायश्चोपमेयपरः। एवंचोपमानकाकागमनसामानाधिकरणोपमानतालपतनाभिन्नं देवदत्तागमनसमानाधिकरणं चोरपतनमिति बोधः। तत्रानुपमेयबोधे तत्तदुपमेयवाचकसमभिव्याहारस्तन्त्रम्। ततस्तद्धिते समासार्थोपमानप्रयोज्योपमानभूततालकृतकाकवधाभिन्नः समासार्थोपमेयप्रयोज्यश्चोरकृतदे-

---

दिगिति शिवाभेदेति भ्रमात्मिकेत्यर्थः। स्पष्टमिति तत्र शंककमतप्रस्तावे चित्रनटविषये तादृशी बुद्धिरिति प्रकाशकारैरुक्तं। यत्तु तत्र तद्बुद्धेः भ्रमत्वाभावोऽप्युक्तः सत्वनन्तरावतीर्णबाधाया एव तत्र भ्रमत्वेन विवक्षणान्न विरुद्धः।

इवार्थे च्छोनेति भावः। इवार्थविषयसर्वावयवकात्समासादिवार्थे छ इति सूत्रार्थः। इवे प्रतिकृताविस्याधिकारस्थत्वात् एकार्थीभावलभ्यमाह तत्रेत्यादिना। तत्र समासे। पर इति सामानाधिकरण्यमभ्यर्थायातं तथा सति समासबोधमाहैवंचोपेति तदुपमेयलाभे बीजमाह तत्तदिति। तत इति समासोत्तरं। समासात्काकतालमिवेति विग्रहे उक्तसूत्रेण च्छे सतीत्यर्थः।

कदशाबध इति बोधः। एतेन परस्परसंबन्धाभावेना-सामर्थ्याद् वृत्तिद्वयमपि दुर्लभमित्यपास्तम्।

यत्तु काकागमनसदृशसमानाधिकरणकाकागमन-समानाधिकरणतालपतनसदृशप्रयोज्यतालकृतकाक-मरणसदृशं देवदत्तमरणमिति बोध इति, तत्तु निपा-तवादे दूषितम्। उपमानोपमेयभावश्चाकस्मादुपनत-त्वेन उपमेयवाचकतच्छब्दपदसमभिव्याहारेण प्रयोज्यत-या कदाचित्काकमरणस्य कदाचित्काककृतोपभोगस्य भानम्। उपमानतावच्छेदकरूपेण बोधकाभावाच्च छ-प्रत्ययोपमायामुपमानलोप इत्यालंकारिकाः।

पञ्चकृत्वो भुङ्क्ते। पञ्चशब्दः पञ्चत्वसंख्योत्पत्तिकपरः तस्य च क्रियायामन्वयः संख्यायाः क्रियाभ्यावृत्तिग-णने कृत्वसुजिति सूत्रात्। तत्राभ्यावृत्तिः पुनः पुन-र्जन्म। पञ्चसंख्योत्पत्तिका भुजिक्रियेति बोधः। प्रत्य-यस्तु स्वार्थे। कर्तृबहुत्वे तु पञ्चकृत्वो भुञ्जते इति बहुव-चनमपि। त्रिरावृत्ता दशेत्यादावावृत्तिक्रियाजन्मग-णने एव सुच्। यत्र क्रिया न श्रूयते तत्र भवतिक्रि-याध्याहारो बोध्यः। पञ्चकृत्वः पाचकः पक्त इत्या-दीष्टमेव।

---

आलंकारिकोक्तं दूषयति यत्त्विति। साधारणधर्ममादायोपेति नाय-मेवाख्यार्थः इत्याहोपेति। प्रयोज्येति काकतालसमागमप्रयोज्यत्वेने-त्यर्थः। स्वार्थे स्वार्थे तस्य पञ्चशब्दस्य। क्रियायां तत्रैव। सूत्रात् तत्स्वर-सात्। यत्र पञ्चकृत्वो दण्डीत्यादौ।

यत्तु केचित् पञ्चकृत्वः पाचकः पक्त इत्यादि न पदार्थैकदेशत्वेन क्रियायास्तत्रान्वयासम्भवात् क्रियाया एवाभ्यावृत्तिसम्भवेन ताव-तैव क्रियालाभे सूत्रे क्रियापदेन प्रधानक्रियाया एव ग्रहणाच्चेति

कृत्यल्युट्खलर्थानान्तथाऽन्यकृतामपि ।
रूढिनिष्ठा घञादीनां धातुः साध्यस्य वाचकः ॥
इति हर्युक्तेः ।

अत्र हेलाराजः कृत्यादियोगे कृत्वसुजादयो भवन्त्येवेत्याह । कृत्येत्यादि क्तो नपुंसकविषयः । रूढिशब्दास्तात्कालिकाः । घञादयः भावकर्मादिविहिताः आदिना तुजादयः। द्विः शयितव्यं, द्विस्सुकरो, द्विर्हसितं, द्विर्देवरावान्, द्विः कर्त्ता, द्विः पाको, द्विर्भुक्ता भव इत्युदाहरणानीति । अतएव द्विः प्रयोगो द्विर्वचनेऽपि द्विर्बद्धं सुबद्धं भवतीत्यादि सङ्गच्छते । अतिप्रसङ्गस्त्वनभिधानाद्वारणीयः ।

तत्प्रकृतवचने मयट् । प्रकृतशब्देनात्र प्रचुरं भावे ल्युट् तेन प्रचुरार्थबोधकात्प्रथमान्तात्स्वार्थे मयट् यथा घृतमयं वर्त्तते प्रचुरघृतमित्यर्थः । यद्वा अधिकरणे ल्युट् प्राचुर्यवदन्नादिबोधकादधिकरणेऽर्थे मयट् यथान्नमयो यज्ञः प्रचुरान्नवानित्यर्थः ।

आनन्दमयो ब्रह्म, चिन्मयं ब्रह्मेत्यादावनयेन मयट् प्राचुर्यन्तु तत्र निर्धर्मकत्वमेव व्यावहारिकमपरि-

---

तत्र कारकाणामिव तुमुनन्तादीनामपि व्यस्यापि गुणभूतक्रियान्वये साधुत्वस्येष्टत्वात्तदाह पञ्चेति । निष्ठेत्युक्तेराह क्त इति ब्राह्मणवसिष्ठन्यायेनेति भावः । अत एव नञ्प्रत्याख्येय । पदार्थ इति तुमुनादिस्तु क्रियातिरिक्तविषया तुमुन्सूत्रस्थभाष्य स्वरसात् । क्रियाग्रहणं तु स्पष्टार्थमिति भावः । यद्यपि प्रकृतशब्दो लोके प्रस्तुतवचनस्तथाप्यत्र व्याख्यानादाह प्रकृतेति । वचनशब्दे आह भावे इति ।

यत्तु आनन्दमयादिशब्देन प्राचुर्यार्थमयडन्तेन [illegible] इति आनन्दमयोऽभ्यासाद्विकारशब्दान्नेति चेन्न प्राचुर्यादित्यादिसूत्रे-

च्छेद्यत्वं च। अनन्तत्वप्रतिपादकश्रुतेः। न च प्राचुर्यस्य स्वसमानाधिकरणविरोध्यल्पतासापेक्षत्वेन दुःखानुवृत्तेरपि प्रतीत्यापत्तौ तस्य ब्रह्मत्वहानिरिति वाच्यम्। वैपुल्यरूपप्राचुर्यस्य तदपेक्षत्वेऽप्यपरिच्छेद्यत्वरूपस्य तस्य तदनपेक्षत्वात्। सत्यं ज्ञानमनन्तं ब्रह्मेति तैत्तिरीयश्रुतावनन्तत्वोक्तेः। प्राणमयादावप्ययमेव मयट्, विकाररूपार्थस्यान्नस्येनोपपत्त्यभावात्। तदवच्छिन्नत्वेन तद्विकारत्वस्यादृष्टत्वाद्, नहि घटमयाकाश इति भवति। किंचानन्दमये न ब्रह्मानन्दविकारत्वम्। तस्याविकारित्वात्। नापि वृत्त्यानन्दविकारत्वम्। तद्विषयाविज्ञानस्य तत आन्तरत्वेन तस्य विज्ञानमयान्तरत्वानुपपत्तेः। प्रव्रज्याहोमेऽन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्तामिति मन्त्रे शुद्धिस्तद्विषयावरण-

---

क्रमयुक्तं ब्रह्मण आनन्दरूपत्वेन तदधिकरणत्वाभावात्। आद्येऽपि तस्य निर्धर्मकत्वेन प्राचुर्याभावादिति तत्खण्डयति आनन्देत्यादित्याद्येआहनिरिति। एवेनान्यत्र प्रसिद्धनिरासः। अतएव सम्भवादन्यदप्याह व्यावेति। द्वितीयोऽपि राहोःशिर इत्यत्र षष्ठ्या इव मयटः साधुत्वं बोध्यं अपरिच्छेद्यत्वे मान माह सत्यमिति।

नन्वन्न रसमयादिविकारमय इत्त प्रायपाठादन्नापि विकारे मयट् विज्ञानमयान्नरसमययोरिवाद्यत्वेऽपि च्छांदसो, नित्यं वृद्धेत्ति सूत्रे नित्यमिति योगविभागाद्वेति वाच्यं आनन्दमयं प्रकृत्य सोऽकामयत बहु स्यां प्रजायेयेति सतपस्तप्त्वा इदं सर्वमसृजत यदिदं किञ्चेति तस्य सर्वस्रष्टृत्वश्रवणेन प्रायपाठबाधात्। अन्नमयादिष्व इव तदन्यस्यान्तरात्मनोऽश्रवणाच्च तदेतदभिप्रेत्याद्यं विहायाह प्राणेति। तत्प्राणादि तत्र यथा तथा वाऽस्तु। प्रकृते तु न सर्वथा तथेत्याह किञ्चेति तत्पदैरानन्दाः। नन्वेवं श्रुतिविरोधोऽतआह प्रव्रज्येति। नन्दमया मे शुध्यन्तामिति पाठः। नन्दमय आत्मा मे शुध्यतामिति पाठान्तरं। कृत

नाशरूपेति न विरोध इति व्याससूत्रवृत्तिकृतः।

एकादैकसर्थामिति प्रकाशप्रयोगेऽप्ययमेव मयट् एकपदप्रयोगात् स्वनिरूपणोक्तरीत्या च तत्राप्यपरिच्छेद्यत्वरूपप्राचुर्यस्यैव भानात्। ब्रह्मण आनन्दरूपत्वन्तु आनन्दो ब्रह्मेत्यादिश्रुतिबलात्। नच दुःख ज्ञानकाले सुखानुभवाभावेन सुखज्ञानयोर्भेदादेकस्यात्मन उभयरूपत्वं न युक्तं, श्रुतावानन्दशब्दस्तु दुःखाभावे गौणः। स्पष्टं चेदं सांख्यसूत्रे इति वाच्यम्। इष्टनाशस्थले सुखानिवृत्त्यैव तद्दुःखव्यवहारोपपत्तौ तस्यापि दुःखजनकत्वानापत्तेः। सर्वत्र तत्तदुपादेयवस्त्वभावकृतदुःखनिवृत्त्यैव तत्तद्वस्तुलाभे सुखव्यवहारोपपत्तौ सुखपदार्थविलयापत्तेश्च।

तस्मादिष्टनाशस्थले दुःख कार्यस्य सोरस्ताडनरोदनादिरूपस्योपलम्भेन चिरविरहिपीडितस्य कान्तालाभे विरहजदुःखनिवृत्तिवन्निरवधिसुखस्याप्यनुभवेन बलवदनिष्टनाशस्थले दुःखनिवृत्तेरिव सुखस्या-

---

इति। वस्तुतो व्याससूत्रे प्राचुर्यादित्यस्य मयडन्तानां प्राचुर्यादेकजातीयप्रयोगनिर्वाहायायमप्ययस्यन्तस्वार्थिकमयडन्तः प्रयुक्त इत्यर्थः। तत्प्रकृतेति सूत्रे तदिति योगविभागेनास्यंतस्वार्थिकस्यापि विधानमित्युपपादितं गुरुचरणैर्व्याससूत्रेन्दौ शेखरे च।

अयमपि ब्रह्मैव नजीव इति बोध्यं चस्त्वर्थे भानादितिपाठः। ननु तस्यानन्दरूपत्वे किं मानमत आह ब्रह्मण इति। आदिना सत्यं ज्ञानमानन्दमित्यादि उभयेति सुखज्ञानेत्यर्थः। स्पष्टमिति 'नैकस्यानन्दचिद्रूपत्वे द्वयोर्भेदात्' दुःखनिवृत्तेर्गौण, इति हि तत्सूत्रं। तत्र युक्तमित्यंत आद्यसूत्रार्थः। श्रुतावित्यादि द्वितीयसूत्रार्थः।

प्रतिबन्दीमाहेष्टेति तस्यापि इष्टनाशस्यापि तत्तद्वस्तुलाभे तावद्दुःखस्य निवृत्त्यैव सुखव्यवहारोपपत्तेः सर्वत्र सुखेत्याद्यन्वयः

प्यनुभवेन च लाघवात् दुःखनिवृत्तिसामग्रीत्वेन सुखप्राप्तिजनकता सुखनिवृत्तिसामग्रीत्वेन दुःखप्राप्तिजनकता वाच्या। एवंच तत्त्वज्ञानस्यापि दुः खनिवृत्तिसामग्रीत्वेन सुखप्राप्तिजनकता प्राप्ता तत्र मुक्तिकालेऽन्तः करणलयेन वृत्तिरूपकार्यसुखप्राप्त्यसंभवाद् आत्मसुखप्राप्तिरेव तथेति तस्य सुखरूपत्वसिद्धिः। तस्याः सामग्र्याः सुखजनकत्वमितिमतेऽप्यावरणभङ्गादिनिष्ठजन्यत्वस्य तत्रारोपान्न दोषः।

एतदेवाभिप्रेत्य चार्थे द्वन्द्व इति सूत्रे भाष्ये सुखप्रतिघातेन दुःखं दुःखप्रतिघातेन सुखमिति विप्रतिषिद्धावेतावित्युक्तम्। तेनाहि सुखप्रतिघातेनेत्यादितृतीयाबलात्सुखप्रतिबन्धिकाया स्तन्नाशिकायाश्च सामग्र्या दुःखजनकत्वं दुःखप्रतिबन्धिकायास्तन्नाशिकायाश्च सुखजनकत्वं स्पष्टमेवोक्तम्।

ननु दुःखांशस्य दुःखनिवृत्तिमात्रफलकतया विषभक्षणे प्रवृत्तिर्दृश्यते तद्भक्षणस्य दुःखनाशकत्वेऽपि सुखजनकत्वाभावेन व्यभिचारः स्पष्टंचेदं तथायुक्तमितिसूत्रे भाष्यकैयटयोरिति चेन्न। अतः परमहं सुखीत्यनुभवेन तत्राप्याभिमानिकसुखसत्त्वात्। अत-

सोरस्ताडनेति सोरस्ताडमिति प्रचुरः पाठः। अन्यदा रुचिरेति। अन्यदाह वलेति। तत्र तस्य तत्वप्राप्तौ सत्यां। तथाकार्यभूता। तस्य ब्रह्मणः। तस्याः। तत्त्वज्ञानरूपायाः। अस्या इतिपाठान्तरं। तत्र सुखे। तेनहि भाष्येण यतः कृत्वमिति सुखदुःखजनकसामग्र्योर्नियमेन दुःखसुखप्रतिबन्धकत्वं चेत्यपि बोध्यम्।

अन्यतात्पर्यकैरप्यर्थवादैर्वाच्यार्थवशतो देवताविग्रहादि बोध्यते इति बादरायणोक्तरीत्या शब्दसाधुत्वान्वाख्यानतात्पर्यकेणापि पत-

एव भारवहेऽन्यानि दुःखान्यनुनिशम्य विषभक्षणमेव ज्यायो मन्यते इत्युक्तम् । तत्र ज्याय इत्यस्य प्रशस्यतरमित्यर्थः । तत्त्वं च सुखसाधनत्वज्ञानादेव । एतेन भारोत्तीर्णस्याहं सुखीत्यादिव्यवहारो गौण इत्यपास्तम् ।

किञ्च दुःखाभावस्यात्मरूपत्वे दुःखज्ञानकाले तदभावज्ञानाभावादाद्यो दोषस्तवापि । दुःखज्ञानकाले आनन्दाननुभवस्तु कल्पितानन्दत्वांशे आवरणात् । नह्यस्माकम् निर्धर्मकतज्ज्ञानसम्भवः ।

किञ्च शृङ्गारकरुणादिरसानुभवकाले सुखानुभवसत्त्वात्तत्र जन्यसुखासम्भवाद् ब्रह्मसुखमेव भासत इति प्रकाशादौ स्पष्टम् । तथाच श्रुतिः । रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवतीति एवंच रसानुभवोऽपि ब्रह्मणः सुखरूपत्वे मानमत एव गीतायामुक्तम् ।

अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ।

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ॥

तत्सुखं सात्विकं प्रोक्तमात्मबुद्धिप्रसादजम् । इति ।

यत्र समाधौ भासमानसुखे तत्र सुखे रतौ दुःखनाशप्राप्त्युक्त्या तत्सुखस्य तदतिरिक्तत्वं स्पष्टमेवा-

---

ञ्जलिवाक्येन वाच्यार्थवशादुबोधितस्यार्थकार्यकारणभावस्यादः ञ्चितएव । एवञ्च श्रुत्यनुगृहीतपतञ्जलिवचनविरोधात्सांख्यस्मृतिर्हेयैवेति बोध्यम् ।

स्पष्टमिति आतश्च विषमोज्झितं यत्तद्भक्षयतीति हि सूत्रोक्तं अतः परं विषभक्षणोत्तरं । वस्तुतस्तदभावाद्दाहामीति तत्वञ्च प्रशस्ततरत्वं च एवेनान्यव्यवच्छेदः । एतेन सुखसत्वेनोक्तरीत्या । आद्यः आद्यसूत्रोक्तः दुरुद्धर इति शेषः । तस्यात्मरूपत्वाभावे तु

कम् । अत्र समाध्यभ्यासकाले सात्विकत्वम् सत्वाविर्भावप्राचुर्यत्वात् । तदेवाहात्मबुद्धिप्रसादज मिति प्रसादजाताभिव्यक्तिकमित्यर्थः ।

दीधितिकारोऽपि नित्यसुखाभिव्यक्तिर्मुक्तिः नच तत्र मानाभावः ।

आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितम् ।

इति श्रुते स्तत्वादित्याह ।

सार्वभौमोऽपि ।

सुखं नित्यानतिशयम् तत्साक्षात्कार एवच ।
मोक्षस्तेनोपपद्यन्ते श्रुतयोऽपि यथाश्रुताः ।
स्वप्रकाशसुखव्यक्तिरेव मुक्तिस्तु वस्तुतः ।
व्यापकम् सर्वजीवानामानन्दमत्र मैश्वरम् ।
रूपं श्रुतिबलादिष्टम् तत्साक्षात्कार एव च ।
तदभेदोऽपि जीवानामिष्ट एवेति दृश्यताम् ।

इति इत्यलम् ।

अकृष्णः कृष्णः सम्पद्यते तथा करोति कृष्णी-

---

द्वितीयसूत्रार्थासङ्गतिः स्पष्टैव ।

वस्तुतोऽसत्वादाह कल्पितेति । अत्र बीजमाह नहीति । तात्पर्यमाहेवञ्चेति । अपिः पूर्वसमुच्चये । स्पष्टं ततोऽप्रतीतेराह यत्रेत्यादि चो हेत्वर्थइत्याह तत्रेति । सत्वकृतत्वं न तत्वमित्याह सत्वेति । तस्याअन्यत्वादाह तदिति मोपि आहेत्यस्यानुषङ्गः । उक्तमेव विशदयति स्वेति । किञ्च दुःखध्वंसस्यैव मोक्षत्वे तत्काले दुःखध्वंसवत्सुखध्वंसस्यापि सत्वेन तद्रूपतया तस्यानुपादेयतापत्तिरित्याद्यन्यत्रस्पष्टं तदाह।लमिति ।

वार्तिके तद्भाव इति करणतृतीयान्ततच्छब्देन समासः । अभूतपदेन कर्तृषष्ठ्यन्तेन सः । अभूतत्वं च प्रत्यासत्या तद्भावशब्दघटकतच्छब्दार्थकरणकत्वेनैव ग्राह्यं यत्रञ्च येनैव रूपेण प्रागभूतं तेन

करोति। यत्र प्रकृतिरेव विकारसादृश्यमापद्यमाना विवक्ष्यते तत्र च्विप्रत्ययः। कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विरभूततद्भाव इति वक्तव्यमिति सूत्रवार्त्तिकतद्भाष्यबलात्। अतथाभूतस्य तथाभावे क्रादियोगे संपद्यकर्तृत्वेन विवक्षितार्थवाचकाच्च्विरिति तदर्थः। विकारवाचकात्स्वसादृश्येन प्रकृतौ वर्त्तमानादयं प्रत्ययः करोत्यादिक्रियाकारकत्वम् प्रकृतिभूतस्यैव विकारसादृश्यं प्राप्तस्येति बोध्यम्। अतएव सङ्घीभवन्ति ब्राह्मणाः स्वद्भवति देवदत्त इत्यादौ वचनपुरुषव्यवस्था। तदुक्तं हरिणा।

पूर्वावस्थामविजहत् संस्पृशद्धर्ममुत्तरम्।
संमूर्छित इवार्थात्मा जायमानोऽभिधीयते॥

पूर्वावस्था कारणावस्था। उत्तरं धर्मम् कार्यावस्थाम्। एवंचावस्थाद्वयावच्छिन्नमेकं वस्तु पूर्वावस्थानुगुण्येनोत्तरावस्थाप्राप्त्युन्मुखं विकाररूपमिव प्राप्तम् जायते इत्यभिधीयते असङ्घः सङ्घो भवतीत्यादौ। अतएव प्रकृतिविकृत्योः सामानाधिकरण्यम्। नन्वेवमुभयोः कर्तृत्वापत्तिः। अत उक्तम्—

सत्त्वापारतरः कश्चित्क्वचिद्धर्मः प्रतीयते।
संसृज्यन्ते च भावानां भेदवन्त्योऽपि शक्तयः॥ इति

---

रूपेण तस्य भावोऽभूततद्भाव इति फलितं तदाहातथेति। पर्यवसितमाह विकारेति। ततो लब्धमेव विशेषमाह करोत्यादीति अतएव तस्यैव तत्वादेव।

उत्तरार्धार्थमाह पूर्वेत्यादि। वस्तुतोऽतत्वादाहेवेति। अतएव एकस्यावस्थाद्वययुक्तत्वादेव। इत्यादौ तयस्तामेत्यन्वयः। एवमेकस्यावस्थाद्वययुक्तत्वं। उक्तं तेनैव। क्वचिदिति सूचितमाह लक्ष्येति। सादि-

लक्ष्यानुसाराद्वाक्ये विकृतेरेव साक्षात्कर्तृत्वं वृत्तौ तदीयलौकिके च प्रकृतेरेव साक्षात्कर्तृत्वम्। अत्वं त्वं सम्पद्यते इत्यर्थे त्वद्भवतीत्येव भवितव्यमिति युष्मद्युपपद इति सूत्रभाष्योक्तेः। अयमेव प्रकर्षस्तत्रोक्तः संसर्गः कर्तृशक्त्योरेकवृत्तित्वरूपः। अतएवात्वं त्वं भवति त्वद्भवतीत्यादौ प्रकृतेः कर्तृत्वात् प्रथमपुरुषः। त्वमत्वं भवसीत्यर्थे त्वद्भवसीत्येव। वाक्ये तु साक्षाद्विकारस्यैव, सुवर्णपिण्डः खदिराङ्गारसदृशे कुण्डले भवत इति परम्पशायां भाष्यप्रयोगे विकृतेः कर्तृत्वदर्शनात्।

किञ्च च्व्यन्ते तद्वाक्ये च प्रकृतिरूपमनारोपितं विकाररूपं त्वारोपितम्। आरोपितानारोपितसमभिव्याहारेऽनारोपितस्यैव कर्तृत्वप्रतीतिः। आरोपितस्यावस्तुत्वेन क्रियाजनकत्वरूपकारकत्वाभावात्। द्वयोरपि वस्तुत्वे तु विकारस्यैव मुख्यतया जायमानत्वादिना तस्यैव साक्षात्कर्तृत्वम् प्रकृतेस्तु तदभेदेन तद्द्वारा कथंचिदिति न कदापि सुवर्णपिण्डाश्रया विभक्तिरिति बोध्यम्। एवञ्च विकृतेः प्रकृतेर्वापि—

वाचकः प्रकृतेः संख्यां गृह्णाति विकृतेर्न तु।

इति प्राचीनप्रवादः च्विप्रत्ययविषयकः।

---

त्यनेन परंपरया तस्या अपीति सूचितं। द्वितीयमानमाहात्म्यमिति तत्येति स व्यापारतर इत्यत्रेत्यर्थः। संसृज्यन्ते इत्यस्यार्थमाह संसर्ग इति। प्रथमेति उभयत्रेति भावः। आद्ये विशदयाने कर्तृत्वमितिशेषः

युक्तिसिद्धोऽप्ययमर्थ इत्याह किञ्चेति। तदिति लौकिक इत्यर्थः। वाक्ये आह द्वयोरपीति। नकदापीति। एतेनैको वृक्षः पञ्च नौका भवन्तीत्येव प्रयोग इति सूचितं। स तदुञ्चकुचौ भवान्नांत्तनैषधस्य प्रमाद

एवं च्विप्रत्ययान्ते सादृश्यमूलाभेदाध्यवसायेन विकाराभेदमापन्नप्रकृत्तेः कर्तृत्वेनाभयोरप्युक्तत्वम्। महद्भूता ब्राह्मणीत्यादौ सामानाधिकरण्यं गौणत्वं चेति बोध्यम्। एवञ्च कारणीभूतो दण्ड इत्यादौ च्वि-प्रत्ययोऽसाधुरेव। सादृश्यमूलकविकाराभेदप्रतीतावेव तत्प्रवृत्तेः। ध्वनितं चेदमोत्सूत्रे भाष्ये इत्यन्यत्र निरूपितम्। ब्रह्मभवन्तीत्यादिप्रयोगे छान्दसत्वादत्यन्तस्वार्थिकाश्च्विवरिति बोध्यम्।

इति तद्धिताः।

---

एव। अनुशासनत्वनिरासायाह प्राचीनेति। अन्यत्रास्य योजनं तु उक्तभाष्यविरोधेन प्रामादिकं। एतेन पञ्चनौका भवतीत्यपीत्यपास्तं।

सादृश्यमूलेति बहुव्रीहिः। सामानाधिकरण्येन पुंवत्वं गौणत्वेनात्वाभावः अमहान्महान्भवतीत्यादौ सांततिदीर्घस्तु भवत्येव तत्रातन्न्यायाप्रवृत्ते रन्यत्र स्पष्टत्वात्। गोमतीभूतेत्यत्र तु भाष्यप्रयोगादेव न पुंवत्वं। एवंचेत्यस्यार्थमाह सादृश्येति। नचाकारणत्वाद्यध्यवसायपूर्वक कारणत्वादिबोधात्स इति वाच्यं एवंहि अगोत्वारोपपूर्वकगोत्वबुद्ध्याच्वौ गोऽभवदित्यादौ गौणत्वाभावेनोदिति प्राप्तप्रगृह्यत्वस्य निषेधाय च्व्यन्तेप्रतिषेधवचनस्यावश्यकत्वेन तत्प्रत्याख्यानपरोत्सूत्रस्थभाष्यविरोधापत्तेः। तत्प्रामाण्येनानारोपितातथाभूते आरोपित्तद्भावसंपत्तावेवास्य प्रत्ययस्य स्वीकारात्। तेन योगि प्रसादेनामहतिमुख्यमहत्वोत्पत्तौ नच्विस्तदाह ध्वनितमिति अन्यत्रोद्योतादौ अतएवाह ब्रह्मेति।

इति तद्धितार्थविवरणं।

---

## अथ वीप्सा

वृक्षं वृक्षं सिञ्चति । अत्र वीप्सायामिच्छन्त्यम् । अत्र स्वप्रकृत्यर्थ निष्ठं व्याप्यत्वं तन्निरूपितं व्यापकत्वं च शाब्दबोधविषयः । व्याप्तिं बुबोधयिषोरिदं वाक्यमित्यवगमाद्वीप्सा प्रयोक्तृधर्म एव । व्यापकत्वं च बहुशः प्राग्दर्शितदिशा निर्वाह्यम् । तच्च द्विर्वचनं न पृथक्संख्यायुक्तानां नानाद्रव्याणां तदा बुद्धिस्थानां प्रत्येकरूपेण गुणक्रियाद्रव्यैर्युगपदन्वयो भवति तत्रैव व्यापकत्वप्रतीतिः । पृथक्संख्यायुक्तानामित्यनेन ब्राह्मणो न हन्तव्य इत्यादौ जात्यभिप्रायेण प्रयोगो न द्वित्वमेकशेषविषये च न ।

अतएव गर्गाः शतम् दण्ड्यन्तामित्यादौ न प्रत्येकं शतं दण्डनम् । तथासति वीप्साविषयापहारः स्यात् प्रत्येकं शतदण्डने संख्यान्तरोपजननाच्छतसंख्याश्रवणं च विरुद्धं स्यात् । वृषलैर्न प्रवेष्टव्यमित्यादौ प्रत्येकम् समुदाये च वाक्यसमाप्तिः ब्राह्मणैः प्रवेष्टव्यमित्यादौ च । ब्राह्मणा भोज्यन्तामित्यादौ भोजनस्य तृप्तिफलकत्वादन्नरूपत्वाच्च प्रत्येकमेव समाप्तिर्न समुदायेऽसम्भवात् । युगपद्ग्रहणाच्च क्रमविवक्षायां न, तत्रानेकप्रयोगस्यैव दर्शनात् । तदा

---

## अथ वीप्सा

स्वं सुप् अत्र वीजमाह तत्रैवेति । नेति पुनः स्पष्टार्थः । अतएव एकशेषविषये तदभावादेव चो व्युत्क्रमे स्याच्च तृप्तीति बहुः चस्त्वर्थे तत्र क्रमविवक्षायां व्यापकत्वंचेति वीप्साद्विर्वचनस्य सुबन्त एव जायमानत्वात्तद्योत्यव्यापकत्वंचेत्यर्थः । तदर्थस्य सुपप्रकृत्यर्थस्य

बुद्धिस्थानामित्यनेन जगतीतलवर्त्तिसर्ववृक्षमेघनाभावेऽपि तथा प्रयोगः । प्रकरणादेः संकोचकस्य सत्वात् । यत्र तु सङ्कोचकं नास्ति तत्रासङ्कोच इष्ट एव जातो जातो निधनमुपैतीति यथा ।

व्यापकत्वं च तदर्थस्य येन संबन्धेनेतरान्वयस्तत्संबन्धे बुध्यते, सम्बन्धश्च विभक्त्यर्थ एवैवं च तादृशव्यापकत्वविशिष्टस्य संसर्गतया भानमत्रैव द्विर्वचनंतात्पर्यग्राहकमेवंच ब्राह्मणाय शतं देहीत्यादौ बुद्धिस्थयावद्ब्राह्मणोद्देश्यकं शतकर्मकं दानमिति बोधः ब्राह्मणव्यापकं शतदानमिति तु फलति । संबन्धे एकसंबन्धिव्यापकत्वबोधस्यापरसंबन्धिनि तद्व्यापकत्वबोधफलकत्वात् । एवमन्यत्राप्यूह्यम् ।

यद्यप्युद्देश्यविधेयान्यतरस्य वीप्सया प्रयोगेणोभयत्रापि व्यापकत्वबोधो भवत्येव तथापि क्वचित्स्फुटप्रतीतये क्वचिदावश्यकत्वद्योतनायोभयत्रापि द्वित्वं यथा ब्राह्मणाय ब्राह्मणाय शतं शतं देहीत्यादौ । एकैकस्य शतं शतमित्यादौ च । यत्र यत्र धूमस्तत्र वह्निरित्यादौ यद्व्यापकाधिकरणत्ववत्का धूमसत्ता तद्व्यापकाधिकरणतावत्का वह्निधूमयोर्व्याप्यव्यापकता फल-

---

त्येवेति शेषः । तादृशेति प्रकृत्यर्थ निष्ठव्याप्यतानिरूपितेत्यर्थः । स्पष्टकर्मत्वादिः । यावदिति बुद्धिस्थब्राह्मणनिष्ठव्याप्यतानिरूपितव्यापकतावदुद्देशतावत्ब्राह्मणोद्देश्यकमित्यर्थः । बुद्धिस्थ ब्राह्मणव्यापकत्वम् तु बुद्धिस्थब्राह्मणत्ववन्निष्ठात्यंताभावप्रतियोगितानवच्छेदकधर्मवत्वम् ।

ब्राह्मणेभ्यः शतंशतंदेहीत्यादौ ब्राह्मणोदेश्यकम् बुद्धिशतव्यापककर्मतावच्छतकर्मकं दानमिति बोधस्तदाहैवमिति वक्केति । णत्ववद्यद्-

११

न्ति । गजे गजे न मौक्तिकमित्यादौ गजव्यापकाधिकरण-तावत्कमौक्तिकसत्ताभाव इति बोधः । सर्वाधिकरण-तायां गजव्यापकत्वरूपविशेषणाभावमादाय पर्यव-स्यति। शशे शशे न शृङ्गमित्यत्र तादृशाऽभावस्य वि-शेष्याभावप्रयुक्तस्य बोधः । राज्ञो राज्ञः पुरुष इत्या-दौ बुद्धिस्थयावद्राजस्वामिकः पुरुष इति बोधः । ग्रा-मो ग्रामो रमणीय इत्यादौ विशेष्यविशेषणभावस्यैव-संसर्गतया रमणीयनिष्ठविशेषणतानिरूपितग्रामव्याप-कविशेष्यतावान् ग्राम इति बोधः । अत्र वने रमणीयो रमणीयः प्लक्ष इत्यादौ रमणीयव्यापकविशेषणतानिरू-पितविशेष्यतावान् प्लक्ष इति बोधः । यो यो धूमवा-न्सोऽग्निमानित्यत्र यच्छब्दो धूमवानित्यर्थक एव यथाऽ-यं चन्द्र इत्यतिशयोक्ताविदं पदार्थश्चन्द्र एवेति दर्पणे प्रकाशे उक्तम् । यच्छब्दप्रयोगस्तु लघुभूते द्विरुक्तप्र-योगाय। रमणीयो रमणीय इत्यत्रेव बोधः। धूमवन्नो-र्व्याप्यव्यापकभावस्तु फलति ।

---

धिकरणिकेत्यर्थः । एवमग्रेऽपि तावत्केति तावद्गजाधिकरणकमौक्ति-केत्यर्थः । तत्र बोधः तादृशेति शशव्यापकाधिकरणकाधिकरणता-वच्छशाधिकरणकशृंगसत्ताभावस्येत्यर्थः । राज्ञेति बुद्धिस्थराज-व्यापकस्वामितावद्राजेत्यर्थः ।

यत्र विभक्तेः प्रातिपदिकार्थमात्रे विधानान्नार्थवत्त्वं तत्राह ग्रामो ग्राम इति। लघीति तत्रैक व्यापकत्वबोधादितिशेषः । अस्यादृष्टचर-त्वाभावायाह यथेति रूपकादावनथार्त्वादाहातीति । नन्वेवं किमर्थ-मस्य प्रयोगोऽत आहयच्छब्देति रमेति धूमवद्व्यापकविशेषणतानिरू-पितविशेष्यतावानग्निमानितीत्यर्थः।

यत्तु अत्र धूमव्यापकत्वस्य वन्हौ बोधः धूमवान् धूमव्यापकवह्निमानिति। तन्न। अनेकव्युत्पत्तिविरोधात्। जातो जातो निधनमुपैतीत्यादौ जातव्यापकाविशेषणतावत्कर्तृका निधनप्राप्तिरिति बोधः। क्वचित्तु व्याप्यव्यापकभावसम्बन्ध एव विभक्त्यर्थः यथा वृक्षं वृक्षं प्रति सिंचति इत्यादौ। अत्र द्विर्वचनप्रतिशब्दौ तात्पर्यग्राहकौ। सर्वान् घटान्पश्येत्यादौ न द्वित्वं कार्त्स्न्यस्य सर्वशब्देनोक्तत्वात्। वृक्षं वृक्षमित्यादौ बहुवचनत्वं न प्रत्येकनिष्ठैकत्वस्यैव तत्र भानात्। ब्राह्मणाय ब्राह्मणाय शतं देहीत्यादौ च प्रत्येकं शतदानप्रतीतिरेकशेषे तु नैवम्। ब्राह्मणेभ्यः शतं देहीत्युक्ते नियमेन प्रत्येकं शतदानाप्रतीतेः। यदा तु परिगृहीतद्वित्वानां वीप्सा तदा ब्राह्मणौ ब्राह्मणौ पूजय, द्वाभ्यां द्वाभ्यां त्रिभ्यस्त्रिभ्य इत्यादि भवत्येव।

अत्रेदं बोध्यम्। यत्र यत्पदे वीप्सा तत्र तत्पदे न

---

क्रमविवक्षया आह धूमेति। यत्त्विति यच्छब्दस्य धूमवत्पदार्थकत्वेऽपि द्विर्वचनद्योत्यव्यापकत्वस्य समभिव्याहृतपदार्थेऽन्वयो व्युत्पत्त्यंतर कल्पनादिति भावः। अनेकेति प्रागुक्तेत्यर्थः। धूमादेर्द्विधान्वयापेक्षयोक्तस्यैव न्याय्यत्वाच्च। क्वचित्तु कर्मप्रवचनीययोगे। अत्रेति स्वप्रकृत्यर्थगतं व्याप्यत्वं द्विर्वचनद्योत्यमिति केचित्। व्यति लुनते इतिवदित्यन्ये। भानादिति अतएव प्रत्येकं वृक्षव्यापककर्मताप्रतीतिः। अन्यत्रापि फलभेदमाह ब्राह्मेति कादाचित्कप्रतीतेराह नियमेनेति तथाच तत्रानियमो ऽत्र तु नियम इति भेदः। बोध्यं इति तादृशयत्पदसमभिव्याहारादितिशेषः। अत्रमानमाह कारकमिति एवं सत्यन्यभाष्यविरोधं परिहरति व्यंजेति। अतएव सा सा क्रियेत्यादिसङ्गतिः।

सप्तमे काव्यप्रदीपोक्तिं खण्डयति यत्विति। नात्र पक्षतरत्रापि। प·

सा। यत्पदे द्वित्वेन यत्पदार्थसंसर्गे यच्छब्दार्थता-वच्छेदकव्यापकत्वे बोधिते विनापि द्वित्वं तत्पदार्थ-संसर्गे तच्छब्दार्थतावच्छेदकव्यापकत्वबोधात्।

कारकं चेद्विजानीयाद्यां यां मन्येत सा भवेत।'

इत्यकथितं चेति सूत्रभाष्ये प्रयोगात्। व्यञ्जना-नि यस्य यस्याचः कार्यमुच्यते तं तं भजन्त इत्यजाद्-रिति सूत्रस्थभाष्यप्रयोगात्स्पष्टत्वाय क्वचित्तत्पदेऽपि वीप्सा द्वित्वम्।

यत्तु नात्र द्विर्वचनं किंतु भिन्नौ यत्तच्छब्दौ भिन्न-रूपेणैव बुद्धिस्थपदार्थपरामर्शकाविति। तन्न। बह्वर्थप्र-तिपिपादयिषायां बहुयच्छब्दप्रयोगापत्तेः। द्वाभ्यामेव सर्वप्रतीतिरिति चेदेकेनैव सर्वप्रतीत्युपपत्तौ द्वि-तीयप्रयोगस्यापि वैयर्थ्यापत्तेरित्यलम्।

इति वीप्सा।

---

दार्थेति तत्तदित्यादिः। बह्वर्थेति एवांमत्यादितात्पर्यवशात् तस्माद्वी-प्साद्विर्वचनमेव तत्। तिङन्तादिद्वित्वे बोधप्रक्रियाऽन्यत्र स्पष्टा। किञ्च प्रकृतद्विर्वचने एकत्वद्वित्वादि व्यवस्थितमेव प्रतीयते पदार्थकार्त्स्न्यं-चातएव बुद्धिविषयाणां बहूनां मध्ये कतिपयानामेव शोभनत्वे प्रति-पाद्ये न द्वित्वं यथाऽस्मिन्वने पञ्चषाः शोभना इतीति बोध्यं तदाहे-त्यलमिति।

इति वीप्साविवृतिः।



एवं प्रकृतिप्रत्ययाद्यर्थबोधनद्वारा शास्त्रं विशिष्टस्य पदपदार्थस्य बोधनद्वारा वाक्यार्थस्य बोधकं सल्लोके व्यवहारोपयोगि। यद्यपि शास्त्रज्ञानं विना प्रकारान्तरेणापि पदार्थज्ञानं लोके दृश्यते तथापि शास्त्रीयप्रकृतिप्रत्ययव्युत्पादनपूर्वकं विजातीयतज्ज्ञानपूर्वकप्रयोगस्य चित्तशुद्धिद्वारापवर्गसंपादकत्वेन शास्त्रज्ञानस्यावश्यकत्वात्। तदुक्तं हरिणा।

तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्। इति।

एवं लघुनोपायेन सर्वशब्दप्रतिपत्तौ च शास्त्रस्योपयोगो बोध्य इति शिवम्।

अधीत्य फणिभाष्याब्धिं सुधीन्द्रहरिदीक्षितात्।
न्यायतन्त्रं रामरामाद्वादिरक्षोघ्नरामतः॥
याचकानां कल्पतरोररिकक्षहुताशनात्।
शृङ्गबेरपुराधीशाद्रामतो लब्धजीविकः॥ २॥
सर्वतन्त्रार्थतत्त्वज्ञः सर्वत्र च निबन्धकृत्।
वैयाकरणनागेशः स्फोटायनऋषेर्मतम्॥

---

उपक्रमोपसंहारयोरैक्याय ग्रंथमुपसंहरति एवमिति उक्तप्रकारेणेत्यर्थः। आदिना आदेशादि तेषां तदर्थानां चेत्यर्थः। एवमग्रेऽपि वाक्यार्थस्येति पाठः तत् शास्त्रं फलांतरमप्याहैवमिति। उक्तप्रकारेणेत्यर्थः कीर्त्यै आहाधीत्येति अस्योक्तवानित्यत्रान्वयोऽग्रेऽनुषंगश्च पंचम्या नियमपूर्वकतत्स्वीकारः सूचितः। रामरामात् रामरामभट्टाचार्यात्॥ तत्र रूपकं वादीति। कक्षं तृणं। रामतः रामसिंहात्। उमया सहितः। अस्य ग्रन्थकर्तुः। पण्डिते सति। पण्डितैरिति पाठांतरं अत्राद्यो युक्तः द्वयत्वेन स्वस्य, पयो धित्वेनशास्त्रस्य, रामत्वेनरामस्याध्यासः। नापुत्रस्य लोकोस्तीत्याद्विश्रुत्यगोचरत्वमाह। शब्देन्दुशेखरमिति। स्वमतौ पत्नीत्वं। तौ शिवाविति शिवम्।

परिष्कृत्योक्तवांस्तेन प्रीयतामुमया शिवः ॥ ३ ॥
दृढस्तर्केऽस्य नाभ्यास इति चिन्त्यं न पण्डितैः ।
दृषदोऽपि हि सन्तीर्णाः पयोधौ रामयोगतः ॥ ४ ॥
शब्देन्दुशेखरं पुत्रं मञ्जूषां चैव कन्यकाम् ।
स्वमती सम्यगुत्पाद्य शिवयोरर्पितौ मया ॥ ५ ॥

इति श्रीवैयाकरणसिद्धान्तमञ्जूषाख्ये
स्फोटवादः समाप्तः ॥

---

द्विसार(१)वसुक्ष्मा करसंमितवत्सरे
नलाख्ये ज्ये ष्ठमासे च वृषस्थे च दिवाकरे ॥ १ ॥
कृष्णपक्षे दर्शतिथौ रोहिणीधृतिसंयुजि ।
इंदुवारे घस्रशेषे कलावैपूर्त्तिमागता ॥ २ ॥

इति श्रीमत्पायगुंडोपाख्यवैजनाथविरचिता मंजूषा
विवृत्तिः कला परिपूर्णा ॥

---

(१) अत्र यथावत्पाठस्य मूलपुस्तकेऽनुपलम्भाद्यथास्थित एव पाठोऽवस्थापितः । वामगणनया नलाख्यसंवत्सराद्धा नियतसंवत्सरसंख्योहितव्या ।

